R[illegible]INT FROM THE PAN[illegible]T.

# व्याकरणदीपिका

## पाणिनीयसूत्रवृत्तिः

श्रीपण्डितवरवैद्यनाथभट्टविश्वरूपा-
परनामधेयेन श्रोरम्भट्टेन विरचिता

काशीस्थ(हिन्दू कालेज)रणवीरसंस्कृतपाठशालीय-
व्याकरणाध्यापकेन व्याकरणाचार्योपाधिकेन
गणपतिशास्त्रिणा संशोधिता ।

काश्याम् ।

मेडिकल हाल नामकमुद्रालये प्रकाशितम् ।

———:o:o:———

# VAYÁKARANA DÍPIKÁ

## PÁṆIṆÍSÚTRAVRITTI

BY

**ORAMBHATTA**

EDITED BY

VYÁKARANÁCHÁRYA

Pandit Ganpati Shástri Mokate, Professor,
Central Hindu College, Benares.



Printed by Ambica Charan Chakravarti at the Mahamandal
Shastra Prakashak Samiti Press Ld., and cover printed
and published by BHAGAVATI PRASAD B. A.,
at the Medical Hall Press, Benares,
for proprietors.,

E. J. LAZARUS & CO.
Medical Hall Press. Benares.

[illegible]] 1916. [Price Rs. [illegible].

# भूमिका।

इह खलु यत्किमपि गीर्वाणवाणीमयं न्याय-
वैशेषिकादिशास्त्रमधिजिगांसवो जना आदौ
व्याकरणशास्त्रमेव सर्वशास्त्रोपकारिकमिति मन्वा-
ना इन्द्रचन्द्राद्यनेकविद्वत्तमप्रणीतेषु व्याकरण-
स्मृत्यन्तरेषु सत्स्वपि सकलव्याकरणतत्त्वसञ्चयाद्य-
नेकगुणगरिष्ठां समस्तशब्दशास्त्रातिशायिनीं लौ-
किकालौकिकोभयविधशब्दसाधुत्वप्रदर्शिकामष्टाभि-
रध्यायैरुपनिबद्धां पाणिनीयस्मृतिमेवाध्येतुं प्रव-
र्तमाना दृश्यन्त इति न तिरोहितं विदुषाम्।
तदस्याः पाणिनीयस्मृतेरतिदुरूहगभीरार्थप्रतिपा-
दकभाष्यकैयटादितः शब्दतत्त्वं निर्णेतुं न शक्नु-
वन्तीति पर्यालोचयद्भिः परमकारुणिकैर्महामहो-
पाध्यायभट्टोजीदीक्षितैः सूत्रपाठव्युत्क्रमेण तत्त-
त्प्रकरणान्युपनिबध्य पाणिनीयसूत्रव्याख्या सि-
द्धान्तकौमुदी नाम व्यरच्यत। सा च यद्यपि सम्प्रति
सकलगुणगरिष्ठतया सर्वस्मिन् भारते वर्षे पठनपाठ-
नैरतिप्रचुरप्रचारा चकास्तितमाम्। तथाप्यत्रोपनि-
बद्धानां फक्किकानामतिदुरूहतया न सा मन्दसा-
धारणानुपकरोतीत्यालोच्य सुकुमारमतीनां सुखेन
तदर्थावबोधाय महान्तमुपकारमादधाना सूत्रार्थत-
दुदाहरणप्रत्युदाहरणप्रदीपिका व्याकरणदीपिका

नाम सरला पाणिनीयसूत्रवृत्तिर्व्यरच्यत श्रीधोंडभट्ट विश्वरूपात्मजेन वैद्यनाथभट्टविश्वरूपापरनामधेयेन ओरम्भट्टेन । ग्रन्थकारश्चायं महाराष्ट्रकुलोत्पन्नः शेखरकारादर्वाचीन एव काशीनाथशास्त्रिसमानकालिक इति अभियुक्तव्यवहारादिना ज्ञायते। उक्तशास्त्रिणश्च महामहोपाध्यायबालशास्त्रिणां परमगुरवो वैयाकरणकेशरीति नाम्ना प्रथितयशसो राजकीयसंस्कृतपाठशालायामध्यापयन्तो वैक्रमे १६१६ सम्बत्सरे पाठशालां विससर्जुः वैक्रमे १६१६ संवत्सरे च परलोकं जग्मुरितिग्रन्थनिर्माणकालो द्विपञ्चाशतवर्षेभ्यः पराचीन वेति सुस्पष्टमेव ।

इयं चामुद्रिता सती न सर्वेषां जनानामुपकारं कुर्यादित्यालोच्य काशीस्थराजकीयसंस्कृतपाठशालीयसरस्वतीभवनाध्यक्षैः श्रीविद्वद्वरविन्ध्येश्वरीप्रसादपाण्डितैः प्रोत्साहितस्तेभ्य एवैकं नातिशुद्धपुस्तकं समासाद्य लाजरसयन्त्रालयाध्यक्षभगवतीप्रसादमहोदयैः प्रवर्तितोऽहं संशोध्य प्राकाशयमिमां वृत्तिम् । तदिमामवलोकयन्तु शास्त्ररसिकाः क्षाम्यन्तु च दृष्टिदोषेण सीसकाक्षरयोजकदोषेण वानुपलक्षितानशुद्धिदोषान् सफलयन्तु च मामकीनं परिश्रमं गुणैकपक्षपातिन इत्यभ्यर्थयते ।

मोकाटे इत्युपाह्व

गणपति शास्त्री ।

श्रीगणेशाय नमः ॥

# व्याकरणदीपिका ।

## श्रीरम्भट्टविरचिता ।

---

सर्वारम्भेषु यन्नित्यं श्रीशाद्यैरपि पूज्यते ।
गुरुरूपं गणेशाख्यं धाम तच्चिन्तयामहे ॥ १ ॥
भवानीशङ्करौ सर्वप्रपञ्चपितरौ नुमः ।
सदसद्रूपतातीतौ लीलाधृतसुविग्रहौ न सन
यत्कृपाङ्कुरहाभ्यामिति साक्षाच्छ्रुतेन निमित्तभावेन रे
न शक्ताः वनमपि रेफस्य प्रवर्त्तते । तदुक्तं भाष्ये ।

रट् । लण् । ञमङणनम् । झभञ् । घढधष् । जब-
गडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् ।

इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि । संज्ञाश्च लाघ-
वेन शास्त्रप्रवृत्त्यर्थाः । एषामन्त्या इतः । लण्सूत्रेऽकारश्च । तेनो-
रण्रपर इत्यत्र तेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा । प्रत्याहारे-
ष्वितां न ग्रहणम् । अनुनासिक इत्यादिनिर्देशात् । न ह्यत्र ककारे
परेऽच् कार्यं दृश्यते । आदिरन्त्येनेत्येतत्सूत्रेण कृताः संज्ञाः प्रत्या-
हारशब्देन व्यवह्रियन्ते । हकारादिष्वकार उच्चारणार्थः । संवृताका-
[illegible] विवृताकारादिभिः सावर्ण्यं तथा तुल्यास्यसूत्रेऽभिधा-
पर[illegible]योजनन्त [illegible] प्रयोक्तव्ये शक्तिवैक-
करोति कुमाल्यंतक
ज[illegible]

सङ्कराथे इत्यर्थे इति न तद्विरोधः । अग्ने इन्द्रेत्यादौ एकारावयव-मिकारमादाय सवर्णदीर्घः प्राप्नुयादिति वर्णैकदेशा वर्णग्रहणेन न गृह्यन्ते अतो नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्तव्यम् । विनामो नतिः । सा च नस्य णत्वम् । आनृधतुः । कृप्तः । मातृणाम् । हयवरडित्यत्र हकारोपदेशः अट्, अश्, हश्, इण्, ग्रहणेषु हकार-ग्रहणार्थः । अर्हेण । अड्व्यवायेऽइति णत्वम् । देवा हसन्ति । भोभगोऽइति रोर्यत्वम् । देवो हसति । हशिचेत्युत्वम् । लिलिहिढ्वे । लिलिहिध्वे । विभाषेट इति वा ढः । यद्यपि यप्रत्याहारे रेफस्यान्तःपातात् स्वर्नयति कुण्डं रथेनेत्यादौ अनुनासिकपरसवर्णौ प्राप्नुतः । भद्रह्रद इत्यादौ द्विर्वचनञ्च । तथापि रेफोष्मणां सवर्णा न सन्तीति स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थौ अनुनासिकपरसवर्णौ रे विषये न प्रवर्त्तेते । अचोरहाभ्यामिति साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य कार्यित्वबाधान्न द्विर्वचनमपि रेफस्य प्रवर्त्तते । तदुक्तं भाष्ये । "नेमौ रहौ कार्यिणौ किन्तर्हि निमित्तन्द्विर्वचनस्येति" । इको यणचीत्यादौ तु कार्यित्वेनेको निमित्तत्वं न बाध्यते तस्मादित्युत्तरस्येति निर्देशात् । तेन दध्युदकादौ न दोषः । अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमा अयोगवाहाः । तेषामकारोपरि शर्षु च पाठस्योपसंख्यानम् । उरःकेण । सर्पिःषु । अचाड्व्यवाये शर्व्यवाये च णत्व-षत्वे भवतः । यदि तु इकारोपरि पठेरन् तर्हि पयःस्वित्यादौ इणः परस्येति षत्वं स्यात् । त्रिपादीस्थत्वेन विसर्गादीनामसिद्ध-त्वाद्धरिः कर्ता हरिं स्मरेदित्यादौ न यणादय इति दिक् । व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमित्यणिण्ग्रहणेषु ग्रहतुणकशास्त्रे परेणैवाण्ग्रहणमन्यत्र पूर्वेणैव । इण्ग्रहणन्तु सर्वत्र परेणैवेति द्रष्टव्यम् । ञमङणनमित्यत्र मकारानुबन्धः अम् यम् ङम् इति

प्रत्याहारत्रये उपयुज्यते। तच्च त्रयं ञमङणनझभञित्येकस्मिन्नपि सूत्रे कृते निर्वहति । तथाहि पुमःखय्यम्परे हलोयमांयमिलोप इत्येतद्विषये खय्झकारभकाराणां झकारभकारपराणामसम्भवान्न दोषः । ङमो ह्रस्वादचि ङमुण्नित्यमित्येतद्विषयेऽपि झकारभकारयोः पदान्तेऽसम्भवान्न दोषः । उञ्झेर्दोपधतया तस्मात्क्विपि संयोगान्तलोपे सति उदितिरूपाभ्युपगमात् । लभेश्च क्विपि जश्त्वप्रसङ्गान्न तत्रापि तत्सम्भवः । न चैवमागमिनस्त्रयो ङणनेभ्यः परे अच आगमास्तु पञ्चेति संख्यातानुदेशो न स्यादिति वाच्यम् । यथासंख्यमित्यत्र हि विध्यर्थप्रमितिवेलायां निर्दिश्यमानगतसंख्यासाम्यमाश्रीयते न तु लक्ष्यसंस्कारवेलायां प्रयोगगतम् । तदेवं मकारानुबन्धो भाष्ये प्रत्याख्यातः । ञमन्ताड्डइत्यौणादिको डो झकारान्तेभ्यो माभूदिति मकारानुबन्धः कर्तव्य इति वृत्तिस्वरसः । हलित्येतत्सूत्रं वल्रल्झल्शल्षु हकारग्रहणार्थम् । रुदिहि । स्वपिहि । रुदादिभ्यः सार्वधातुकइति वलादिलक्षणेट् । स्निहित्वा स्नेहित्वा। रलो व्युपधादिति वा कित्वम् । अदाग्धाम् । झलो झलीति सलोपः । अलिक्षत् । शल इगुपधेति क्सः । शषसहरिति तु नोक्तम् । हरिर्हसतीत्यादौ खरवसानयोरिति विसर्गापत्तेः ॥

## वृद्धिरादैच् । १ । १ । १ ॥

आत् ऐच्च वृद्धिसंज्ञः स्यात् ॥ अभेदका गुणाइति पक्षे तपरकरणमैजर्थम् । तादपि परस्तपर इति खट्वैडकादिषु त्रिमात्रचतुर्मात्रप्रसङ्गनिवृत्तये। भेदका गुणाः तपरसूत्रज्ञ्ञानाणि विध्यर्थमिति पक्षे तु तत्कालानां सवर्णानां ग्रहणार्थमाकारार्थमपि। दाक्षिः । पैलः । औपगवः । शालीयः । वृद्धिप्रदेशा मृजेर्वृद्धिरित्यादयः ॥

## अदेङ् गुणः। १। १। २॥

अदेङ् च गुणसंज्ञः स्यात्॥ तपरकरणमिह सर्वार्थम्। खट्वर्द्धिः। रमेश इत्यादौ त्रिमात्रचतुर्मात्रनिवृत्तये। तरिता। चेता। स्तोता। पचन्ति। गुणप्रदेशा मिदेर्गुण इत्यादयः॥

## इको गुणवृद्धी। १। १। ३॥

गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते॥ तच्च सम्भवति सामानाधिकरण्ये सार्वधातुकार्द्धधातुकयोः सिचिवृद्धिरित्यादौ इगन्तस्याङ्गस्येत्यादिक्रमेण सम्बध्यते। मिदेर्गुणः मृजेर्वृद्धिरित्यादौ सामानाधिकरण्यासम्भवान्मिदिमृज्योरवयवस्येक इति सम्बध्यते। अन्यथा तत्तद्विधायकैर्विहितयोर्गुणवृद्ध्योरलोऽन्त्यस्येतिवदस्यापि स्थानिनियमार्थत्वे द्वयोर्नियमयोः सार्वधातुकेत्यादौ अविरोधेनेग्रूपस्यान्त्यस्येत्यर्थे अन्त्यस्येक इति वाऽर्थे तत्र निर्वाहेऽपि मिदेर्गुणो मृजेर्वृद्धिरित्यादौ परस्परविरोधादनयोस्त्यागे सर्वादेशगुणापत्तिः। तरति। नयति। मेद्यति। अहार्षीत्। मार्ष्टि। पुनर्गुणवृद्धिग्रहणं संज्ञया विधाने नियमार्थमिति वृत्तिः। तेनेह न। दिवऔत्। द्यौः। पथिमथ्यृभुक्षामात्। पन्थाः। त्यदादीनामः। स इमम्। विधीयेते इत्युक्त्या वृद्धिर्यस्येत्यादावेतदनुपस्थित्या शालीयादिसिद्धिः। इयञ्च परिभाषा याता, ग्लायति, उम्भिता, मार्जन्ति, इत्यादौ आत्सन्ध्यक्षरव्यञ्जनानां गुणवृद्धिव्यावृत्त्यर्थम्। भिन्नम्। मृष्टमित्यादौ निषेधप्रवृत्तये इग्लक्षणत्वसम्पत्त्यर्थञ्चेति दिक्॥

## न धातुलोप आर्द्धधातुके। १। १। ४॥

धात्वंशलोपनिमित्ते आर्द्धधातुके तन्निमित्तके इको गुणवृद्धी न स्तः॥ लोलुवः। पोपुवः। मरीमृजः। लोलुयादिभ्यो यङन्तेभ्यः

पचाद्यचि कृते यङोऽचिचेति यङो लुकि लुग्निमित्तभूतमचमेवाश्रित्य प्राप्ते गुणवृद्धी निषिध्येते । धात्विति किम् । लूञ्, लविता । तदभावे बहुव्रीह्यलाभेन लोपनिमित्त इत्यर्थालाभात् । आर्द्धधातुके किम् । तेतीर्ति । तन्निमित्तके किम् । भेद्यते । मार्ज्यते । अत्र णिजनिमित्तके गुणवृद्धी भवत एव । इकः किम् । अभाजि । रागः । भञ्जेश्च चिणि घञिचभावकरणयोरित्युपधालोपे कृते वृद्धिर्यथा स्यात् ॥

## क्ङिति च । १ । १ । ५ ॥

गित्कित्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः ॥ जिष्णुः । चितम् । सुनुतः । मृष्टम् । मृष्टवान् । मृष्टः । मृजन्ति । न्यनुवीत् । न्यधुवीत् । अत्र सिचि वृद्धौ निषिद्धायामुवङादेशः । निमित्ते किम् । छिन्नम् । तुदति । इहापि यथा स्यात् । इग्लक्षणे किम् । लैगवायनः । कामयते । अचादिवृद्ध्योर्गुणोपधावृद्ध्यो न भवन्त्येव ॥ मृजेः क्ङित्यजादौ वृद्धिर्वेष्यते ॥ * ॥ ममृजतुः । ममार्जतुः । मृजन्ति । मार्जन्ति । क्ङिति किम् । मरीमृजः । अजादौ किम् । मृष्टः । एतच्चेको गुणवृद्धी इति सूत्रे भाष्ये पठितम् ॥

## दीधीवेवीटाम् । १ । १ । ६ ॥

दीधीवेव्योरिटश्च गुणवृद्धी न स्तः ॥ आदीध्यनम् । आदीध्यकः । आवेव्यनम् । आवेव्यकः । भविता श्वः ॥

## हलोऽनन्तराः संयोगः । १ । १ । ७ ॥

अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ॥ हल इति जातौ बहुवचनम् । तेन द्वयोरपि भवति । मङ्क्ता । तद्धेस्त्कृः । तट् ।

शिक्षा । मङ्क्त्वेत्यत्र मग्न इत्यादावुपधालोपार्थं मस्जेरन्त्यात्पूर्वो नुमिति वार्तिकेनान्त्यात्पूर्वं नुमि कृते सनजानां संयोगः । समुदायस्यैषा संज्ञा न प्रत्येकम् । तेन सुदृषत्करोतीत्यत्र न संयोगान्तलोपः । मङ्क्ता तंष्ट्र इत्यादौ तु त्रयाणां द्वयोश्च । बहूनां समवस्थानेऽपि झलादिप्रत्यये परे संयोगादिलोपविधानसामर्थ्यात्तद्विषये भवति । हलः किम् । तितउच्छत्रम् । संयोगान्तलोपः स्यादिति वृत्तिः । अनन्तराः किम् । पनसम् । सकारमकारयोः संयोगत्वे स्कोरिति सलोपः स्यात् । संयोगप्रदेशाः संयोगान्तस्य लोप इत्यादयः ॥

## मुखनासिकावचनोऽनुनासिकः । १ । १ । ८ ॥

मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् ॥ अँ आँ अपः । मुखेति किम् । यमानुस्वाराणामेव प्रसज्येत । तथा चाङोऽनुनासिक इत्यत्रानुस्वारः स्यात् । नासिकेति किम् । शक्तेत्यादावनुदात्तेत्यादिना कलोपो माभूत् । अनुनासिकप्रदेशा अनुनासिकस्य क्वीत्यादयः ॥

## तुल्यास्यप्रयत्नं सवर्णम् । १ । १ । ९ ॥

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यन्तन्मिथः सवर्णं स्यात् । अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्द्धा । ऌतु लसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ॥ इति स्थानानि ॥ यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यश्चतुर्धा । स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तस्थानाम् । विवृतमूष्मणां स्वरा-

णाञ्च । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायान्तु विवृतमेव । एतच्च सूत्रकारेण ज्ञापितम् । तथाहि । शास्त्रान्ते अअइति सूत्रेण विवृतमनूद्य संवृतो विधीयते । तस्य च पूर्वत्रासिद्धमिति सूत्रेणाष्टाध्यायीं सम्पूर्णां प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृतत्वमस्त्येव । ह्रस्वो दीर्घः प्लुतश्चाकारः प्रत्येकमुदात्तोऽनुदात्तः स्वरितश्च । सोऽप्यनुनासिकोऽननुनासिकश्चेत्यकारस्याष्टादश भेदाः । एवमिकारोकारर्कारादीनामपि प्रत्येकम् । ऌवर्णस्य द्वादश । तस्य दीर्घाभावात् । एचामपि द्वादश । तेषां ह्रस्वाभावात् । अनुनासिकाननुनासिकभेदेन यवला द्विधेति तेषां प्रत्येकं द्वौ । रेफोष्मणां सवर्णा न सन्ति । वर्ग्यो वर्ग्येण सवर्णइति । आस्येति किम् । तप्रौ । भरोभरीति परलोपो माभूत् । प्रयत्नेति किम् । वाक् श्चोतति । प्रेति किम् । शचयोः श्वासाघोषविवाराख्यबाह्यप्रयत्नसाम्येन तत्रैव दोषात् । तथाहि । बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति ।

खयां यमाः खयः ᳵकᳵपौ विसर्गः शर एव च ।
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः ।
अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः ॥

वर्गेष्वाद्यानाञ्चतुर्णाम्पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः । पलिक्क्नीः । चख्ख्नतुः । अग्ग्निः । घ्घ्नन्तीत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमाः । तत्र वर्गाणां प्रथमद्वितीयाः खयस्तथा तेषामेव यमाः जिह्वामूलीयोपध्मानीयौ विसर्गः शषसाश्चेत्येतेषां विवारः श्वासोऽघोषश्च ।

अन्येषान्तु संवारो नादो घोषश्च । वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः । अन्ये महाप्राणा इत्यर्थः । बाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्तास्तथाप्यान्तरतम्यपरीक्षायामुपयोक्ष्यन्ते इतीहाभ्यन्तरत्वविशेषणव्यावर्त्यतया व्युत्पादिताः । कादयो मावसानाः स्पर्शाः । यरलवा अन्तस्थाः । शषसहा ऊष्माणः । अचः स्वराः । ≍क ≍प इति कपाभ्यां प्रागर्द्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ । अं अः इत्यचः परावनुस्वारविसर्गौ ॥ इतिस्थानप्रयत्नविवेकः ॥ ऋकारऌकारयोः सवर्णसंज्ञा वाच्या ॥ * ॥ होतृऌकारः । होतॄकारः । ऌवर्णस्तु भयान्तरतमो दीर्घो न सम्भवतीति ऋकार एव भवति । सवर्णप्रदेशा अकः सवर्णे दीर्घ इत्यादयः ॥

## नाज्झलौ । १ । १ । १० ॥

अकारहकारयोरिकारशकारयोर्ऋकारषकारयोर्ऌकारसकारयोश्च सावर्ण्ये प्राप्ते एतदारम्भः । आकारसहितोऽच् आच् स च हल् चेत्येतौ मिथः सवर्णौ न स्तः ॥ दधि हरति । दधि शीतलम् । दधि षष्ठम् । दधि सान्द्रम् । अत्र हरत्यादिषु परेषु दधीत्यस्य यणादि कार्यं न । अन्यथा दीर्घादीनामिव हकारादीनामपि ग्रहणकशास्त्रबलादच्त्वं स्यात् । नाज्झलाविति निषेधो यद्यप्याक्षरसमाम्नायिकानामेव तथापि हकारस्याऽऽकारो न सवर्णः । तत्राऽऽकारस्यापि प्रश्लिष्टत्वात् । तेन विश्वपाभिरित्यत्र होढ इति ढत्वं न भवति ॥

## ईदूदेद्द्विवचनं प्रगृह्यम् । १ । १ । ११ ॥

ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् ॥ हरी एतौ । विष्णू इमौ । गङ्गे अमू । पचेते इमौ । तपरकरणमसन्देहार्थमिति वृत्तिः ।

अन्यथा यथोद्देशे ह्रस्वस्यायं निर्देश इति सम्भावनायामकुर्वेह्यत्रेत्यादावतिप्रसङ्गः स्यादिति भावः । अथासन्देहार्थमपि क्रियमाणं तपरत्वं घटायोन्मीलितं चक्षुः पटं नहि न पश्यतीति न्यायात् प्लुतं व्यावर्तयेदिति अग्नी इतीत्यादावप्लुतवदिति प्लुताश्रये प्रकृतिभावे निषिद्धे प्रगृह्याश्रयः प्रकृतिभावो न स्यात् । स्याच्चाग्नी इत्यादावनुनासिकः । नैष दोषः । द्विपक्षं हि संज्ञापरिभाषं प्रणीयते । यथोद्देशम् कार्यकालम् । उद्देशमनतिक्रम्य यथोद्देशम् । उद्देश उपदेशदेशः । यत्र देशे उपदिश्यते तद्देशे एव वाक्यार्थबोधेन गृहीतशक्त्या गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः । कार्यकालमित्यस्य च कार्यैः काल्यते स्वसन्निधिम्प्राप्यते इत्यर्थः । कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिन्हितसंज्ञापरिभाषाणामाक्षेप इति यावत् । अत्र पक्षे तु तत्प्रदेशस्थस्य संज्ञापरिभाषस्य तत्तत्प्रदेशे एवोपयोग इति प्रदेशान्तरे पुनः पुनः संज्ञापरिभाषमन्वेषणीयम् । तत्र तावत्संज्ञापरिभाषे यथोद्देशे समाश्रीयमाणे प्लुतस्यासिद्धत्वात्पूर्वत्रासिद्धमिति सूत्रे शास्त्रासिद्धत्वपक्षस्यैव वक्ष्यमाणतया द्विमात्रत्वबुद्धेरप्रतिघातान्निर्विघ्नं प्रगृह्यसंज्ञायाः सिद्धत्वात् । कथं पुनरयं पक्षो यावता कार्यार्थत्वात्संज्ञापरिभाषस्य कार्यकालतैव न्याय्या । नैष दोषः । यदानुद्दिश्य प्रयोजनविशेषं प्रयोजनमात्रमभिसन्धाय भविष्यति किञ्चिदनेन प्रयोजनमिति संज्ञापरिभाषं प्रणीयते तदा सम्भवत्येवायं पक्षो यथाश्रुतग्राहिप्रतिपत्त्रपेक्षः । महावाक्यार्थपर्यालोचनप्रवृत्तप्रतिपत्त्रपेक्षस्तु कार्यकालपक्षः । ईदूदेत्किम् । वृक्षावत्र । द्विवचनं किम् । कुमार्यत्र । मणीवोष्ट्रस्येति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः । प्रगृह्यप्रदेशाः प्लुतप्रगृह्या अचीत्येवमादयः ॥

## अदसो मात् । १ । १ । १२ ॥

अदःशब्दसम्बन्धिमकारात्परावीदूतौ प्रगृह्यौ स्तः ॥ अमी ईशाः । रामकृष्णावमू आसाते । एतत्सूत्रं प्रति मीत्वमूत्वे नासिद्धे । आरम्भसामर्थ्यात् । कार्यकालपक्षे अनुनासिकप्रदेशैकवाक्यतापन्नम्प्रति मीत्वमूत्वयोरसिद्धत्वाभावेनानुनासिकप्रतिबन्धकत्वेन चारितार्थ्यापादनेतु तावन्मात्रप्रयोजनकत्वेऽणोप्रगृह्यस्यानुनासिकोऽदसोनेत्येव सिद्धौ नह्येकमुदाहरणं सामान्यसूत्रारम्भम्प्रयोजयतीति न्यायेन संज्ञासूत्रप्रणयनवैयर्थ्यस्य तदवस्थत्वेनायाद्यप्रवृत्त्यर्थं प्रकृतिभावोप्येतत्प्रयोजनमित्यध्यवसीयते । हे अमुकेति तु न प्रयोगः । त्यदादीनां सम्बोधनं नास्तीत्युत्सर्गादित्याहुः । अदसः किम् । शम्यत्र । मात्किम् । अमुकेऽत्र । असति माद्ग्रहणे एकारोऽप्यनुवर्तेत ॥

## शे । १ । १ । १३ ॥

अयं प्रगृह्यः स्यात् ॥ अस्मे इन्द्राबृहस्पती ॥

## निपात एकाजनाङ् । १ । १ । १४ ॥

एकोऽज्निपात आङ्वर्जः प्रगृह्यः स्यात् ॥ इ उ विस्मये । इ इन्द्रः । उ उमेशः । अनाङित्युक्तेरङिदाकारः प्रगृह्य एव । आ एवं नु मन्यसे । आ एवं किल तत् । ङित्तु न प्रगृह्यः । ईषदुष्णमोष्णम् ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥

अत्र चाङिल्लक्षणे एव तात्पर्यम् । अन्यस्य ङित्वन्त्वर्थसिद्धम् । ईषदर्थेत्यादिस्त्ववयुत्यानुवादः । एव ज्ञाभ्र आं अप इत्यत्र सप्तम्यर्थंवृत्तेरप्याकारस्य ङित्वादाडोऽनुनासिकश्छन्दसीति

प्रवर्तते । अनाङितिपर्युदासादेवाजूपे निपाते लब्धे निपातैका-
ज्ग्रहणं स्पष्टार्थमुत्तरार्थं निपातग्रहणमिहैव कृतम् । एतेनाजित्येवै-
कत्वविवक्षया अच्समुदायग्रहणाभावे सिद्धे एकग्रहणमन्यत्र वर्णग्र-
हणे जातिग्रहणार्थम् । तेन धिप्सतीत्यादिसिद्धिः । तितउशब्दस्यै-
कदेशस्याउ इत्यस्यानुकरणे अउ अकरोदित्यत्रानुकरणं चानितीति
निपातत्वेऽपि प्रगृह्यत्वाभाव एकग्रहणफलमित्यपास्तम् । अच्समु-
दायस्याज्ग्रहणेन ग्रहणेऽपि स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववच्छ
रीरावयवसमुदायस्य शरीरावयवत्वाभाववच्चाच्समुदायस्याजूपत्वा
भावात् । अतएव भाष्ये ज्ञापकमेवोक्तं न तु फलमित्यप्युक्तं एकेति
सुवचस्यमेकग्रहणं ज्ञापकमिति तच्चेत्र सूत्रे भाष्ये स्पष्टम् ॥

## ओत् । १ । १ । १५ ॥

ओदन्तो निपातः प्रगृह्यः स्यात् ॥ अहो ईशाः । निपात.
किम् । देवोऽसि । वायवायाहि ॥

## सम्बुद्धौ शाकल्यस्येतावनार्षे । १ । १ । १६ ॥

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे ॥
विष्णो इति । विष्ण इति । सबुद्धौ किम् । अहो इति । अत्र परत्वा-
द्विकल्पो माभूत् । सम्बुद्धिनिमित्तक इति किम् । वपो इत्यादौ प्रगृ
ह्यत्वं यथा स्यात् । सम्बुद्धिपर इति व्याख्याने तु सोर्लुका लुप्तत्वेन
तत्परत्वाभावान्न स्यात् । नलुमतेति निषेधानित्यत्वन्त्वगतिकगतिः ।
इताविति किम् । वायोऽत्र । अनार्षइति किम् । ब्रह्मबन्धवित्यब्रवीत् ॥

## उञः । १ । १ । १७ ॥

उञ इतौ वा प्रागुक्तम् । उ इति । विति ।

## ऊँ । १।१ । १८ ॥

उञ इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च ऊँ इत्ययमादेशो वा स्यात् ॥ ऊँ इति ॥

## ईदूतौ च सप्तम्यर्थे । १ । १ । १९ ॥

सप्तम्यर्थे पर्यवसन्नमीदूदन्तं प्रगृह्यसंज्ञं स्यात् ॥ सोमो गौरी अधिश्रितः । मामकी तनू इति । सुपां सुलुगिति सप्तम्या लुक् । इदूतौ किम् । अग्ना भवाति । सप्तम्या डादेशः । तपरत्वमसन्देहाय । सप्तमीति किम् । धीती । मती । ह्रस्वान्ताभ्यां तृतीयैकवचनस्य पूर्वसवर्णे सवर्णदीर्घः । अर्थग्रहणं किम् । वृत्तावर्थान्तरोपसंक्रान्ते माभूत् । वाप्यामश्वो वाप्यश्वः ॥

## दाधा घ्वदाप् । १ । १ । २० ॥

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युः दाप्दैपौ विना ॥ तत्र दारूपाश्चत्वारः । डुदाञ् । प्रणिददाति । दाण् । प्रणियच्छति । दो । प्रणिद्यति । देङ् । प्रणिदयते । धारूपौ द्वौ । डुधाञ् । प्रणिधाति । धेट् । प्रणिधयति वत्सो मातरम् । अदाबिति किम् । दाप् लवने । दातं बर्हिः । लूनमित्यर्थः । घुत्वाभावादोदद्घोरिति न प्रवर्तते । दैप् शोधने । अवदातं मुखम् । इह घुत्वाभावादच उपसर्गात्त इत्येतन्न । घ्वादेशा नेर्गदनदेत्यादयः । इह दोदेङ्धेटामकरणानि व्यवस्थाप्यात्र प्रकृतिवदनुकरणमित्यतिदेशादादेच उपदेशेऽशितीत्यात्वं क्रियते । ततश्चतुर्णां दारूपाणां द्वयोश्च धारूपयोरेकशेषं कृत्वा द्वन्द्वः कर्तव्यः । प्रणिदातेत्यादौ कृतात्वानां दोदेङ्धेटान्तु स्थानिवद्भावात्सिद्धं घुत्वम् । लक्षणप्रतिपदोक्तपरिभाषाया निरनुबन्धकग्रहणे न सानुबन्धकस्येत्यस्याश्च नेह प्रवृत्तिः । सर्वेषां दारूपेणैवानुकृतत्वात् । ननु कृतात्वस्य सूत्रे निर्देशात्प्रणिद्यति

प्रणिधयतीत्यादौ चात्वविरहात्कथं घुत्वमिति चेत् भ्रान्तोऽसि । न हि वयं कृतात्वमनुकुर्मः येनोक्तदोषः स्यात् । अपि तु दे दो धे इत्येङन्तेष्वेवानुक्रियमाणेषु लक्षणवशसंपन्नमात्वमित्युक्तम् । न च लक्षणेन रूपान्यत्वेऽप्यनुकरता हीयते । दीङस्तु नेह ग्रहणम् । तदनुकरणे आत्वासम्भवात् । वार्तिकमते एजन्तानां दीङादीनामात्वविधानात् । भाष्यमते एज्निमित्ते परतस्तद्विधानात् । तेन दीङस्तृजादावात्वे कृतेऽपि घुसंज्ञाविरहात्प्रनिदातेत्यत्र नेर्गदेति नित्यं णत्वं न भवति इति सूत्रकारस्य मतम् । नन्वस्मिन्पक्षे दाप्दैपावनुकृतौ । न वा । आद्ये अनुकरणपर्युदासोभयसामर्थ्यात्तयोर्घुसंज्ञाविकल्पः स्यात् । अन्त्ये अदाबिति व्यर्थं स्यात् । अननुकृतत्वादेव दाप्दैपोर्घुसंज्ञाप्राप्तिविरहादिति चेन्न । अदाबित्यस्मिन्नसति तयोरप्यनुकरणं सम्भाव्येत । न हि लक्षणैकचक्षुषां दोदेङादीनां दाप्दैपोश्च वैलक्षण्यं किञ्चिदनुभूयते यद्बलाद्ग्रहणाग्रहणे व्यवस्थाप्येयाताम् । वार्तिककारमते ऽ प्रयोगस्थानामेव दाधारूपाणामिदमनुकरणम् । न चैवं प्रणिद्यति प्रणिदयते इत्यादौ शिति न स्यात् । आत्वाभावात् । तथा दे रक्षणे, अदित, धेट्, व्यत्यधित, प्रणिदाता, प्रणिधातेत्यादावपि न स्यात् लाक्षणिकत्वादिति वाच्यम् । वचनबलेनैव तत्समाधानात् । तथ च कात्यायनवार्तिकम् । घुसंज्ञायां प्रकृतिग्रहणं शिदर्थमिति । भार द्वाजीयास्तु पठन्ति शिद्विकृतार्थमिति । तथा च दाधाप्रकृतयो घुरिति पठित्वा दाश्च धाश्च प्रकृतयश्चेति द्वन्द्वं कृत्वा सन्निधानाद्दाध मेव प्रकृतय इति व्याख्येयम् । भाष्यकारास्तु वार्तिकम्प्रत्याचख्युः तथाहि । नेर्गदेतिसूत्रे तावदवश्यम्प्रकृतिग्रहणं कर्तव्यम् । प्रणिम यते प्रणमयतेत्यत्रापि णत्वं यथा स्यात् । तदेव पुरस्तादपकृष

घुप्रकृतिमा इति पठिष्यामः । घुश्च प्रकृतिश्च माश्चेति द्वन्द्वः । सन्निधानाच्च पूर्वोत्तरयोः प्रकृतिर्ग्रहीष्यते । न चैवं मीनातिमिनोत्योरपि माप्रकृतित्वाद्ग्रहणापत्तिः । माङो ङकारानुबन्धस्यैव तत्रावश्यपठनीयत्वात् । अन्यथा मा माने, इत्यत्रातिप्रसङ्गात् । तस्मात्घुप्रकृतिमाङिति पाठेन प्रणिद्यति, प्रणिदयते, इत्यादेः सिद्धत्वाच्छिदर्थं तावद्घुसंज्ञायां प्रकृतिग्रहणं न कर्तव्यमिति स्थितम् । भारद्वाजीयोक्तरीत्या विकृतार्थं कर्तव्यमिति पुनरवशिष्यते । तदपि न । गामादाग्रहणेष्वविशेष इति परिभाषयैव लाक्षणिकस्यापि दारूपस्य घुसंज्ञासिद्धेः । अस्याञ्च परिभाषायां दैपः पित्वं लिङ्गम् । तद्धि अदाबिति सामान्यग्रहणार्थं क्रियते लाक्षणिकत्वादेव घुसंज्ञायां दैपग्रहणाभावे तु किं निषेधे सामान्यग्रहणार्थेन पित्वेन । न चैवमपि धेटो घुसंज्ञा न स्यादेवेति वाच्यम् । दोदद्घोरित्यत्र धेञिवृत्त्यर्थं क्रियमाणेन द इत्यनेन धेटोऽपि घुसंज्ञाज्ञापनात् । न च दधातिनिवृत्त्यर्थं द इत्युक्तमिति वाच्यम् । तत्र दधातेर्हिरिति ह्यादेशविधानादेव दद्भावाप्रसङ्गात् । न चैवमपि गामादाग्रहणेष्वविशेष इत्यनेन लक्षणप्रतिपदोक्तपरिभाषाया निरनुबन्धकग्रहण इति परिभाषायाश्च यथा बाधस्तथार्थवद्ग्रहणपरिभाषाया अपि बाधः स्यात् तथा च प्रनिदारयति प्रनिधारयतीत्यत्राप्यतिप्रसङ्ग इति चेन्न । गदादीनां य उपसर्गस्तत्स्थान्निमित्तादुत्तरस्य तानेव गदादीन्प्रत्युपसर्गस्य नेरिति व्याख्यानात् । इदन्त्ववधेयम् । प्रणिदापयतीत्यत्रापि उपसर्गयोः प्रकृत्यर्थविशेषणत्वे सत्येव नेर्गदेति नित्यणत्वम् । ण्यर्थविशेषकत्वे तु घुसंज्ञकं प्रत्यनुपसर्गत्वाच्छेषेविभाषेति विकल्प एव न तु नित्यं णत्वमिति । स्यादेतत् । उपादिदीक्षत, इत्यत्र सनिमीमेति इस्भावः

स्यात् । वार्तिककृता घुसंज्ञायां प्रकृतिग्रहणात् । सूत्रभाष्यकारयोस्तु नाऽसौ दोषः । सूत्रकृता दीङोऽननुकृतत्वात् । भाष्यमते णत्वे प्रकृतिग्रहणेऽपि घुसंज्ञायां तद्विरहादिति चेत्सत्यम् । वार्तिकमतेऽपि नेयं दाप्रकृतिः एजन्तानामात्वविधानाभ्युपगमात् । नचैवमादन्तत्वनिबन्धनयुच्प्रत्ययाद्यसिद्धिः । तत्राकारान्तलक्षणप्रत्ययविधिरिति-वचनेनैव तत्सिद्धेः । भाष्येत्वेतद्वचनप्रत्याख्यानाय एज्विषये आत्वं सिद्धान्तितमित्यन्यदेतत् । इदन्त्ववशिष्यते । भाष्यवार्तिकोभयमते-ऽपि उपादास्तास्य स्वरः शिक्षकस्येत्यत्र स्थाघ्वोरितीत्वं प्राप्तम् । तच्च भाष्ये सन्निपातपरिभाषया परिहृतम् । उपदीस् त इति स्थिते एज्विषये प्रवर्तमानमात्वं सिचोऽकित्वमुपजीवति यदि चात्र घुसंज्ञा स्यात्तर्हि स्थाघ्वोरिच्चेति सिचः कित्वं स्यादतोऽकित्वमुपजीव्य प्रवृत्त आकारः कित्वप्रवर्तिकां घुसंज्ञां न प्रवर्तयत्येवेति । वार्तिक-कृता तु दीङः प्रतिषेधः स्थाघ्वोरित्वे इति वचनमेव कृतम् । उभ-यमतेऽपि दीङस्तृजादावात्वे कृते प्रणिदातेत्यादौ नेर्गदेति णत्वम्भ-वति । अतएव वार्तिककृता दीङः प्रतिषेध इत्येव नोक्तम् । किन्तु स्थाघ्वोरित्वे इति विषयविशेषो निर्दिष्टः । सूत्रमते तु न भाव्यं णत्वे-नेति स्पष्टमेव । किञ्च भाष्यवार्तिकयोर्न केवलं सूत्रकृता सह विरोधः किन्तु परस्परेणाऽपि । तथाहि । भाष्यमते प्रणिदीयते, प्रणिदीन-इत्यादावपि नित्यं णत्वम् । णत्वविधौ प्रकृतिग्रहणात् । वार्तिकमते तु वैकल्पिकम् । एजन्तानामेव प्रकृतित्वाभ्युपगमेन ईदन्तस्याप्रकृति-त्वात् । अन्यथा उपदिदीषत इत्यत्र इस्भावापत्तेः । तदेवं प्रणिदा-तेत्यादौ सूत्रकृता सह द्वयोर्विरोधः । प्रणिदीन इत्यादौ तु भाष्य-कृता सह इतरयोर्विरोधो दुष्परिहर इति । अत्रेदं वक्तव्यम् । यथो-

नरं मुनीनां प्रामाण्यमिति सिद्धान्ताद्भाष्योक्तरीत्या सर्वत्र दीधि परे नेर्नित्यं गत्वमिति स्थिते सूत्रवार्त्तिकमतेऽपि शेषे विभाषेति व्यवस्थितविभाषामाश्रित्य भाष्याविरोधः सम्पादनीयः । एकवाक्यतयैव सर्वनिर्वाहसम्भवे मतभेदकल्पनस्यानाश्रयणीयत्वादिति सर्वमिदं शब्दकौस्तुभे स्पष्टम् ॥

**आद्यन्तवदेकस्मिन् । १ । १ । २१ ॥**

एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव स्यात् ॥ यथा कर्तव्यमित्यत्र प्रत्ययाद्युदात्तत्वम्भवति । एवमौपगव इत्यत्रापि । यथा वृक्षाभ्यामित्यत्र सुपि चेति दीर्घत्वम्भवति । एवमाभ्यामित्यत्रापि । एकस्मिन्निति किम् । सभासन्नयने भवः साभासन्नयनः । आकारमाश्रित्य वृद्धसंज्ञा न भवति । दरिद्राधातावेवर्णान्तलक्षणो ऽच्च न ॥

**तरप्तमपौ घः । १ । १ । २२ ॥**

एतौ घसंज्ञौ स्तः ॥ कुमारितरा । कुमारितमा । घप्रदेशा बह्वपेत्येवमादयः ॥

**बहुगणवतुडति संख्या । १ । १ । २३ ॥**

एते संख्यासंज्ञाः स्युः ॥ बहुकृत्वः । संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् । बहुधा । संख्याया विधार्थे धा । बहुभिः क्रीतो बहुकः । संख्याया अतिशदन्तायाः कन् । बहुशः । बह्वल्पार्थाच्छस्कारकादित्यनुवर्तमाने संख्यैकवचनाच्च वीप्सायामिति शस् । गणकृत्वः । गणधा । गणकः । गणशः । तावत्कृत्वः । तावद्धा । तावत्कः । तावच्छः । कतिकृत्वः । कतिधा । कतिकः । कतिशः । बहुगणयोर्वैपुल्ये संघे च वर्तमानयोर्नेह ग्रहणम् । संख्यायतेऽनयेत्यन्वर्थसंज्ञाविज्ञानात् । किन्तु संख्यावाचिनोरेव । अनियतबहुत्ववाचि-

नाह्वेदनयोरेवेति नियमेन भूयादीनां निवृत्त्यर्थं संख्यासंज्ञा विधीयते ॥ अध्यर्द्धग्रहणञ्च समासकन्विध्यर्थम् ॥ * ॥ अर्द्धेनाधिकम् अध्यर्द्धम् । अध्यर्द्धेन शूर्पेण क्रीतं अध्यर्द्धशूर्पम् । दिक्संख्ये इत्यनुवर्तमाने तद्धितार्थेति समासः ततः शूर्पादञन्यतरस्यामित्यञष्ठञो वा अध्यर्द्धपूर्वेति लुक् । अध्यर्द्धेन क्रीतं अध्यर्द्धकम् । संख्याया अतिशदन्तायाः कन् । समासविध्यर्थमिति सम्बन्धसामान्ये षष्ठी । समासे विधीयमाने समासनिमित्ते अन्यस्मिन् कार्ये च विधीयमाने इत्यर्थः । तेन द्विगुनिमित्तो लुगपि लभ्यते । तथा चाध्यर्द्धपूर्वेति सूत्रे अध्यर्द्धग्रहणं न कर्तव्यम्भवति ॥ अर्द्धपूर्वपदश्च पूरणप्रत्ययान्तः ॥ * ॥ संख्येत्यनुवर्तते । पूरणप्रत्ययान्त इत्यस्य पूरणप्रत्ययान्तोत्तरपद इत्यर्थः । समासकन्विध्यर्थमित्येव । अर्द्धं पञ्चमं येषामिति बहुव्रीहिः । अर्द्धपञ्चमैः शूर्पैः क्रीतं अर्द्धपञ्चमशूर्पम् । पूर्ववदञष्ठञो वा लुक् । अर्द्धपञ्चमेन क्रीतं अर्द्धपञ्चमकम् ॥ अधिकग्रहणञ्चालुकि समासोत्तरपदवृद्ध्यर्थम् ॥ * ॥ अधिकया षष्ट्या क्रीतः अधिकषाष्टिकः । आधिकसाप्ततिकः । तद्धितार्थेति समासः । प्राग्वतेष्ठञ् । अलुकीति वचनाल्लुकि कर्तव्ये संख्यासंज्ञा नास्तीति द्विगुत्वमपि न । तेनाध्यर्द्धपूर्वाद्द्विगोरिति लुक् न । ततः संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः । ननूत्तरपदवृद्ध्यर्थमिति वचनाल्लुक् न भविष्यति किमलुकीत्यनेन । नैतदस्ति । अर्हत्यर्थात्परेष्वर्थेषु यः प्रत्ययस्तस्य लुगभावात्तैवोत्तरपदवृद्धिः स्यात् ॥ संख्याव्ययासन्नेति सूत्रे चाधिकग्रहणं न कर्तव्यम् । संख्येत्येव सिद्धेः ॥

## ष्णान्ता षट् । १ । १ । २४ ॥

षान्ता नान्ता च संख्या षट्संज्ञा स्यात् ॥ षट् तिष्ठन्ति ।

षट् पश्य । पञ्च सप्तेत्यादि । संख्येति किम् । विप्रुषः । पामानः । षट्प्रदेशाः षड्भ्यो लुगित्येवमादयः ॥

## डति च । १ । १ । २५ ॥

डत्यन्ता संख्या षट्संज्ञा स्यात् ॥ कति सन्ति । कत्यद्राक्षीः । संख्येति किम् । पातेर्डतिः । पतयः । न चास्य संख्यासंज्ञाऽपि स्यादिति वाच्यम् । वतुसाहचर्येण तद्धितस्यैव ग्रहणात् ॥

## क्तक्तवतू निष्ठा । १ । १ । २६ ॥

एतौ निष्ठासंज्ञौ स्तः ॥ कृतः । कृतवान् । निष्ठाप्रदेशाः श्वीदितो निष्ठायामित्येवमादयः ॥

## सर्वादीनि सर्वनामानि । १ । १ । २७ ॥

सर्वादीनि शब्दरूपाणि सर्वनामसंज्ञानि स्युः ॥ तदन्तस्यापीयं संज्ञा । द्वन्द्वे चेति ज्ञापकात् । तेन परमसर्वत्रेति त्रल् परमभवकानित्यत्राकच्च सिद्ध्यति । सर्वः, सर्वौ, सर्वे, सर्वस्मै, सर्वस्मात्, सर्वेषाम्, सर्वस्मिन्, शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । सर्वनामप्रदेशाः सर्वनाम्नः स्मै इत्येवमादयः । सर्वादयश्च पञ्चत्रिंशत् । सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्, इति । सर्वादयस्त्रिलिङ्गाः । उभशब्दो द्वित्वविशिष्टस्य वाचकः । अत एव नित्यं द्विवचनान्तः । तस्येह पाठस्तूभकावित्यकजर्थः । न च कप्रत्ययेनेष्टसिद्धिः । द्विवचनपरत्वाभावेनोभयत उभयत्रेत्यादाविवायच्प्रसङ्गात् । तदुक्तम् । उभयोऽन्यत्रेति । अन्यत्र

द्विवचनपरत्वाभावे । उभयशब्दस्य द्विवचनं नास्तीति कैयटः । अस्तीति हरदत्तः । तस्माज्जस्ययजादेशस्य स्थानिवद्भावेन तयप्-प्रत्ययान्ततया प्रथम चरमेति विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वान्नित्यैव संज्ञा भवति । उभये । डतरडतमौ प्रत्ययौ । यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति । सुप्तिङन्तमिति ज्ञापकात् । तथापीह तदन्तग्रहणम् । केवलयोः संज्ञायाः प्रयोजनाभावात् । अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुवचनविषये निर्द्धारणे वर्तेते । तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा । त्वत् त्व इति द्वावप्यदन्तावन्यपर्यायौ । एक उदात्तोऽपरोऽनुदात्त इत्येके । एकस्तान्त इत्यपरे । नेम इत्यर्द्धे । सम: सर्वपर्यायः । तुल्यपर्यायस्तु नेह गृह्यते । यथासंख्यमनुदेशः समानामिति ज्ञापकात् । एकशब्दः संख्यायामेकवचनान्तः । संज्ञोपसर्जनीभूतास्तु न सर्वादयः । महासंज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशात् । अतः संज्ञाकार्यमन्तर्गणकार्यञ्च तेषां न भवति । सर्वो नाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय देहि । अतिकतरं कुलम् । अतितत् ॥

## विभाषा दिक्समासे बहुव्रीहौ । १ । १ । २८ ॥

अत्र सर्वनामता वा स्यात् ॥ उत्तरपूर्वस्यै । उत्तरपूर्वायै । दिङ्नामान्यन्तराल इति प्रतिपदोक्तस्य दिक्समासस्य ग्रहणान्नेह । योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै । बहुव्रीहिग्रहणं स्पष्टार्थम् ॥

## न बहुव्रीहौ । १ । १ । २९ ॥

बहुव्रीहौ चिकीर्षिते सर्वनामता न स्यात् ॥ त्वकं पिता यस्य

त्वत्कपितृकः । अहकं पिता यस्य मत्कपितृकः । इह समासात्प्रागेव प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते । अन्यथा लौकिकविग्रहवाक्य इव तत्राप्यकच् प्रवर्तेत । स च समासेऽपि श्रूयेत । अतिक्रान्तो भवकन्तमतिभवकानितिवत् । भाष्यकारस्तु त्वकत्पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ । यथोत्तरं मुनीनां प्रामाण्यम् ॥

## तृतीयासमासे । १ । १ । ३० ॥

अत्र सर्वनामता न स्यात् ॥ मासपूर्वाय । तृतीयासमासार्थवाक्येऽपि न । मासेन पूर्वाय ॥

## द्वन्द्वे च । १ । १ । ३१ ॥

द्वन्द्वे उक्ता संज्ञा न स्यात् ॥ वर्णाश्रमेतराणाम् । समुदायस्यायं निषेधो नत्ववयवानाम् । नचैवं तदन्तविधिना सुट्प्रसङ्गः । सर्वनाम्नो विहितस्यामः सुडिति व्याख्यास्यमानत्वात् ॥

## विभाषा जसि । १ । १ । ३२ ॥

जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात् ॥ वर्णाश्रमेतरे । वर्णाश्रमेतराः । शीभावम्प्रत्येव विभाषेत्युक्तमतो नाकच् । किन्तु कप्रत्यय एव । वर्णाश्रमेतरकाः ॥

## प्रथमचरमतयाल्पार्धकतिपयनेमाश्च । १ । १ । ३३ ॥

एते जसः कार्यम्प्रत्युक्तसंज्ञा वा स्युः ॥ प्रथमे । प्रथमाः । चरमे । चरमाः । तयप् प्रत्ययः । ततस्तदन्ता ग्राह्याः । द्वितये । द्वितयाः । अल्पे । अल्पाः । अर्द्धे । अर्द्धाः । कतिपये । कतिपयाः । शेषं रामवत् । नेमे । नेमाः । शेषं सर्ववत् ॥

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । १ । १ । ३४ ॥

एषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात् ॥ पूर्वे । पूर्वाः । एवं परादीनामपि । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गायकाः । कुशला इत्यर्थः । असंज्ञायां किम् । उत्तराः कुरवः ॥

## स्वमज्ञातिधनाख्यायाम् । १ । १ । ३५ ॥

ज्ञातिधनान्यवाचिनः स्वशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात् । स्वे । स्वाः । आत्मीया इत्यर्थः । आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा ॥

## अन्तरं बहिर्योगोपसंव्यानयोः । १ । १ । ३६ ॥

बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात् । अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥ अन्तरं बहिर्योगेति गणसूत्रेऽपुरीति वक्तव्यम् ॥ * ॥ अन्तरायै नगर्यै । अन्तरायां पुरि ॥ विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम् ॥ * ॥ द्वितीयस्मै । द्वितीयाय । एवं तृतीयः । अर्थवद्ग्रहणान्नेह । पटुजातीयाय ॥

## स्वरादिनिपातमव्ययम् । १ । १ । ३७ ॥

स्वरादयो निपाताश्च प्राग्रीश्वरान्निपाता इत्यारभ्य अधिरीश्वरे इत्येतत्पर्यन्तं वक्ष्यमाणा अव्ययसंज्ञाः स्युः ॥ स्वर्, अन्तर्, प्रातर्, पुनर्, सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, ऋते, युगपत्, आरात्, पृथक्, ह्यस्, श्वस्, दिवा, रात्रौ, सायम्, चिरम्, मनाक्,

ईषत्, जोषम्, तूष्णीम्, बहिस्, अवस्, समया, निकषा, स्वयम्, वृथा, नक्तम्, नञ्, हेतौ, इद्धा, अद्धा, सामि, वत्, ब्राह्मणवत्, क्षत्रियवत्, सना, उपधा, सनत्, सनात्, तिरस्, अन्तरा, अन्तरेण, ज्योक्, कम्, शम्, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, श्रौषट्, वौषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मृषा, मिथ्या, मुधा, पुरा, मिथो, मिथस्, प्रायस्, मुहुस्, प्रवाहुकम्, प्रवाहिका, आर्यहलम्, अभीक्ष्णम्, साकम्, सार्द्धम्, नमस्, हिरुक्, धिक्, अथ, अम्, आम्, प्रताम्, प्रशान्, प्रतान्, मा, माङ् । आकृतिगणोऽयम् । चादयो निपाताः । अव्ययप्रदेशा अव्ययादाप्सुप इत्येवमादयः ॥

## तद्धितश्चासर्वविभक्तिः । १ । १ । ३८ ॥

यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात् ॥ परिगणनं कर्तव्यम् । तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक्समासान्तेभ्यः । अम् । आम् । कृत्वोर्थाः । तसिवती । नानाञाविति । तेनेह न । पचतिकल्पम् । पचतिरूपम् ॥

## कृन्मेजन्तः । १ । १ । ३९ ॥

कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् ॥ स्मारं स्मारम् । जीवसे । पिबध्यै ॥

## क्त्वातोसुन्कसुनः । १ । १ । ४० ॥

एतदन्तमव्ययं स्यात् ॥ कृत्वा । उदेतोः । विसृपः ॥

## अव्ययीभावश्च । १ । १ । ४१ ॥

अव्ययं स्यात् ॥ अधिहरि ॥

**शि सर्वनामस्थानम् । १ । १ । ४२ ॥**

शि इत्येतत्सर्वनामस्थानसंज्ञं स्यात् ॥ कुण्डानि । सर्वनामस्थानप्रदेशाः सर्वनामस्थाने चासम्बुद्धावित्येवमादयः ॥

**सुडनपुंसकस्य । १ । १ । ४३ ॥**

सुट् प्रत्याहारः । स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥ राजा । राजानौ । राजानः । राजानम् । राजानौ । अनपुंसकस्य किम् । सामनी ॥

**न वेति विभाषा । १ । १ । ४४ ॥**

निषेधविकल्पयोर्विभाषा संज्ञा स्यात् ॥ उभयत्र विभाषाः प्रयोजयन्ति । विभाषाप्रदेशेषु विभाषाश्वेरित्येवमादिषु प्रतिषेधविकल्पावुपतिष्ठेते । तत्र प्रतिषेधेन समीकृते विषये विकल्पः प्रवर्तते । शुशाव । शिश्वाय । शुशुवतुः । शिश्वियतुः ॥

**इग्यणः सम्प्रसारणम् । १ । १ । ४५ ॥**

यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात् ॥ यज् । इष्टम् । वप् । उप्तम् । ग्रह । गृहीतम् । सम्प्रसारणप्रदेशाः सम्प्रसारणाच्चेत्येवमादयः । विधिप्रदेशेषु तु सूत्रशाटकवद्भाविसंज्ञाऽश्रयणीया । अदुहितरामित्यादौ लस्योत्तमैकवचने इटि तस्य हल इति दीर्घापत्तिस्तु यथासंख्यसम्बन्धात्परिहर्तव्या । द्युभ्यामित्यादौ तु दिव उदिति तपरत्वान्न दीर्घः । नन्वेवमपि अक्षद्यूवावित्यादौ ऊठः संप्रसारणसंज्ञायां संप्रसारणाच्चेति पूर्वरूपं स्यादिति चेन्न । संप्रसारणपूर्वत्वे समानाङ्गग्रहणस्य वार्तिककृता कृतत्वात् । वार्णादाङ्गं बलीय इत्युवङ एव प्रवृत्तेश्च । पूर्वरूपात्पूर्वं हल इति दीर्घस्य प्रवृत्तत्वेन तस्य संप्रसारणत्वाभावेन पूर्वत्वाप्राप्तेश्च । एतेनाक्षद्यूश्वासा-

वरुणश्चावरुद्वारुण इत्यादौ पूर्वत्वं दुर्वारमित्यपास्तम् । हूतो जीन इत्यादौ हल इति सूत्रारम्भसामर्थ्यादल्विधौ स्थानिवत्त्वाङ्गीकारेण पूर्वत्वनिष्पन्नस्य संप्रसारणत्वेऽपि दीर्घनिष्पन्नस्य तथात्वे मानाभावात् । अत एव समानाङ्गग्रहणप्रत्याख्यानेन न फलभेदः ॥

## आद्यन्तौ टकितौ । १ । १ । ४६ ॥

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः ॥ भविता । यापयति । पुरस्तादपवादन्यायेन स्थानेयोगत्वस्यायमपवादः । प्रत्ययः परश्चेत्यनेन तु परत्वाद्बाध्यते । तेन चरेष्टादयः परा एव भवन्ति ॥

## मिदचोऽन्त्यात्परः । १ । १ । ४७ ॥

अच इति निर्द्धारणे षष्ठी । अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित् स्यात् ॥ तृणह इति निर्देशादयं बाध्यसामान्यचिन्तया स्थानेयोगत्वप्रत्ययपरत्वयोरपवादः । वनानि । पयांसि । मुञ्चति । रुणद्धि ॥ अन्त्यात्पूर्वो मस्जेरनुषङ्गसंयोगादिलोपार्थम् ॥ * ॥ मग्नः । मग्नवान् । मङ्क्ता । मङ्क्तुम् ॥

## एच इग्घ्रस्वादेशे । १ । १ । ४८ ॥

आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात् ॥ हेशब्दमतिक्रान्तं कुलं अतिहि । चित्रगु । अतिरि । अतिनु ॥

## षष्ठी स्थानेयोगा । १ । १ । ४९ ॥

अनिर्द्धारितसम्बन्धविशेषा षष्ठी स्थानेयोगा बोध्या ॥ स्थानञ्च प्रसङ्गः । अस्तेर्भूः । अस्तेः स्थाने इत्यर्थः । भविता । भवितुम् । ब्रुवो वचिः । वक्ता । वक्तुम् ॥

## स्थानेऽन्तरतमः । १ । १ । ५० ॥

प्रसङ्गे सति सदृशतम आदेशः स्यात् ॥ सादृश्यञ्च चतुर्द्धा । स्थानार्थगुणप्रमाणभेदात् । तत्र स्थानतो दैत्यारिः । अर्थतो वतण्डी चासौ युवतिश्च वातण्ड्ययुवतिः । पुंवद्भावेन वतण्डापत्यवाचिनो वतण्डीशब्दस्य तदपत्यवाची वातण्ड्यशब्दो भवति । वतण्डीत्यत्र वतण्डाच्चेत्यपत्ये यञ् तस्य लुक् स्त्रियामिति लुक् शार्ङ्गरवादित्वान्ङीन् । गुणतः । पाकः । त्यागः । प्रमाणतः । अमुष्मै । अमूभ्याम् । तमप् किम् । वाग्घरिरित्यादौ महाप्राणत्वसाम्येन जायमानः पूर्वसवर्णो वर्गद्वितीयो माभूत् किन्तु नादवान्महाप्राणश्चतुर्थो घ एव यथा स्यादिति । इह स्थाने इत्यनुवर्तमाने पुनः स्थानेग्रहणं तृतीयया विपरिणामेन वाक्यभेदमाश्रित्य प्रसङ्गे सति सम्भवे स्थानत एवान्तरतम इत्यर्थकम् । तदुक्तम् । यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीय इति । तेन चेता स्तोतेत्यादौ प्रमाणत आन्तर्यत्रानप्यकारो गुणो न भवति । किन्तु स्थानत एवान्तर्यवन्तावेकारौकारौ भवतः ॥

## उरण् रपरः । १ । १ । ५१ ॥

ऋ इति त्रिंशतः संज्ञेत्यणुदित्सूत्रे वक्ष्यते । तत्स्थाने यो ऽण् स रपरः सन्नेव प्रवर्तते ॥ तत्रान्तरतम्यात्कृष्णर्द्धिरित्यादौ रेफपरः । तवल्कार इत्यादौ लपरः । कर्ता । कारकः । किरति । द्वैमातुरः । उः किम् । ई च खनः । खेयम् । अण् किम् । सुधातुरकङ् च । सौधातकिः ॥

## अलो ऽन्त्यस्य । १ । १ । ५२ ॥

स्थानषष्ठीनिर्दिष्टस्य यदुच्यते तदन्त्यस्यालः स्थाने बोध्यम् ॥ त्यदादीनामः । सः । यः । स्थानषष्ठीति किम् । आर्द्धधातुकस्येट् तृच

ऋकारात् पूर्वो माभूत्। अलः किम् । पदस्येत्यधिकृत्य विधीयमानं वसुस्रंस्विति दत्वं परमानडुद्भ्यामित्यादावन्त्यस्य पदस्य माभूत् ॥

### ङिच्च । १ । १ । ५३ ॥

ङिदनेकालप्यन्त्यस्य स्यात् ॥ सर्वस्येत्यस्यापवादः । दध्ना । दध्ने । तातङ्स्तु यथा सर्वादेशत्वं तथा तद्विधावेव वक्ष्यते ॥

### आदेः परस्य । १ । १ । ५४ ॥

परस्य यद्विहितं तत्तस्यादेरलो बोध्यम् ॥ अलो ऽन्त्यस्येत्यस्यापवादः । ईदासः । अत्र तस्मादित्युत्तरस्येत्युपतिष्ठते । तेनादेरीकारः । आसीनः । अलः किम् । द्व्यन्तरुपसर्गेभ्योऽप ईत् । द्वीपम् । अत्र पांतसमुदायस्येत्वं माभूत् ॥

### अनेकाल् शित्सर्वस्य । १ । १ । ५५ ॥

स्पष्टम् । अलोऽन्त्यसूत्रापवादः । अस्तेर्भूः । भविता । इदम इश् । इतः । अतो भिस ऐस् अष्टाभ्य औशित्यादावादेः परस्येत्येतदपि परत्वादनेन बाध्यते ॥

### स्थानिवदादेशो ऽनल्विधौ । १ । १ । ५६ ॥

आदेशः स्थानिवत्कार्यं लभते प्रवर्तयति च ॥ तृतीयान्ताद्वतिना स्थानिना तुल्यं वर्तते इति वाक्यार्थलाभात् । यद्रूपवैकल्यादुपदेशाप्रवृत्तौ सत्यामतिदेशो मृग्यते तच्चेद्रूपं स्थान्यलोऽसाधारणं न भवेत् । काभ्याम् । कैः । इहाङ्गत्वातिदेशाद्दीर्घैस्भावौ । आवधिषीष्टेत्यत्र हन्तेर्विधीयमानमात्मनेपदमतिदेशाद्वधेरपि । न हि तत्रालाश्रीयते । रामायेत्यादौ सुपि चेति दीर्घे कर्तव्ये यद्यपि यञादावित्यलाश्रीयते तथापि न तत्र तद्विरहप्रयुक्ता सुपि चेत्यस्याप्रवृ-

त्तिः । यादेशस्य यजादित्वात् । सुप्त्ववैकल्यानुपदेशस्याप्रवृत्तिः । सुप्त्वं चेह यद्यपि ए, इत्यस्मिन्नलि वर्तते तथापि न तदलोऽसाधारणम् । भ्यामादौ समुदाये विश्रान्तेः । एतेनाहदितामहदितमित्यादाविडागमोऽपि व्याख्यातः । प्रत्यासत्त्या च शास्त्रीयकार्ये एव स्थानिवत्त्वम् । तेन नायकसिद्धिरित्याहुः । प्रत्यासत्त्यैव च यद्रूपवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तद्रूपमपि शास्त्रीयमेवापेक्षितम् । तेन जघसिथेत्यादौ तासौ नित्यानिट्त्वस्याशास्त्रीयत्वेन तदनतिदेशादचस्तास्वदिति न भवति । इह कार्यातिदेशपक्षे शास्त्रातिदेशपक्षेण तुल्यफलत्वाय यद्रूपवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तद्रूपातिरिक्तसर्वरूपनिमित्तकत्वमतिदेशस्यापि बोध्यम् । अत एव सर्वस्मै इत्यादौ न दीर्घः । वत्किम् । स्थान्यादेशस्य संज्ञा मा विज्ञायीति स्वाश्रयमपि यथा स्यात् । आङो यमहन इत्यात्मनेपदमुभयत्रापि भवति । आहत । आवधिष्ट । आजघ्ने । न चैवं तण्डुलानित्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वेऽपि स्वाश्रयाप्रत्ययान्तत्वात्प्रातिपदिकत्वं स्यादिति वाच्यम् । अतिदेशस्वभावेनातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावात् । प्रत्ययान्तत्वाप्रत्ययान्तत्वयोर्विरोधात् । नचाप्रत्यय इत्यस्य पर्युदासत्वस्य भाष्ये उक्तत्वेनाशास्त्रीयकार्यत्वात्स्थानिवत्त्वमेव कथमिति वाच्यम् । पर्युदासलभ्याशास्त्रीयस्य शास्त्रीयत्वस्वीकारात् शास्त्रतात्पर्यविषयत्वात् । आदेशग्रहणं किम् । आनुमानिकस्याप्यादेशस्य स्थानिवद्भावो यथा स्यात् । एतः । पचतु । अनल्विधाविति किम् । तेन, तस्मात्, तस्य, तस्मिंश्च, विधौ माभूत् । तत्र अला विधौ । यथा व्यूढोरस्केन । अत्र सकारस्य स्थानिवत्त्वेन विसर्गवदट्त्वमाश्रित्याड्व्यवाये इति णत्वं प्राप्तम् । अलः परस्य । द्यौः । पन्थाः । हल्ङ्यादिलोपो न । अलो विधौ । द्युकामः ।

वलि लोपो न। अलि विधौ। यजेः क्तः। क्त इष्टः। हशिचेत्युत्वं न। अनल इत्युक्तेऽपि सम्बन्धसामान्ये षष्ठ्या प्रागुक्तानेकविभक्त्यर्थसंग्रहेऽपि विधिग्रहणं वलादेरित्यादावप्राधान्येनाप्यलाश्रयणे निषेधार्थम्। तेन प्रपठ्येत्यादौ वलादिलक्षण इण्न। नन्वेवमनुबन्धाश्रयकार्येष्वनल्विधाविति निषेधात्प्रदीव्येत्यादौ क्त्वातिदेशो न स्यादिति चेन्न। अनेकान्ता अनुबन्धा इति पक्षे तेषां स्थान्यल्त्वाभावात्। एकान्तपक्षेऽपि अन्तरङ्गेण लोपेन आदेशसम्बन्धात्प्रागेव तेषामपहारात्। न ल्यपीति लिङ्गाच्च। नन्वेवमपि सामान्यातिदेशे विशेषानतिदेशात्क्त्वातिदेशो न स्यादेव। तद्धि क्त्वाविशेषधर्मः। सेट्त्वं तदभावादिति चेन्न। न ल्यपीति लिङ्गादेव चात्र सूत्रे विशेषातिदेशस्याप्यङ्गीकारात्॥

## अचः परस्मिन् पूर्वविधौ। १। १। ५७॥

अल्विध्यर्थमिदम्। परनिमित्तोऽजादेशः स्थानिवत्स्यात्स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये॥ अत्र सूत्रे भावाभावयोरुभयोरप्यतिदेशो भवति। नपदान्तसूत्रे यलोपदीर्घादिग्रहणाल्लिङ्गात्। निगाल्यते। गणयति। अचः किम्। आगत्य। मलोपस्य स्थानिवत्वाद्ध्रस्वस्येति तुङ् न स्यात्। परस्मिन्निति किम्। आदीध्ये। दीधीङ उत्तमैकवचने टेरेत्वस्यापरनिमित्तत्वाद्यीवर्णयोर्दीधीवेव्योरिति लोपो न भवति। पूर्वविधाविति किम्। नैधेयः। आतो लोपो ढ्वाजलक्षणे ढक्प्रत्ययविधौ न स्थानिवत्॥

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु। १। १। ५८॥

पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजा-

देशो न स्थानिवत्स्यात् ॥ कानि सन्ति । कौ स्तः । इत्यचास्तेरल्लोपस्य स्थानिवत्त्वेन यणावादेशौ प्राप्तौ पदान्तविधौ तन्निषेधान्न स्तः । द्विर्वचने । सुद्ध्युपास्यः । वरे । यायावरः । यश्च यङ इति वरच् अतोलोपः । स चातो लोप इटि चेत्यालोपे कर्तव्ये न स्थानिवत् । यलोपे । यातिः । यातेर्यङन्तात् क्तिच् । अतो लोपः । यलोपः । अल्लोपस्य स्थानिवत्त्वादातो लोपः । न च पुनरालोपः शङ्क्यः । चिणो लुङ्न्यायेनालोपस्यासिद्धत्वात् । स्थानिवद्भावाच्च । स्वरे । चिकीर्षकः । सनोऽतो लोपः । लितीति ककारेकारस्योदात्तत्वे कर्तव्ये न स्थानिवत् । सवर्णानुस्वारयोः । शिण्ढि । शिंषन्ति । दीर्घे । प्रतिदीव्नः जशि । सग्धिश्च मे । अदनं ग्धिः । अदेः क्तिनि बहुलञ्छन्दसीति घस्लादेशः । घसिभसोर्हलि चेत्युपधालोपः । झलो झलीति सलोपः । धत्वम् । घस्य जश्त्वम् । सहस्य स इति सूत्रात्स इत्यनुवर्तमाने समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केष्विति सूत्रेण सः । चरि । जक्षतुः । स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदिति वक्तव्यम् ॥ * ॥ अन्यस्तु स्थानिवदेव । अचिनीकोऽखट्वक, इत्यादौ चितेः कपीति दीर्घस्य केऽणः, आपोऽन्यतरस्यामिति ह्रस्वस्य च स्थानिवत्त्वात् ह्रस्वान्ते ऽन्त्यात्पूर्वमिति क्रमेण प्रवर्तते न च प्रवर्तते । किर्योर्गिर्योरित्यादौ व्युत्पत्तिपक्षे हलि चेति दीर्घः प्राप्तो यणः स्थानिवत्त्वान्न भवति । वाय्वोरित्यादौ वलि लोपो न भवति ॥ क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् ॥ * ॥ अत्र क्वावित्यस्य क्वौ विधिं प्रति न स्थानिवत् क्वौ लुप्तं च न स्थानिवदित्यर्थः । लवमाचक्षाणो लौः । अत्र णिचि यट्टिलोपो यश्च क्वौ णिलोपस्तदुभयमपि क्वौ विधिमूठं प्रति न स्थानिवत् । एत्येधत्यूठ्स्विति वृद्धिः । कुमारीमिच्छन्ब्राम्हणः कुमारी । क्यजन्तात्कर्तरि क्विप् । अल्लोपयलोपौ । हल्ङ्याब्भ्यो दीर्घादिति सुलोपः । अल्लोपस्य

स्थानिवत्त्वाद्यण् प्राप्तः । क्वौ लुप्तं न स्थानिवद्दिति न भवति । किञ्च सखीयतेः क्विप् ङस् सख्युः । इहाल्लोपे यलोपेऽल्लोपस्य स्थानिवत्त्वात्परत्वात्क्विपो लोपं बाधित्वा यण् स्यात् । ततः क्विनिमित्तके यलोपे सख इति स्यात् । ङन्निमित्तकस्य तु बहिरङ्गत्वेनासिद्धत्वान्न लोपः । स्थानिवत्त्वे तु व्यवधानात्तन्निमित्तकोऽपि न स्यात् । अत एव ख्यत्यात्सूत्रे क्वौ लुप्तं न स्थानिवद्दिति यणं परिजहार कैयटः । किञ्च गोमत्यतेः क्विप् गोमान् । इहाल्लोपस्य स्थानिवत्त्वात्सर्वनामस्थानपरत्वाभावान्नुम्न स्यात् । न चाधातुग्रहणस्याधातुभूतपूर्वस्यापि नुमर्थताया वक्ष्यमाणत्वेन तत्सामर्थ्यात्स्थानिवत्त्वकृतव्यवाये सत्यपि नुम् स्यादिति वाच्यम् । गोमततेः क्विपि गोमानित्यादौ चरितार्थत्वादिति दिक् । तस्मात्क्वौ लुप्तं नेत्येव शरणम् । इदं पुनरिहावधेयम् । क्वौ विधिं प्रतीत्येव सार्वत्रिकम् । क्वौ लुप्तमिति तु क्वाचित्कम् । अन्यथा पिपठिषतेरप्रत्यये ऽल्लोपे नपुंसकबहुवचने शौ पिपठिषीत्यत्राल्लोपस्य स्थानिवत्त्वनिषेधाज्झल्लक्षणनुमापत्तेः । अत एव कैयटोऽपि दीधीवेवीटामित्यत्र क्वौ विधिम्प्रतीत्यर्थो व्यवस्थितो न तु क्वौ लुप्तं न स्थानिवद्दित्याह । लुगित्यस्य लुका लुप्तं न स्थानिवदित्यर्थः । पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुः । आर्हादिति ठक् । तस्याध्यर्द्धपूर्वेति लुक् । लुक्तद्धितलुकीति ङीषो लुक् । तस्य स्थानिवत्त्वाद्यण् प्राप्तः । लुक् न स्थानिवदिति न भवति । तथा पञ्चेन्द्राण्योऽग्नाय्यश्च देवता अस्य पञ्चेन्द्रः । पञ्चाग्निः । सास्य देवतेत्यण् । तस्य द्विगोर्लुगनपत्य इति लुक् । ततो ङीषो लुक् । तस्य स्थानिवत्त्वान्ङीषा सन्नियुक्तः आनुक् ऐकारश्च श्रूयेत । न च सन्नियोगशिष्टन्यायेन निवृत्तिः । परतद्धितलुक्निमित्ताया ङीष्निवृत्तेः पूर्वयोरानुगैकारयोर्निवृत्तौ कर्तव्यायामचः परस्मिन्निति स्थानिवत्त्वादिति स्पष्टं

शब्दकौस्तुभे । समानायामाकृतौ भाषितपुंस्कत्वाभावाद्गुणोऽयत्वाद्वृ-त्याभावाच्च पुंवद्भावो नास्ति । अथवा यस्येति लोपप्रसङ्गः । उप-धात्वे कर्तव्ये न स्थानिवत् । पारिखीयः । परिखाशब्दाच्चातुरर्थि-केऽपि कृते आकारलोपस्य स्थानिवत्वात्पारिखे भव इति वृद्धाद्के-कान्तखोपधादिति छो न स्यात् । न चैवं पटयतीत्यादौ वृद्धिः स्यादिति वाच्यम् । यत्रोपधासंज्ञामुपजीव्य प्रत्ययो विधित्सितस्तत्रै-वायं निषेध इति भाष्ये स्थितत्वात् । अतएव चङ्परनिर्ह्रासग्रहणं सार्थकम् । चङ्परे णौ यो ह्रस्वः स चङ्परनिर्ह्रासः तत्र न स्था-निवत् । वादितवन्तं प्रयोजितवानवीवदद्वीणां परिवादकेन । वारि स्याव्यद्वीशरत् । न चेह नाग्लोपीति निषेधः शङ्क्यः । परत्वाद् वृद्धौ सत्यां टिलोप इत्यभ्युपगमेनाग्लोपित्वाभावात् । अत एव हलकले-त्यदन्तनिपातनं सार्थकम् । कुत्वे न स्थानिवत् । अर्चतेरौणादिकः कप्रत्ययः । अर्कः । पाचयतेः क्तिच् । पाक्तिः । चोः कुरिति कुत्वे णिलोपो न स्थानिवत् । इदन्तु पूर्वत्रासिद्धे न स्थानिवदित्यनेन गतार्थम् । पूर्वत्रासिद्धे च न स्थानिवदिति वक्तव्यम् ॥ * ॥ याय-ज्यतेर्यायष्टिः । याजयतेर्याष्टिः । द्विर्वचनादीनि च न वक्तव्यानि भवन्ति वरे यलोपस्वरवर्जम् । तस्य दोषः संयोगादिलोपणत्व-लत्वेषु ॥ * ॥ तस्य पूर्वत्रासिद्धेचेत्यस्यैषु दोषः । प्रतिषेधो वक्तव्य इत्यर्थः । वास्यर्थम् । काक्यर्थम् । स्कोरिति लोपो न । निगार्यते । निगाल्यते । अचि विभाषेति लत्वं भवति । माषवपनी । समासान्तस्य नकारस्य णत्वं विधीयमानमल्लोपस्य स्थानिवत्वनिषेधान् ङीबुत्पत्तेः प्राक् समासविधानात् प्राप्नोति ॥

## द्विर्वचनेऽचि । १ । १ । ५९ ॥

द्विवचने इत्यावर्तते । तत्रैकं लक्षणादिना द्विर्वचननिमित्ते इत्यर्थकमचीत्यनेन समानाधिकरणम् । अपरं कालावधारणार्थम् । द्वित्वनिमित्ते ऽचि परे ऽच आदेशो न स्याद्द्वित्वे कर्तव्ये ॥ कृते तु द्वित्वे यथायथमादेशः स्यादेवेत्यर्थ इत्याहुः । चक्रतुः । चक्रुः । द्वित्वनिमित्ते किम् । दुद्यूषति । न ह्यूठ् द्वित्वनिमित्तम् । नन्वेवं चक्रतुरित्यादावपि यण् स्यादेव । अतुसो द्वित्वनिमित्तत्वेप्यकारस्यातथात्वात् । सूत्रन्तु चक्रे इत्यादौ सावकाशमिति चेत्सत्यम् । इह निमित्तशब्देन साक्षाद्वा समुदायघटकतया वा द्वित्वप्रयोजकत्वमाश्रीयते न तु साक्षादेवेत्याग्रहः । लक्ष्यानुरोधात् । तदाहुः । तद्वाबभावितामात्रेणेह निमित्तत्वमिति । अचि किम् । जेघ्रीयते । देध्मीयते । अधिजगे । जग्ले । मम्ले । किञ्च भसेः क्सौ घसिभसोर्हलीत्युपधालोपस्य निषेधो माभूत् । अन्यथा द्वित्वे बप्स्वानिति स्यात् । इष्यते । अचः किम् । असूषुपत् । इह स्वापेश्चङीति सम्प्रसारणे निषिद्धेऽभ्यासे उवर्णो न श्रूयेत । न च द्वित्वे कृते पुनः सम्प्रसारणम् । न सम्प्रसारणे इति निषेधात् । किञ्च ईजाते, ईजाथे, इत्यादौ सम्प्रसारणे निषिद्धे द्वित्वोत्तरमभ्यासे संप्रसारणं न स्यात् । न सम्प्रसारणे इति निषेधात् । न च लावस्थायामेव सम्प्रसारणमिति वाच्यम् । कित्वाभावात् । न च कित्वमपि प्रवर्ततामिति वाच्यम् । अन्तरङ्गैस्तिबादिभिर्बाधितत्वात् ॥

## अदर्शनं लोपः । १ । १ । ६० ॥

स्थाने इत्यनुवर्तते । तदर्थश्च प्रसङ्ग इति । शास्त्रतोऽर्थतश्च प्रसक्तस्यानुच्चारणं लोपसंज्ञं स्यात् । अर्थस्यैषा संज्ञा न तु शब्दस्य । महासंज्ञाकरणसामर्थ्यात् । गोधेरः । पचेरन् । प्रासादात्प्रेक्षते । संज्ञाप्रदेशा लोपो व्योर्वलि ल्यब्लोपे कर्मणीत्येवमादयः ॥

## प्रत्ययस्य लुक्श्लुलुपः । १ । १ । ६१ ॥

अनेकसंज्ञाकरणसामर्थ्यानन्त्रावृत्त्यादाश्रित्य तद्भावितसंज्ञा इह विज्ञायन्ते । अतो न सङ्करः । लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् ॥ संज्ञाप्रदेशा लुक्तद्धितलुकि जुहोत्यादिभ्यः श्लुः जनपदे लुबिति । पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुः । जुहोति । पञ्चालानां निवासो जनपदः पञ्चालाः । विधिप्रदेशेषु भाविसंज्ञाविज्ञानान्नान्योन्याश्रयः ॥

## प्रत्ययलोपे प्रत्ययलक्षणम् । १ । १ । ६२ ॥

प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् ॥ अतृणेडित्यत्र हलादौ पिति सार्वधातुके विहित इम् लुप्तेऽपि तस्मिन् भवति । स्थानिवत्सूत्रेण तु न सिध्यति । अलिवधित्वात् । वर्णाश्रये नास्ति प्रत्ययलक्षणमिति तु वर्णप्राधान्यविषयकम् । स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणमित्येतत्सामर्थ्येन यत्र प्रत्ययः प्राधान्येनाश्रीयते तत्रैव प्रत्ययलक्षणं भवति न तु वर्णप्राधान्ये इत्येतत्फलितत्वात् । तेन गवे हितं गोहितमित्यादाववादिकं नेति दिक् ॥

## न लुमताऽङ्गस्य । १ । १ । ६३ ॥

लुक् श्लु लुप् मते लुमन्तः । लुमता लुप्ते प्रत्यये यदङ्गं तस्य यत्कार्यं प्रत्ययाश्रयमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः ॥ गर्गाः । मृष्टः । जुहुतः । इह यञ्शपोर्लुमता लुप्तयोरङ्गस्य गुणवृद्धी न भवतः । लुमतेति किम् । कार्यते हार्यते । अङ्गस्येति किम् । पञ्च । सप्त । **उत्तरपदत्वे चापदादिविधौ प्रतिषेधः ॥ * ॥ परमवाचा । परमगोदुहा । परमलिहा । परमदण्डिना । परमदिवा । परमकुमार्या । इहान्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्येवोत्तरखण्डस्यापि पदसंज्ञायां चोः**

कुः दादेर्धातोर्घः होढः न लोपः प्रातिपदिकान्तस्य दिव उत् इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चेत्येते विधयः प्राप्ताः प्रत्ययलक्षणप्रतिषेधादपदत्वान्न भवन्ति। अपदादिविधौ किम्। दधिसेचौ। इह षत्वनिषेधे कर्तव्ये पदत्वमस्त्येव। कुत्वे तु न। ननु भवेदेवं दध्नः सेचाविति षष्ठीसमासे। उपपदसमासे तु प्राक्सुबुत्पत्तेः समासविधानात्सेच्शब्दस्य पदत्वाभावात्स्यादेव षत्वमिति चेत्। अत्राह कैयटः। सोपपदात्क्विब् नास्ति। अनभिधानात्। अतो दधिषेचावित्यादि न भवत्येवेति। अन्ये त्वाहुः। प्राक्सुबुत्पत्तेः समासविधानेऽपि पदादादिः पदादिरिति पञ्चमीसमासेनात्र न षत्वमितीति दिक्। शब्दकौस्तुभे तु उपपदसमासोऽपि सुबुत्पत्त्यनन्तरमेवात्रोपगन्तव्यः। घनक्रीतेत्यादिसिद्धये तस्यानित्यताया आवश्यकत्वादित्यप्युक्तम्॥ बहुच्पूर्वस्य चापदादिविधौ॥ * ॥ बहुसेचौ। बहुसेचः। इहापि षत्वनिषेधे कर्तव्ये पदत्वमस्त्येव। कुत्वे तु न॥

## अचोऽन्त्यादि टि। १। १। ६४॥

अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात्॥ पचते। पचेते। टिप्रदेशाष्टित आत्मनेपदानां टेरित्यादयः॥

## अलोऽन्त्यात्पूर्व उपधा। १। १। ६५॥

अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात्॥ पाचयति। भेदयति। उपधाप्रदेशा अत उपधाया इत्यादयः॥

## तस्मिन्निति निर्दिष्टे पूर्वस्य। १। १। ६६॥

सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम्। इको यणचि। दध्यत्र। मध्वत्र॥

## तस्मादित्युत्तरस्य। १। १। ६७॥

पञ्चमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य बोध्यम् ॥ तिङ्ङतिङः । अग्निमीळे । इह न भवति । ईळे अग्निम् ॥

**स्वं रूपं शब्दस्याशब्दसंज्ञा । १ । १ । ६८ ॥**

शब्दस्य स्वं रूपं संज्ञि शब्दशास्त्रे या संज्ञा तां विना ॥ अग्नेर्ढक् । आग्नेयम् । अशब्दसंज्ञेति किम् । उपसर्गे घोः किः । दाधाभ्यो यथा स्यात् । घुधातोः शब्दार्थान्माभूत् । शब्दः शब्दशास्त्रं तत्र संज्ञेति सप्तमीसमासः न तु शब्दस्य संज्ञेति । अन्यथा कर्मसंज्ञादेरर्थसंज्ञात्वेन निषेधाप्रवृत्तौ कर्मण्यणित्यादौ स्वरूपग्रहणापत्तेः ।

**अणुदित्सवर्णस्य चाप्रत्ययः । १ । १ । ६९ ॥**

अत्रैवाण् परेण णकारेणेत्युक्तम् । प्रतीयते विधीयते इति प्रत्ययः । अविधीयमानोऽण् उदिच्च सवर्णस्य संज्ञा स्यात् ॥ अस्य च्वौ । शुक्ली स्यात् । माली स्यात् । एरनेकाचोऽसंयोगपूर्वस्य । चिच्यतुः । निन्यतुः । ॠदोरप् । यवः । स्तवः । लवः । पवः । उरण् रपरः । कर्ता । किरति । कु चु टु तु पु एते उदितः । कुहोश्चुः । चकार । जगाद । अप्रत्यय इति निषेधस्तु उदित्सु न प्रवर्तते । उदित्करणसामर्थ्यात् । अप्रत्यय इति किम् । विधीयमानानां प्रत्ययादेशागमानां सवर्णग्राहकत्वं माभूत् । अत इञ् । इदम इश् । आर्द्धधातुकस्येट् । भुवो वुक् । अम्सम्बुद्धौ । तदेवम इत्यष्टादशानां संज्ञा । तथेकारोकारौ ॠकारस्त्रिंशतः । एवं ऌकारोऽपि । एचो द्वादशानाम् । एदैतोरोदौतोश्च न मिथः सावर्ण्यम् । ऐऔजिति सूत्रारम्भसामर्थ्यात् । तेनैचश्चतुर्विंशतेः संज्ञाः स्युरिति नापादनीयम् । अननुनासिका यवला द्वयोः रहौ तु स्वस्यैव । यद्यपि हकार आकारस्य संज्ञेति प्राप्तम् । तथापि तत्परिहाराय नाज्झलावित्यत्रैव यत्नः कृतो न विस्मर्तव्यः ॥

## तपरस्तत्कालस्य । १ । १ । ७० ॥

तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात् । तेन अत् इत् उत् इत्यादयः षण्णां षण्णां संज्ञाः । ऋदिति द्वादशानाम् । अतो भिस ऐस् । वृक्षैः । तत्कालस्येति किम् । खट्वाभिः । पञ्चमीसमासोदाहरणन्तु वृद्धिरादैजिति ॥

## आदिरन्त्येन सहेता । १ । १ । ७१ ॥

अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् ॥ अच् । अण् । हल् । सुप् । तिङ् । इता सहित आदिस्तदुत्तरेषामपि ग्राहको माभूत् एवमन्त्येनेता सहितः पूर्वेषां संज्ञा माभूदित्यन्त्यादिग्रहणम् । इतेति किम् । रप्रत्याहारो यथा स्यात् । स ह्यनन्त्येनापि अनुनासिकप्रतिज्ञासामर्थ्याद्भवति । न चैतदितेत्येतस्य विरहे लभ्यते ॥

## येन विधिस्तदन्तस्य । १ । १ । ७२ ॥

येन शब्देन विधिर्विधीयते स तदन्तस्य आत्मान्तस्य समुदायस्य संज्ञा स्यात् स्वस्य च रूपस्य ॥ अन्येन चान्यस्य विधिर्भवति । यथा चैत्रस्य संग्रामं हस्त्यश्वादिभिर्विधत्ते । एवमचो यदिति अचा धातोर्यतं विधत्ते इत्यजन्ताद्धातोर्यत्प्रत्ययो भवतीत्यर्थः । चेयम् । जेयम् । अयम् । एरच् । चयः । जयः । अयः ॥ समासप्रत्ययविधौ प्रतिषेधः ॥ * ॥ तेन द्वितीया श्रितेति कृष्णश्रित इत्यत्रैव भवति न तु कृष्णं परमश्रित इत्यादावपि । तथा नडादिभ्यः फक् । नाडायनः । नेह । सौत्रनाडिः । अस्यापवादमाह ॥ उगिद्वर्णग्रहणवर्जम् ॥ * ॥ महान्तमतिक्रान्ता अतिमहती । उगिदन्तत्वान्ङीप् । अत इञ् । दाक्षिः । अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्त-

विधिं प्रयोजयन्ति ॥ अन् । राज्ञेत्यर्थवता । साम्नेत्यनर्थकेन । इन् । दण्डीत्यर्थवता । वाग्मीत्यनर्थकेन । अस् । सुपया इत्यर्थवता । सुस्रोता इत्यनर्थकेन । मन् । सुशर्मेत्यर्थवता । सुप्रथिमेत्यनर्थकेन । तदन्तविधेर्बाधनिक्रमपवादमाह वार्तिककारः ॥ यस्मिन्विधिस्तदादावल्ग्रहणे ॥ * ॥ अचि श्नुधात्वितीयङुवङ् च यथेह भवति श्रियौ भ्रुवाविति । एवमिहापि सिध्यति श्रियः भ्रुव इति । तदन्तविध्यपवादस्तदादिविधिरतो विशेषणेनैव ॥

## वृद्धिर्यस्याचामादिस्तद्वृद्धम् । १ । १ । ७३ ॥

यस्य समुदायस्यावयवानामचां मध्ये प्राथमिकोऽज् वृद्धिसंज्ञकः स वृद्धसंज्ञकः स्यात् ॥ आम्रगुप्तीयः । वृद्धाच्छः । अचामिति जातौ बहुवचनम् । तेन द्वयोरपि भवति । शालीयः । एकस्यापि भवति व्यपदेशिवद्भावात् । ज्ञा ब्राह्मणी तस्याः अयं ज्ञीयः ॥ वा नामधेयस्य ॥ * ॥ पौरुषेयं नाम तस्य वृद्धसंज्ञा वा स्यादित्यर्थः ॥ उभयत्र विभाषेयम् । देवदत्तादीनामप्राप्ते वामनादीनाञ्च प्राप्ते आरम्भात् । देवदत्तीयाः । दैवदत्ताः । "विधाय मूर्तिं कपटेन वामनीमिति" श्रीहर्षः ॥ गोत्रोत्तरपदस्य च ॥ * ॥ नित्यं वृद्धसंज्ञा वक्तव्येति शेषः ॥ कम्बलचारायणीयाः । ओदनपाणिनीयाः । घृतरौढीयाः । कम्बलप्रियस्य चारायणस्य शिष्या इत्यादिरर्थः । ननु पाणिनेश्छात्राः पाणिनीया इति न सिद्ध्यति । वृद्धाच्छं बाधित्वा इञश्चेत्यणः प्रसङ्गात् । न च छे विवक्षिते यूनि लुगितीञो लुकि सति नायमिञन्त इति वाच्यम् । प्रत्ययलक्षणेनेञन्तत्वानपायात् । नैतदस्ति । इञश्चेत्यत्र हि कण्वादिभ्यो गोत्रे इत्यतो गोत्रग्रहणमनुवर्तते । तच्च तत्रापत्याधिकारादन्यत्वेऽपि स्वरितत्वप्रतिज्ञानादिना परिभा-

षिकमेव गृह्यते न तु लौकिकमिति सिद्धान्तः । पाणिनिरिति च यूनीञ् न तु गोत्रे। रूढस्यापत्यं रौढिः । अत इञ् । अनन्तरे गोत्रे वा । न चैवमिञश्चेत्यणप्रसङ्गः । न ह्यचः प्राच्यभरतेष्विति निषेधात् । स्यादेतत् । यदि गोत्रोत्तरपदस्य वृद्धसंज्ञा विधीयते तर्हि पिङ्गलकाण्वस्य छात्राः पैङ्गलकाण्वाः इत्यत्र वृद्धाच्छः स्यात् इष्यते तु कण्वादिभ्यो गोत्रे इत्यण् । कण्वो गर्गादिः । सत्यम् । अत एवापरितोषादुक्तं वार्तिककृता। गोत्रान्ताद्वा असमस्तवदिति। शैषिकाधिकारे प्राग्दीव्यतोऽणित्यत्र वा इत्ययमतिदेशः कर्तव्य इत्यर्थः । अपत्याधिकारादन्यत्वाच्च लौकिकगोत्रग्रहणादोदनपाणिनीया इत्यादि सिध्यतीति भावः। किमविशेषेण । नेत्याह । जिह्वाकात्यहरितकात्य वर्जम् । कतशब्दो गर्गादिः । जिह्वाचपलो हरितवर्णश्च कात्यः तस्य छात्रा इत्यर्थेऽणेव भवति । जैह्वाकाताः । हारितकाताः ॥

## त्यदादीनि च । १ । १ । ७४ ॥

वृद्धसंज्ञानि स्युः ॥ त्यदीयम् । तदीयम् । अदसीयम् । इदमीयम् । किमीयम् । त्वादायनिः । मादायनिः । उदीचां वृद्धादिति फिञ् ॥

## एङ् प्राचां देशे । १ । १ । ७५ ॥

यस्याचामादिरिति मण्डूकप्लुत्याऽनुवर्तते । एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने ॥ एणीपचनीयः । ऐणीपचनः । गोनर्दीयः । गौनर्दः । भोजकटीयः । भौजकटः । एङिति किम् । आहिच्छत्रः । कान्यकुब्जः । विधेयसंज्ञासम्बन्धबलेन प्राग्ग्रहणमाचार्यनिर्देशार्थम् । व्यवस्थितविभाषा चेयम् । तेन क्रोडदेवदत्तशब्दयोरप्राग्देशवाचिनोर्न वृद्धसंज्ञा। तेन क्रौडो दैवदत्त इत्यणेव भवति । प्राग्देशवाचिनस्तु देवदत्तशब्दस्य भवत्येव वृद्धसंज्ञा। ततः काश्या-

दित्वाद्वृद्धलक्षणौ ठञ्ञिठौ भवतः ॥ शैषिकेष्विति वक्तव्यम् ॥ * ॥ सैपुरिकी। सैपुरिका । स्कौनगरिकी । स्कौनगरिका । सेपुरं स्कोनगरञ्च वाहीकग्रामौ तत्र वृद्धत्वाद्वाहीकग्रामेभ्यश्चेति ठञ्ञिठौ भवतः । शैषिकेष्विति वचनादपत्ये वृद्धलक्षणः फिञ् न । विकारे च नित्यं वृद्धेति मयडन । तदेवं कुणिमतं भाष्यमतञ्चानुसृत्य प्राग्ग्रहणमाचार्यनिर्देशार्थमिति व्याख्यातम् । जयादित्यस्तु प्राचि देशे ये सन्ति ते प्राञ्चः पुरुषास्तेषां यो देशस्तदभिधाने इति व्याचख्यौ । प्राचामित्यस्य श्रूयमाणदेशविशेषणत्वे सम्भवति अध्याहर्तव्येन मतेनेत्यनेनान्वयो न कल्प्य इति तस्याशयः । अस्मिन्पक्षे वाहीकग्रामे दैवदत्त इत्यत्रावृद्धत्वादेव ठञ्ञिठौ न भवत इति स्पष्टम् । किन्तु सैपुरिकीत्यादि भाष्योदाहृतं वचनेनैव साधनीयं स्यादिति दिक् । देशे इति किम् । गोमती नाम प्राग्देशनदी तत्र भवा मत्स्याः गौमताः । देशग्रहणेन नदी न गृह्यते । नदीदेशोऽग्रामा इति पृथगुपादानाल्लिङ्गात् । प्रागादिदेशविभागस्त्वित्थम् । शरावती नाम नदी उत्तरपूर्वाभिमुखी तस्या दक्षिणपूर्वस्यान्दिशि व्यवस्थितो देशः प्राग्देशः । उत्तरापरस्यामुदग्देशः । केचित्तु ऐशानीतो नैर्ऋत्यां पश्चिमाब्धिगामिनी शरावतीति वदन्ति । उभयथापि प्रागुदक्स्वरूपे न विवादः । वाहीकदेशस्तु प्राग्बहिर्भूतः । यत्तूभयबहिर्भूत इति तन्न । अव्ययात् त्यबिति सूत्रे भाष्यकारेण शाकलनाम्नो ग्रामस्योदीच्यवाहीकोभयरूपताभ्युपगमात् । एतच्च विवेचनं वाहीकग्रामेभ्यश्चेत्यादावुपयोक्ष्यते इति सर्वं सुस्थम् ॥

इत्योरम्भट्टेन विरचितायां व्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः ॥



# अथ प्रथमाध्यायस्य द्वितीयः पादः ।

## गाङ्कुटादिभ्यो ऽञ्णिन्ङित् । १ । २ । १ ॥

गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङिद्वत्स्युः ॥ अध्यगीष्ट । अध्यगीषत । विभाषा लुङ्लृङोरितीङो गाङ् । इह विशेषणार्थ एव हि गाङादेशे ङकार इति गाङ् लिटीति सूत्रे वक्ष्यते । कुटिता । कुटितुम् । अञ्णित् किम् । कोटः । घञ् । चुकोट । अथ कथं लिखितुं स्वयमेव लिखिष्यतइति । न च कणवादिभ्य इत्यत्रेव षष्ठीतत्पुरुषबहुव्रीह्योरेकशेषेण लिखेरपि कुटस्यादितयाच संग्रह इति वाच्यम् । शकुनिष्वालेखने इत्यादिप्रयोगविरोधात् । हरदत्तस्तु संज्ञापूर्वकविधेरनित्यतया समादधे । चुकुटिषतीत्यादौ सनो ङित्वातिदेशेऽपि आत्मनेपदं यथा न भवति तथा तद्विधावेव स्फुटीभविष्यति ॥

## विज इट् । १ । २ । २ ॥

विजेः पर इडादिः प्रत्ययो ङिद्वत् ॥ उद्विजिता । उद्विजितुम् । इट् किम् । उद्वेजनम् । इह वृद्धिर्यस्येति सूत्रान्मण्डूकप्लुत्या यस्यादिरित्यनुवर्तते । तेन इडादिः प्रत्ययो लभ्यते न तूक्तमेकवचनमिट् । तथा हि सति विजिषीयेत्यत्रैव स्यात् । ओविजी भयचलनयोरित्यस्य रुधादेस्तुदादेश्चेह ग्रहणं न तु विजिर् पृथग्भावे इत्यस्य जुहोत्यादेर्व्याख्यानादिति बोध्यम् । यत्तु तस्यानिट्त्वादित्याहुः । तन्न । विवेजिथेति थलीट्सम्भवात् । न च कित्वेन गतार्थता । तत्र पित्वेन कित्वाभावात् ॥

## विभाषोर्णोः । १ । २ । ३ ॥

इडादिः प्रत्ययो ङिद्वा स्यात् ॥ ऊर्णुविता । ऊर्णविता । इट् किम् । ऊर्णवनीयम् ॥

## सार्वधातुकमपित् । १ । २ । ४ ॥

अपित्सार्वधातुकं ङिद्वत्स्यात् ॥ कुरुतः । कुर्वन्ति । चिनुतः । चिन्वन्ति । पचेते पचेथे इत्यादौ ङितो यत्कार्यमातो ङित इतीय् सोऽपि भवति । नन्वेवं चिनुत इत्यादौ तास्यनुदात्तेदिति स्वरापत्तिरिति चेन्न । उपदेशग्रहणस्योभयसम्बन्धेन ङिदुपदेशाददुपदेशाच्चेति भाष्ये व्याख्यातत्वात् । अन्हिङोरिति पर्युदासेनोपदेशे ङकारवतो ग्रहणाद्वा । सार्वधातुकं किम् । कर्ता । हर्तुम् । अपित्किम् । करोति ॥

## असंयोगाल्लिट् कित् । १ । २ । ५ ॥

असंयोगात्परोऽपिल्लिट् कित् स्यात् ॥ निन्यतुः । बिभिदतुः । अपित्किम् । बिभेद । असंयोगात्किम् । सस्रंसे । ङित्वे प्रकृते कित्करणं यजादीनां कितीति संप्रसारणार्थम् । ईजतुः । ईजुः । पूर्वत्रापि कित्वं कुतो न कृतमिति चेत् । वक्तः वक्थ इत्यत्र संप्रसारणापत्तेः ॥ ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन ॥ * ॥ कित्वस्यावकाशः । ईजतुः । गुणस्य । चेतति । ववृते ववृधे इत्यत्र पूर्वविप्रतिषेधात्कित्वम् ॥

## इन्धिभवतिभ्यां च । १ । २ । ६ ॥

आभ्यां लिट् कित्स्यात् ॥ समीधे दस्यु हन्तमम् । पुत्र ईधे अथर्वणः । बभूविथ । अत्र वार्तिकम् ॥ इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमिति । अयं

भावः । इन्धेर्भाषायामिजादेश्चेत्यामा भाव्यम् । छन्दसि त्वमन्त्रे इति प्रतिषेधाद्यद्यप्याम्नास्ति तथापि छन्दस्युभयथेति लिटः सार्वधातुकत्वे ङित्वात्समीधे इति नलोपः । श्नमभावस्त्वार्धधातुकत्वाद्व्यत्ययाद्वा । भुवोऽपि वुक् नित्यत्वादेव गुणवृद्धी बाधिष्यते इति । एवैव सूत्रकृतोऽपि गतिः । अन्यथा बभूवेत्यत्रानिग्लक्षणायावृद्धेर्निषेधासंभवेन वुको नित्यतां विना गत्यन्तराभावात् । कित्वन्त्विहं बभूवेत्यत्र णित्वाभावपक्षे थलि च चरितार्थमिति न तत्सामर्थ्यादनिग्लक्षणाया अपि वृद्धेर्निषेधं प्रत्याशा । अत एव च यङ्लुकि णल्थलोः श्तिपा निर्देशात्कित्वाप्राप्तावपि बोभूव बोभूविथेति सिद्ध्यतीति प्रत्याख्यातं सूत्रं भाष्ये । श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वेति व्याकरणान्तरम् देभतुः सस्वजे इति भाष्योदाहरणादेकदेशानुमत्या इहाप्याश्रीयते । तत्र कित्वपक्षे श्रन्थिग्रन्थ्योरेत्वाभ्यासलोपावपि वक्तव्याविति हरदत्तादयः । दम्भेस्तु षष्ठे वक्ष्यते एव । श्रेथतुः । शश्रन्थतुः । ग्रेथतुः । जग्रन्थतुः । देभतुः । ददम्भतुः । सस्वजे । सस्वञ्जे । इदं कित्वं पिदपिद्विषयकमिति सुधाकरादयः । तन्मते श्रेथिथ । अस्मिन्नपि पक्षे णलि शश्राथ । उत्तमे तु शश्राथ शश्रथेति माधवः । तत्र मूलं मृग्यम् । दभेश्च तिप्सिप्मिप्सु देभ देभिथ देभेति रूपान्तरं बोध्यम् । अपिद्विषयकमिति न्यासकारादिमते तु ददम्भ ददम्भिथ ददम्भेत्येव ॥

## मृडमृदगुधकुषक्लिशवदवसः क्त्वा । १ । २ । ७ ॥

गुधकुषक्लिशिभ्यः क्त्वो रलो व्युपधादिति विकल्पे प्राप्ते इतरेभ्यो न क्त्वा सेडिति निषेधे प्राप्ते कित्वं विधीयते ॥ मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । क्लिशित्वा । उदित्वा । उषित्वा ॥

## रुदविदमुषग्रहिस्वपिप्रच्छः संश्च । १ । २ । ८ ॥

एभ्यः संश्च क्त्वा च कितौ स्तः ॥ रुदित्वा । रुरुदिषति । विदित्वा विविदिषति । मुषित्वा । मुमुषिषति । गृहीत्वा । जिघृक्षति । सुप्त्वा । सुषुप्सति । पृष्ट्वा । पिपृच्छिषति । स्वपिप्रच्छ्योः सनर्थं ग्रहणम् । क्त्वा किदेव हि ॥

## इको झल् । १ । २ । ९ ॥

इकः परो झलादिः सन् कित्स्यात् । चिचीषति । तुष्टूषति । चिकीर्षति । इकः किम् । यियासति । तिष्ठासति । झल् किम् । यियविषति । किमर्थं पुनरिदमुच्यते । गुणो माभूदिति । दीर्घत्वं गुणस्य बाधकं भविष्यति । एवमपि कृते दीर्घे गुणो भवेत् । दीर्घस्य सनि मीमेत्यत्र मीग्रहणेन मिनोतिमपि ग्राहयित्वा कृतार्थत्वात् । मासाहचर्यान्मीग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः । सिद्धान्तेऽपि एतस्या एव युक्तेस्त्वयाऽपि शरणीकर्तव्यत्वात् । ननु कित्वाभावे एज्विषयत्वेन मीनातिमिनोतीत्यात्वे कृते गामादाग्रहणेष्वविशेषान्माग्रहणेनैव मीनातिमिनोत्योरपि सिद्धेर्दीर्घविधानमकृतार्थमेवेति चेत् । अत्रोच्यते । दीर्घेण गुणे बाधिते एज्विषयत्वं स्वीक्रियते । न वा । नाद्यः । दीङ् दिदीषते इत्यत्रात्वापत्त्या कित्वस्यावश्यकत्वात् । नान्त्यः । एज्विषयताया अभावेनात्वासंभवान्माग्रहणेन मीनातिमिनोत्योर्ग्रहणस्याशक्यत्वाद्दीर्घविधानस्य मिनातिमपि ग्राहयित्वा कृतार्थत्वे प्रत्यक्षे दृश्यमाने तदकृतार्थत्वबलेन दीर्घस्य गुणबाधकत्वोक्तेर्बालभाषणतुल्यत्वात् । अत एवासति कित्वे यद्यनवकाशत्वाच्चिचीषतीत्यादौ दीर्घो गुणं बाधिष्यते तदा चोप्पूयतीत्यत्र णिलोपमप्यविशेषाद्बाधेत । यदि च सामान्यग्रहणा-

विघातार्थे कृतार्थे दीर्घे ञ्चीप्सतीत्यत्र परत्वाण्णिलोपो बाधते तर्हि गुणोऽपि बाधेत । तस्मात्कित्वं वक्तव्यमित्युपसंहृतं भाष्ये सङ्गच्छते । अन्यथा मीनातीत्यादिना आत्वे कृते माग्रहणेनैव मीनातिमिनोत्योर्ग्रहणे सिद्धे दीर्घविधानस्य सामान्यग्रहणार्थत्वाभावेन सामान्यग्रहणार्थत्वेन कृतार्थे दीर्घे णिलोप इव गुणोऽपि बाधेतेत्युक्तेरसङ्गत्यापत्तेः । मम तु कित्वाभावेऽपि दीर्घेणापि एज्विषयताया अपहारात् आत्वासंभवेन दीर्घत्वस्य सामान्यग्रहणार्थत्वे सुस्थे तदर्थं कृतार्थे दीर्घे णिलोप इव गुणोऽपि बाधेतेत्युक्तेर्न काप्यनुपपत्तिः । एतेन कित्वाभावे एज्विषयत्वेनात्वे कृते माग्रहणेनैव सामान्यग्रहणं भविष्यतीत्याशङ्काकुलितचित्तो भाष्यकारेण सामान्यग्रहणार्थत्वं न सुष्ठु निरूपितमिति वदन् कैयटोऽपि समाहितः । कित्वारम्भे कित्वेनेव कित्वाभावेऽपि दीर्घेणैज्विषयताया अपहारात् आत्वासंभवेन दीर्घत्वस्य भाष्यकारोक्तसामान्यग्रहणार्थत्वस्य सुष्ठुतरत्वात् । अन्यथा दिदीषते इत्यत्रात्वापत्तेः । एतेन दीर्घत्वस्य सामान्यग्रहणार्थत्वमसंभवदेवेति मत्वा दीर्घेण गुणबाधमङ्गीकृत्य णिलोपस्य तु येननाप्राप्तिविरहादेव बाधो न भविष्यतीत्याशङ्क्य उत्तरार्थमवश्यमिको झलिति कर्तव्यम् । योगविभागः किमर्थं इति परमवशिष्यते । सोऽपि कुटादौ कुङ् शब्दे इति कैयटमते दीर्घान्तोऽपि न्यासकारमते ह्रस्वान्तस्तस्य चूकूषते इत्यत्र गु पुरीषोत्सर्गे घ्रु गतिस्थैर्ययोरिति पाठाच्च जुगूषति दुध्रूषतीत्यत्र च कृतार्थो दीर्घः चिचीषतीत्यादौ परेण गुणेन बाध्येत स मा बाधीत्येवमर्थो यद्यपि सम्भवति तथापि उहनेति वक्तव्येऽज्झनेति प्रत्याहारग्रहणं निरवकाशमेव । न च गमेरिडादेशस्येतिवार्तिकं प्रत्याख्यातुं तन्त्रादिना सम्भवव्यभिचाराभ्यां गमेरचा विशेषयिष्यमाणत्वाद-

ज्ग्रहणसार्थक्यं शङ्क्यम् । एवं हि उतो दीर्घ इत्युक्त्वा इङ्हनोरिति सूचयेत् । इणकोरादेशस्यापि ग्रहणमिति पक्षेऽपि इङ्हनोरिति ब्रूयात् । हना साहचर्याच्च इधातुरेव ग्रहीष्यते न तु इवर्णान्तः । यथान्यासपाठेऽपि हनिसाहचर्याल्लुग्विकरणस्यादेशगमेर्ग्रहणसम्भवाच्च । न चैवमपि पुरस्तादपवादन्यायेन णिलोप एव बाध्येतेति भ्रमितव्यम् । उभयापवादतासम्भावनायामेव तदवतारात् । इह तु णिलोपेन सह येननाप्राप्तिविरहात् । न च बाध्यसामान्यचिन्तायां णिलोपबाधो दुर्वार इति वाच्यम् । स्थाशपां ज्ञीप्स्यमान इति निर्देशाल्लक्ष्यानुरोधाच्चेह बाध्यविशेषचिन्ताया एव युक्तत्वात् । एवं चाज्ग्रहणसामर्थ्यस्य ज्ञीप्स्यमान इत्यादेर्ज्ञापकस्य च पर्यालोचनाक्लेशपरिहारार्थं लक्षणैकचक्षुषो बाध्यसामान्यचिन्ताभ्रमं वारयितुं योगविभाग इति निष्कर्षयन्तः शब्दकौस्तुभकारा अपि प्रत्युक्ताः । दीर्घविधानस्य सामान्यग्रहणार्थत्वस्योपपादितत्वेन निष्कर्षमूलयुक्तेदीर्घविधानस्याकृतार्थताया अत्र विरहात् । तदेवं दीर्घे कृते गुणो माभूदित्येवमर्थं कित्वं वक्तव्यमिति स्थितम् । नन्वेतादृशक्लेशेन किमिति कित्वस्यावश्यकत्वं प्रतिपाद्यते न किं लुलूषतीत्यादिदीर्घेषु फलाभावात् दीर्घाप्रवृत्त्या गुणनिषेधार्थं कित्वमावश्यकम् । किन्तु दीर्घेण गुणस्येव ऋृदित्वस्यापि बाधापत्त्या चिकीर्षतीत्यपि न सिद्ध्येदिति चेन्न । दीर्घेषु पर्जन्यवल्लक्षणप्रवृत्तेरङ्गीकारात् । गुणनिवृत्तिरूपफलस्यापि सत्त्वाच्च । मो राजीत्यत्रानुस्वारनिवृत्तिफलवत् यं विधिं प्रतीति न्यायेन ऋृदित्वस्याबाधात् । तितीर्षतीत्यादौ तु अकृते दीर्घे इत्वस्य गुणेन प्रतिबद्धत्वाद्दीर्घेण गुणबाधे सत्येवेत्वं लभ्यं न तु ततः प्राक् । एवं च यस्य तु विधेरित्यंशो ह्रस्व इव दीर्घेऽप्यविशिष्टः ॥

## हलन्ताच्च। १। २। १०॥

कर्मधारयोऽयम्। अन्तशब्दः परसमीपवाची। इक इत्यनुवृत्तं षष्ठ्या विपरिणम्यते। इक्समीपाद्धलः परो झलादिः सन् कित्स्यात्॥ हलश्चेति सूचयितुमुचितम्। इकः पराद्धलः परो यः सन्नित्यर्थसङ्गतेः। गुहू। जुघुक्षति। बिभित्सति। इकः किम्। यियक्षते। झल् किम्। विवर्धिषते। हल्ग्रहणं जातिपरम्। तृंहू। तितृक्षति। धिप्सति। धीप्सति॥

## लिङ्सिचावात्मनेपदेषु। १। २। ११॥

इक्समीपाद्धलः परौ झलादी लिङ् तङ्परः सिच्चेत्येतौ कितौ स्तः॥ भित्सीष्ट। अभित्त। इकः किम्। यक्षीष्ट। अयष्ट। आत्मनेपदेषु किम्। अस्राक्षीत्। अद्राक्षीत्। सिच एवेदं विशेषणं न तु लिङः। असम्भवात्। झलनुवृत्त्यैव लिङः परस्मैपदस्य व्यावर्तितत्वाच्च। हलः किम्। चेषीष्ट। अचेष्ट। झल् किम्। वर्तिषीष्ट। अवर्तिष्ट। लिङ्सिचौ किम्। द्वेष्टा। द्वेक्ष्यते॥

## उश्च। १। २। १२॥

ऋवर्णात्परौ झलादी लिङ् तङ्परः सिच्चेत्येतौ कितौ स्तः॥ कृषीष्ट। अकृत। झलादी किम्। वरिषीष्ट। अवरिष्ट। लिङ्सिचोरितीड्। तङि किम्। अकार्षीत्॥

## वा गमः। १। २। १३॥

गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः॥ सङ्गसीष्ट। सङ्गंसीष्ट। समगत। समगंस्त॥

## हनः सिच्। १। २। १४॥

कित्स्यात्॥ अनुनासिकलोपः। आहत। आहसाताम्।

आहसत । झलित्येव । अयानिषाताम् । यद्यपि सिजन्तस्याङ्गस्यात्मनेपदं ङित्परमस्तीत्यनिदितामित्येव सिद्धं तथापि सिजन्तस्योपधालोपो नेति विकरणप्रयुक्तोपधात्वमाश्रित्य लोपो नेति वा ज्ञापनार्थमिदमनिदितां नुम धातोरित्यत्र वक्ष्यामः । यद्यपीह लिङ्सिचावित्यनुवृत्त्या सिद्धं तथाप्युत्तरार्थमवश्यं कर्तव्यं सिज्ग्रहणं स्पष्टार्थमिहैव कृतम् । अन्यथा हि लिङि वधादेशो नित्यः । घानिषीष्टेति चिण्वदिटि स्यसिच्सूत्रवक्ष्यमाणरीत्या वधादेशाभावेऽपि अझलादित्वान्न कित्वमित्यादि व्युत्पादनीयं स्यात् ॥

## यमो गन्धने । १ । २ । १५ ॥

सिच् कित्स्यात् ॥ उदायत । उदायसाताम् । उदायसत । गन्धनं सूचनं परदोषाविष्करणम् । गन्धने किम् । उदायंस्त पादम् । आकृष्टवानित्यर्थः ॥

## विभाषोपयमने । १ । २ । १६ ॥

यमः सिच् किद्वा स्याद्विवाहे ॥ रामः सीतामुपायत । उपायंस्त वा । उदवोढेत्यर्थः । गन्धनाङ्गे उपयमने तु पूर्वविप्रतिषेधान्नित्यं कित्वम् ॥

## स्थाघ्वोरिच्च । १ । २ । १७ ॥

अनयोरिदादेशः स्यात्सिच्च कित्स्यात् ॥ समस्थित । समस्थिषाताम् । अदित । अधित । झलित्येव । अदायिषाताम् । इह वागम इत्यारभ्य पञ्चसूच्यामात्मनेपदेष्वित्यनुवृत्तिर्निष्फला । तथाहि । गमेः परस्मैपदे सिज् नास्ति अङा बाधात् । लिङ् तु न झलादिः । हन्तेस्तु परस्मैपदे बधादेशो नित्यः । यमेस्तु यमरमेतीट्सकोः सतोर्झलादिः सिच् परस्मैपदे नास्ति । उपयमने तु नित्यमात्मनेपदम् । स्थाघ्वोः परस्मैपदे सिचो लुक् ॥

## न क्त्वा सेट् । १ । २ । १८ ॥

सेट् क्त्वा किन्न स्यात् ॥ शयित्वा । सेट् किम् । कृत्वा । क्त्वा किम् । निगृहीतिः ॥

## निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः । १ । २ । १९ ॥

एभ्यः सेण्निष्ठा किन्न स्यात् ॥ शयितः । शयितवान् । अनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः । शेश्यितः । शेश्यितवान् । प्रस्वेदितः । प्रस्वेदितवान् । ञिष्विदेति भ्वादिरत्र गृह्यते । ञीद्भिः साहचर्यात् । स्विद्यतेस्तु स्विदित इत्येव । ञिमिदा । ञिक्ष्विदा । दिवादी भ्वादी च । प्रमेदितः । प्रमेदितवान् । प्रक्ष्वेदितः । प्रक्ष्वेदितवान् । प्रधर्षितः । प्रधर्षितवान् । सेट् किम् । स्विन्नः । स्विन्नवान् । आदितश्चेति नेट् । विभाषा भावादिकर्मणोरिति पक्षे यो ऽभ्यनुज्ञायते स क्त्वनिषेधस्य विषयः ॥

## मृषस्तितिक्षायाम् । १ । २ । २० ॥

सेण्निष्ठा किन्न स्यात् ॥ मर्षितः । मर्षितवान् । क्षमायां किम् । अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः ॥

## उदुपधाद्भावादिकर्मणोरन्यतरस्याम् । १ । २ । २१ ॥

उदुपधात्परा भावादिकर्मणोः सेण्निष्ठा वा किन्न स्यात् ॥ द्युतितम् । द्योतितम् । मुदितम् । मोदितं साधुना । प्रद्युतितः । प्रद्योतितः । प्रमुदितः । प्रमोदितः साधुः । उदुपधात्किम् । विदितम् । क्ष्विटितम् । खिटितम् । भावेत्यादि किम् । रुचितं कार्षापणम् । सेट् किम् । क्रुष्टम् ॥ शब्विकरणेभ्य एवेष्यते ॥ * ॥ नेह । गुध्यतेर्गुधितम् ॥

## पूङः क्त्वा च । १ । २ । २२ ॥

पूङः क्त्वा निष्ठा च सेट् किन्न स्यात् ॥ पवितः । पवितवान् । पवित्वा । क्लिशः क्त्वानिष्ठयोः । पूङश्चेति वेट् । न क्त्वा सेडिति सिद्धे क्त्वाग्रहणमुत्तरार्थम् । नोपधादित्यत्र हि क्त्वैव संबध्यते ॥

## नोपधात्थफान्ताद्वा । १ । २ । २३ ॥

नकारोपधात्थान्तात् फान्ताच्च सेट् क्त्वा किन्न स्याद्वा ॥ ग्रथित्वा । ग्रन्थित्वा । गुफित्वा । गुंफित्वा । नोपधात्किम् । रिफ कत्थनादौ । रेफित्वा । इह नोपधग्रहणसामर्थ्याद्रलो व्युपधादिति विकल्पोऽपि न । ऋफ ऋंफ हिंसायामिति धातुद्वयेन ऋफित्वा ऋफित्वा ऋंफित्वेति चैषब्दस्य नोपधग्रहणसत्वासत्वयोरविशेषात् ॥

## वञ्चिलुञ्च्यृतश्च । १ । २ । २४ ॥

सेट् क्त्वा किन्न स्याद्वा ॥ वचित्वा । वञ्चित्वा । लुचित्वा । लुञ्चित्वा । ऋतित्वा । अर्तित्वा । सेट् किम् । वक्त्वा । उदित्वाद्वेट् ॥

## तृषिमृषिकृशेः काश्यपस्य । १ । २ । २५ ॥

एभ्यः सेट् क्त्वा किद्वा स्यात् ॥ काश्यपग्रहणं पूजार्थम् । वेति प्रक्रमात् । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृश तनूकरणे । कृशित्वा । कर्शित्वा । न तु कृष विलेखने इति मूर्द्धन्यान्तः । अनिट्त्वात् ॥

## रलो व्युपधाद्धलादेः संश्च । १ । २ । २६ ॥

उश्च इश्च वी । ते उपधे यस्य तस्माद्धलादेरलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः ॥ द्युतित्वा । द्योतित्वा । दिद्युतिषते । दिद्योतिषते । द्युतिस्वाप्योरिति सम्प्रसारणम् । रलः किम् । देवित्वा । दिदेविषति । व्युपधात्किम् । वर्तित्वा । विवर्तिषते । हलादेः किम् । एषित्वा । एषिषिषति । सेट् किम् । भुक्त्वा । बुभुक्षते ।

## ऊकालोऽज्झ्रस्वदीर्घप्लुतः । १ । २ । २७ ॥

उश्च ऊश्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् ॥ संज्ञाप्रदेशाः ह्रस्वस्य गुणः । हे हरे । दीर्घोऽकितः । पापच्यते । वाक्यस्य टेः प्लुतः । एहि कृष्णा ३॥

## अचश्च । १ । २ । २८ ॥

ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्राच इति षष्ठ्यन्तं पदमुपतिष्ठते ॥ इको गुणवृद्धीत्यनेन तुल्यमेतत् । नत्वलोन्त्यस्य शेषोऽपवादो वा । तेन शमामष्टानामित्यत्र शमादिभिरचो विशेषणात् शाम्यतीत्यादिसिद्धम् । ह्रस्वो नपुंसके अकृत्सार्वेत्यादौ तु अजन्तस्य प्रातिपदिकस्येति अजन्ताङ्गस्येति च व्याख्यानादलोऽन्त्यस्य ह्रस्वो दीर्घश्च । अतिरि । अतिनु । चीयते । स्तूयते । नेह । सुवाग् ब्राह्मणकुलम् । भिद्यते । वाक्यस्य टेः प्लुत उदात्तः । अत्र टेरच इति व्याख्यानादग्निचीऽ३त् । सोमसूऽ३त् । अजित्यनुवृत्तिसामर्थ्यात् स्वसंज्ञया विधाने इति लभ्यते । नेह । द्यौः । पन्थाः । सः ॥

## उच्चैरुदात्तः । १ । २ । २९ ॥

ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् ॥ प्रदेशा आद्युदात्तश्चेत्येवमादयः ॥

## नीचैरनुदात्तः । १ । २ । ३० ॥

स्पष्टम् । प्रदेशा अनुदात्तौ सुप्पितावित्यादयः ॥

## समाहारः स्वरितः । १ । २ । ३१ ॥

उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन्सोऽच् स्वरितसंज्ञः स्यात् ॥ प्रदेशास्तित्स्वरितमित्यादयः । ननु समाहारः स्वरित इत्युच्यते तत्र न ज्ञायते कस्मिन्नवकाशे उदात्तः कस्मिन्ननुदात्तः कियानुदात्तः कियाननुदात्त इत्यत आह ॥

## तस्यादित उदात्तमर्द्धह्रस्वम् । १ । २ । ३२ ॥

ह्रस्वग्रहणमतन्त्रम् । स्वरितस्यादितोऽर्द्धमुदात्तम्बोध्यम् ॥ उत्तरार्द्धं तु परिशेषादनुदात्तम् । तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टम् । अन्यत्र तूदात्तश्रुतिः प्रातिशाख्ये विहिता । क्व १ वोऽश्वाः । रथानां न येऽराः । शतचक्रं योऽह्यः । इत्यादिष्वनुदात्तः । अग्निमीळे इत्यादौ तूदात्तश्रुतिः । इत आरभ्य नवसूच्या इत उत्कर्षेण अ अ इत्यतः प्राक् स्थापनेनास्य त्रिपाद्यामपि प्रवृत्तिः ॥

## एकश्रुति दूरात्सम्बुद्धौ । १ । २ । ३३ ॥

सम्बुद्धिः सम्बोधना । अन्तर्भावितण्यर्थाद्बुधेः क्तिन् । न त्वेकवचनं सम्बुद्धिः । दूरादित्यपादानकारकान्वयाय क्रियाया एवाकाङ्क्षितत्वात् । दूरात्सम्बोधयति येन वाक्येन तदेकश्रुति स्यात् ॥ एका स्वराणामविभागेन श्रुतिर्यस्येत्यर्थः । आगच्छ भो माणवक देवदत्ता३ । अन्त्यस्य तु वाक्यस्य टेरिति प्लुतेनापवादत्वादेकश्रुतिर्बाध्यते । दूरात्किम् । चैस्वर्यमेव । तत्रोपसर्गाश्चाभिवर्जमित्याङुदात्तः । गच्छेति तिङ्घातः । भोः शब्दो निपातत्वादाद्युदात्तः । शेषयोरामन्त्रितनिघातः । कृत्रिमायाः सम्बुद्धेरग्रहणादागच्छत ब्राह्मणा इत्यादावपि भवति ॥

## यज्ञकर्मण्यजपन्यूङ्खसामसु । १ । २ । ३४ ॥

यज्ञक्रियायां मन्त्र एकश्रुतिः स्यात् जपादीन्वर्जयित्वा ॥ अग्निर्मूर्द्धा दिवः । यज्ञेति किम् । स्वाध्यायकाले चैस्वर्यमेव । अजपेत्यादि किम् । ममाग्ने वर्चो विहवेष्वस्तु । जपो नाम उपांशुप्रयोगः । यथा जले निमग्नस्य । रूढश्चायमकरणमन्त्रेषु । यत्र जपतीति कल्पसूत्रकृतां व्यवहारः । अतएव याजुषत्वादुपांशु प्रयुज्यमानानामपीषे-

त्वेत्यादीनां जपत्वाभावादेकश्रुतिर्भवत्येव । शाखाच्छेदनादिकं प्रति तेषां करणत्वात् । न्यूङ्खा नाम षोडश ओकाराः । तेषु प्रथमसप्तमनवमयो-दशास्त्रय उदात्तास्त्रिमात्राश्च । इतरे त्रयोदशानुदात्ताः अर्द्धोकाराः । एतच्चाश्वलायनेन चतुर्थे ऽहनीति खण्डे स्फुटीकृतम् । सामशब्दो वाक्यविशेषस्थगीतिवाचकः । तदुक्तं जैमिनिना । गीतिषु सामाख्येति । ए विश्वं समत्रिणं दह ३ । विश्वं अत्रिणं पाप्मानं सन्दहेति सम्बन्धः । एशब्दो गीतिपूरणः । निपात इत्यन्ये । जपादिपर्युदासाच्च मन्त्रेष्वे-वैषा एकश्रुतिर्न तूहितादिष्विन्द्रशत्रुर्वर्द्धस्वेत्यादिषु । ऊह्यमानस्या-मन्त्रत्वात् । तदुक्तं भेदलक्षणे जैमिनिना । अनाम्नातेष्वमन्त्रत्वमिति । आपस्तम्बश्चाह । अनाम्नाता अमन्त्रा । यथा प्रवरोहनामधेयग्रह-णानीति । ननु स्वाहेन्द्रशत्रुर्वर्द्धस्वेति वेदे पठ्यत एवेति चेत्सत्यम् । ऊहितं यदमन्त्रभूतं अनुकार्यं तदनुकरणस्य पाठेऽप्यर्थपरस्यानुका-र्यस्य लौकिकत्वमक्षतमेव । नन्वेवमुच्चैस्तरां वेति सूत्राद्विकल्पानुवृ-त्त्यैव सिद्धो विभाषा छन्दसीत्यत्र विभाषाग्रहो व्यर्थः स्यात् । नित्य-विकल्पविध्योर्विषयभेदस्यावश्यकतया आरम्भसामर्थ्यादेव यज्ञकर्म-णीत्यस्य निवृत्तिसिद्धेः । प्रसज्यप्रतिषेधे तूहादिष्वमन्त्रेषु चरितार्थस्य पूर्वविधेरुत्तरेण छन्दोमात्रविषयकेण बाधसम्भवात्तन्निवृत्त्यर्थं तदपे-क्षितमिति चेन्न । पर्युदासेऽपि मन्त्रे नित्यं ब्राह्मणे वेति विषयवि-भागसम्भवादित्याहुः ॥

## उच्चैस्तरां वा वषट्कारः । १ । २ । ३५ ॥

यज्ञकर्मणि वौषट्शब्द उच्चैस्तरां वा स्यादेकश्रुतिर्वा । वषट्-शब्देनात्र वौषट्शब्दो लक्ष्यते । सोमस्याग्ने वीही३ वौ३षट् । ब्रूहि प्रेष्येत्यनेन वौषट्शब्दस्यादेः प्लुत उदात्तो विहितस्तदपेक्षयायमुदा-

ततरोऽन्त्यस्य विधीयते । द्वयोरप्ययमुदात्ततर इत्येके । तदा याज्यावाक्यीयैकश्रुतिगतोदात्तापेक्षः प्रकर्षः । एकश्रुतेश्चोदात्तानुरागोऽस्तीत्येकश्रुति दूरादित्यत्र भाष्यकैयटयोः स्पष्टम् । अस्योदात्तस्येत उत्कृष्य शास्त्रान्ते कर्तव्यत्वेनोक्तत्वादसिद्धत्वात्प्लुतोदात्तत्वस्याप्यसिद्धत्वाच्च शेषनिघातो न । पक्षे एकश्रुतिः ॥

## विभाषा छन्दसि । १ । २ । ३६ ।

छन्दसि विभाषा एकश्रुतिः स्यात् ॥ व्यवस्थितविभाषेयम् । संहितायां त्रैस्वर्यम् । ब्राह्मणे त्वेकश्रुतिर्बह्वृचानाम् । अन्येषामपि यथासम्प्रदायं व्यवस्था । अत्र तन्त्रावृत्यादिना अछन्दसीति नञः प्रश्लेषाद्भाषायामप्यैच्छिको विकल्पो बोध्यः । अतएव विभाषाग्रहणं चरितार्थम् । न च यज्ञकर्मणीत्यस्य निवृत्त्यर्थम् । छन्दसीत्युक्तेऽपि तन्निवृत्तिसिद्धेः । अन्यथा पूर्वसूत्रस्य निर्विषयत्वापत्तेः । न च जपादिषु सावकाशस्य परस्य पूर्वोऽपवाद इति वाच्यम् । एवं हि सति परत्रैव जपादिग्रहणं कुर्यात् किं नञा किञ्च छन्दोग्रहणेनेति दिक् ॥

## न सुब्रह्मण्यायां स्वरितस्य तूदात्तः । १ । २ । ३७ ॥

सुब्रह्मण्याख्ये निगदे यज्ञकर्मणीति विभाषा छन्दसीति च प्राप्ता एकश्रुतिर्न स्यात् स्वरितस्योदात्तश्च स्यात् ॥ सुब्रह्मण्योऽम्१ । इन्द्रागच्छ२ । हरिव आगच्छ३ । मेधातिथेर्मेष४ । वृषणश्वस्य मेने५ । गौरावस्कन्दिन्६ । अहिल्यायै जार७ । कौशिकब्राह्मण८ । गौतमब्रुवाण९ । श्वः सुत्यामागच्छ मघवन् । सुब्रह्मणि साधुरिति यत् । तित्वात्स्वरितः । तस्य टापा सहैकादेशः स्वरितानुदात्तयोरान्तर्यात्स्वरितः । ततो निपातेनाद्युदात्तेन ओम्शब्देन ओमाङोश्चेत्युदात्तस्वरितयोरेकादेशः स्वरित एव । एकादेश उदात्तेनेति तु न प्रव-

र्तते। अनुदात्तस्येत्यनुवृत्तेः। ततः स्वरितस्य नुदात्त इति प्रकृत-
सूत्रेणैवोदात्त इति वृत्तिकारकैयटहरदत्तादयः। इन्द्रेत्यामन्त्रितमा-
द्युदात्तम्। आष्टमिको निघातस्तु भिन्नवाक्यत्वान्न भवति।
द्वितीयो वर्णोऽनुदात्तः। स चोदात्तादनुदात्तस्येति स्वरितः। तस्या-
नेनोदात्तः। न चात्र कर्तव्ये स्वरितोऽसिद्धः। एतत्काण्डोत्कर्षस्यो-
क्तत्वात्। अतएवास्मिन्नुदात्ते शेषनिघातोऽपि न। तेन द्वावप्युदा-
त्तौ। आद्युदात्तः। ततः परस्योदात्तादनुदात्तस्येति स्वरितस्यानेनो-
दात्तः। न च तस्योदात्तादनुदात्तस्येति स्वरितः शङ्क्यः। प्रकरणो-
त्कर्षणास्यासिद्धत्वात्। हरिव आगच्छेत्यत्रोक्तप्रक्रियया चत्वार उदा-
त्ताः। वकारछकारावनुदात्तौ। मेधातिथेरिति षष्ठ्यन्तस्य पराङ्गवद्भावे
आमन्त्रितसाद्युदात्तः। धाशब्दस्योदात्तादिति स्वरितत्वे ऽनेनोदात्तः।
ततश्चत्वारोऽनुदात्ताः। वृषेति पूर्ववद् द्वावुदात्तौ। पञ्चानुदात्ताः।
गौरेत्यत्र गौरवदवस्कन्दतीति विग्रहः। पूर्ववद् द्वावुदात्तौ। ततस्त्र-
योऽनुदात्ताः। अहेत्युदात्तौ। चत्वारोऽनुदात्ताः। कौशिकब्राह्मणेति
समस्तम्। कौशीत्युदात्तौ। चत्वारोऽनुदात्ताः। गौतेत्युदात्तौ।
वारोऽनुदात्ताः। श्व इत्युदात्तम्। सुत्यामित्यन्तोदात्तम्। संज्ञा-
समजेति क्यपो विधाने उदात्त इत्यनुवृत्तेः। आगेति द्वावुदात्तौ।
कारोऽनुदात्तः। मघवन्निति पदात्परमामन्त्रितं निहन्यते। असावित्य-
ः॥ * ॥ असाविति प्रथमान्तोपलक्षणम्। तस्मिन्नेव निगदे प्रथ-
न्तस्यान्त उदात्तः स्यात्॥ गार्ग्यो यजते। जित्वादाद्युदात्ते
ऽन्तोदात्तत्वविधिः॥ अमुष्येत्यन्तः॥ * ॥ षष्ठ्यन्तोपलक्षणमे-
त्। षष्ठ्यन्तस्यापि प्राग्वत्॥ दाक्षेः पिता यजते॥ स्यान्तस्योपोत्त-
म॥ * ॥ चादन्तः। गार्ग्यस्य पिता यजते॥ वा नामधेयस्य॥ * ॥

ततरोऽन्त्यस्य विधीयते । द्वयोरप्ययमुदात्ततर इत्येके । तदा याज्यावाक्यीयैकश्रुतिगतोदात्तापेक्षः प्रकर्षः । एकश्रुतेश्चोदात्तानुरागोऽस्तीत्येकश्रुति दूरादित्यत्र भाष्यकैयटयोः स्पष्टम् । अस्योदात्तस्येत उत्कृष्य शास्त्रान्ते कर्तव्यत्वेनोक्तत्वादसिद्धत्वात्प्लुतोदात्तत्वस्याप्यसिद्धत्वाच्च शेषनिघातो न । पक्षे एकश्रुतिः ॥

## विभाषा छन्दसि । १ । २ । ३६ ।

छन्दसि विभाषा एकश्रुतिः स्यात् ॥ व्यवस्थितविभाषेयम् । संहितायां त्रैस्वर्यम् । ब्राह्मणे त्वेकश्रुतिर्बह्वृचानाम् । अन्येषामपि यथासम्प्रदायं व्यवस्था । अत्र तन्त्रावृत्त्यादिना अछन्दसीति नञः प्रश्लेषाद्भाषायामप्यैच्छिको विकल्पो बोध्यः । अतएव विभाषाग्रहणं चरितार्थम् । न च यज्ञकर्मणीत्यस्य निवृत्त्यर्थम् । छन्दसीत्युक्तेऽपि तन्निवृत्तिसिद्धेः । अन्यथा पूर्वसूत्रस्य निर्विषयत्वापत्तेः । न च जपादिषु सावकाशस्य परस्य पूर्वोऽपवाद इति वाच्यम् । एवं हि सति परत्रैव जपादिग्रहणं कुर्यात् किं नञा किञ्च छन्दोग्रहणेनेति दिक् ॥

## न सुब्रह्मण्यायां स्वरितस्य तूदात्तः । १ । २ । ३७ ॥

सुब्रह्मण्याख्ये निगदे यज्ञकर्मणीति विभाषा छन्दसीति च प्राप्ता एकश्रुतिर्न स्यात् स्वरितस्योदात्तश्च स्यात् ॥ सुब्रह्मण्योऽम्१ । इन्द्रागच्छ२ । हरिव आगच्छ३ । मेधातिथेर्मेष४ । वृषणश्वस्य मेने५ । गौरावस्कन्दिन्६ । अहिल्यायै जार७ । कौशिकब्राह्मण८ । गौतमब्रवाण९ । श्वः सुत्यामागच्छ मघवन् । सुब्रह्मणि साधुरिति यत् । तित्वात्स्वरितः । तस्य टापा सहैकादेशः स्वरितानुदात्तयोरान्तर्यात्स्वरितः । ततो निपातेनाद्युदात्तेन ओम्शब्देन ओमाङोश्चेत्युदात्तस्वरितयोरेकादेशः स्वरित एव । एकादेश उदात्तेनोदात्त इति तु न प्रव-

र्तते। अनुदात्तस्येत्यनुवृत्तेः। ततः स्वरितस्य सूदात्त इति प्रकृतसूत्रेणैवोदात्त इति वृत्तिकारकैयटहरदत्तादयः। इन्द्रेत्यामन्त्रितमाद्युदात्तम्। आष्टमिको निघातस्तु भिन्नवाक्यत्वान्न भवति। द्वितीयो वर्णोऽनुदात्तः। स चोदात्तादनुदात्तस्येति स्वरितः। तस्यानेनोदात्तः। न चात्र कर्तव्ये स्वरितोऽसिद्धः। एतत्काण्डोत्कर्षस्योक्तत्वात्। अतएवास्मिन्नुदात्ते शेषनिघातोऽपि न। तेन द्वावप्युदात्तौ। आड्डुदात्तः। ततः परस्योदात्तादनुदात्तस्येति स्वरितस्यानेनोदात्तः। न च तस्योदात्तादनुदात्तस्येति स्वरितः शङ्क्यः। प्रकरणोत्कर्षेणास्यासिद्धत्वात्। हरिव आगच्छेत्यत्रोक्तप्रक्रियया चत्वार उदात्ताः। वकारछकारावनुदात्तौ। मेधातिथेरिति षष्ठ्यन्तस्य पराङ्गवद्भावे आमन्त्रितायुदात्तः। धाशब्दस्योदात्तादिति स्वरितत्वे ऽनेनोदात्तः। ततश्चत्वारोऽनुदात्ताः। वृषेति पूर्ववद् द्वावुदात्तौ। पञ्चानुदात्ताः। गौरेत्यत्र गौरवदवस्कन्दतीति विग्रहः। पूर्ववद् द्वावुदात्तौ। ततस्त्रयोऽनुदात्ताः। अहेत्युदात्तौ। चत्वारोऽनुदात्ताः। कौशिकब्राह्मणेति समस्तम्। कौशीत्युदात्तौ। चत्वारोऽनुदात्ताः। गौतेत्युदात्तौ। चत्वारोऽनुदात्ताः। श्व इत्युदात्तम्। सुत्यामित्यन्तोदात्तम्। संज्ञायां समजेति क्यपो विधाने उदात्त इत्यनुवृत्तेः। आगेति द्वावुदात्तौ। छकारोऽनुदात्तः। मघवन्निति पदात्परमामन्त्रितं निहन्यते। असावित्यन्तः ॥ * ॥ असाविति प्रथमान्तोपलक्षणम्। तस्मिन्नेव निगदे प्रथमान्तस्यान्त उदात्तः स्यात् ॥ गार्ग्यो यजते। ञित्वादाद्युदात्ते प्राप्तेऽन्तोदात्तत्वविधिः ॥ अमुष्येत्यन्तः ॥ * ॥ षष्ठ्यन्तोपलक्षणमेतत्। षष्ठ्यन्तस्यापि प्राग्वत् ॥ दाक्षेः पिता यजते ॥ स्यान्तस्योपोत्तमञ्च ॥ * ॥ चादन्तः। गार्ग्यस्य पिता यजते ॥ वा नामधेयस्य ॥ * ॥

स्यान्तस्य नामधेयस्य उपोत्तममुदात्तं वा स्यात् ॥ देवदत्तस्य पिता यजते ॥

## देवब्रह्मणोरनुदात्तः । १ । २ । ३८ ॥

स्वरितस्य तूदात्त इति पूर्वसूत्रशेषस्यायमपवादः । अनयोः स्वरितस्यानुदात्तः स्यात् सुब्रह्मण्यायाम् । देवा ब्रह्माण आगच्छत । द्वयोरप्यामन्त्रिताद्युदात्तत्वे शेषनिघाते चोदात्तादिति स्वरितस्यानेनानुदात्तः । एतत्प्रकरणोत्कर्षस्य चैतदेव ज्ञापकं बोध्यम् । द्वितीयस्याष्टमिको निघातस्तु न । पूर्वस्याविद्यमानत्वेन पदात्परत्वाभावात् । प्राचीनपदस्य तु भिन्नवाक्यस्थत्वात् । ये तु देवा ब्रह्माण इति सामानाधिकरण्येन व्याचक्षते तन्मते विभाषितं विशेषवचने इति पक्षे विद्यमानतया द्वितीयस्य निघातः । प्रकृतसूत्रेण स्वरितनिघातस्तु वकारस्यैव । अस्मिन्पक्षे ब्रह्मग्रहणं न कर्तव्यम् ॥

## स्वरितात्संहितायामनुदात्तानाम् । १ । २ । ३९ ॥

स्वरितात्परेषामनुदात्तानामेकश्रुतिः स्यात्संहितायाम् ॥ इमं मे गङ्गे यमुने सरस्वति । कार्यं देवदत्तयज्ञदत्तौ । अनुदात्तानामिति जातौ बहुवचनम् । तेनैकस्य द्वयोश्च भवत्येव । संहिताग्रहणं ज्ञापकमन्यत्र पञ्चमीनिर्देशे कालो न व्यवधायक इति । तेन तिङ्ङतिङ इति निघातः पदपाठेऽपि भवति । अग्निं ईळे ॥

## उदात्तस्वरितपरस्य सन्नतरः । १ । २ । ४० ॥

सन्नोऽनुदात्तः । उदात्तस्वरितौ परौ यस्मात्तथाभूतस्यानुदात्तस्यानुदात्ततरः स्यात् ॥ अग्निं कन्यां । नन्विमं मे गङ्गे इति मन्त्रे शुतुद्रिशब्दस्य पादादित्वेन निघाताभावादाद्युदात्ततया तस्मिन्परे सरस्वतीतीकारस्य सन्नतर इष्यते एकश्रुतिरेव तु प्राप्नो-

ति । नवसूच्या उत्कर्षेणासिद्धतया सन्नतरायोगादिति चेन्न । अत्र पाठेन नवसूच्याः परस्परं प्रत्यसिद्धत्वाभावबोधनात् । देवदत्त न्यङित्यत्र तु न्यधीचेति पूर्वपदप्रकृतिस्वरे उदात्तस्वरितयोर्यण इत्यस्वरितयकारस्य स्वरितः पूर्वस्य सन्नतरं प्रति नासिद्धः । प्रकरणोत्कर्षात् ॥

## अपृक्त एकाल् प्रत्ययः । १ । २ । ४१ ॥

एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ॥ संज्ञाप्रदेशा वेरपृक्तस्येत्यादयः । एकालिति किम् । दर्विः । जागृविः । प्रत्यय इति किम् । सुरां सुनोतीति सुरासुत् तमाचक्षाणः सुराः ॥

## तत्पुरुषः समानाधिकरणः कर्मधारयः ।१।२।४२॥

समानाधिकरणावयवस्तत्पुरुषः कर्मधारयसंज्ञः स्यात् ॥ संज्ञाप्रदेशाः पुंवत्कर्मधारयेत्यादयः ॥

## प्रथमानिर्दिष्टं समास उपसर्जनम् । १ । २ । ४३ ॥

समासविधायकं शास्त्रं समास इह गृह्यते । तत्र प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥ द्वितीया श्रितादिभिः । कृष्णश्रितः । महासंज्ञाकरणमन्वर्थसंज्ञार्थम् । लोके ह्यप्रधानमुपसर्जनमाहुः । तेन राज्ञः कुमार्याः राजकुमार्या इत्यत्रोभयोः षष्ठीति सूत्रे प्रथमानिर्दिष्टत्वाविशेषेऽपि राजैवोपसर्जनं न तु कुमारी । तेन तस्या न पूर्वनिपातो न वा गोस्त्रियोरिति ह्रस्वः । नन्वेवं पाचकवृन्दारको गोगर्भिणीत्यादिषु विशेष्यस्य पूर्वनिपातो न स्यादिति चेत् । वृन्दारकनागकुञ्जरैः पूज्यमानं चतुष्पादो गर्भिण्येत्यादौ विधिवाक्ये प्रथमानिर्देशस्यानन्यार्थत्वाददोषः । तस्मात्सति सम्भवे व्यवस्थापकमन्वर्थत्वमिति स्थितम् ॥

**एकविभक्ति चापूर्वनिपाते । १ । २ । ४४ ॥**

समासे इति वर्तते । समासार्थमलौकिकं विग्रहवाक्यं चेह समासः । तत्र यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्नतु तस्य पूर्वनिपातः ॥ अतिक्रान्तो मालामतिमालः । निष्कौशाम्बिः ॥ एकविभक्तावषष्ठ्यन्तवचनम् ॥ * ॥ नेह । अर्द्धं पिप्पल्या अर्द्धपिप्पली । एकदेशिसमासविषयकोऽयमुपसर्जनसंज्ञानिषेधः । तेन पञ्चखट्वीत्यादि सिध्यति । न चात्र प्रमाणाभावः । अपथं नपुंसकमिति सूत्रे पञ्चखट्वीति भाष्योदाहरणस्यैव प्रमाणत्वात् ॥

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । १ । २ । ४५ ॥**

धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा ऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ॥ बहुपटवः । अत्र प्रातिपदिकत्वेन पूर्वविभक्तिलुकि टकारोकारस्योदात्तत्वे पुनर्जसि टकाराकारोदात्तत्वसिद्धिः । अन्यथा विभक्त्यन्तस्योदात्तता स्यात् । डित्यादीन्यव्युत्पन्नान्यप्यस्यैवोदाहरणम् । अर्थवत्किम् । धनं वनमित्यादौ प्रतिवर्णं संज्ञा माभूत् । अधातुः किम् । अहन् । नलोपो माभूत् । अप्रत्ययः किम् । हरिषु । करोषि । अत्र सुप्सिपोर्माभूत् । अप्रत्ययान्तः किम् । तत्रैव विभक्तिविशिष्टयोर्माभूत् ॥

**कृत्तद्धितसमासाश्च । १ । २ । ४६ ॥**

अर्थवदित्यनुवर्तते । तत्सामर्थ्यात्संज्ञाविधावपि प्रत्ययग्रहणे तदन्तविधिः । अर्थवदिति हि प्रशंसायां मतुप् । एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वं च प्रशंसामूलम् । कृत्तद्धितान्तौ समासश्च एते अर्थवन्तः प्रातिपदिकसंज्ञाः स्युः ॥ लिट् धुक् इत्यादावधातुरिति कर्तेत्यादावप्रत्ययान्तमिति पर्युदासे प्राप्ते कृदन्ते विधिरयम् ।

एवमौपगव इत्यादौ तद्धितान्तेऽपि। पूर्वसूत्रेणैव सिद्धे समासग्रहणं नियमार्थम्। यत्र सङ्घाते पूर्वो भागः पदं तत्र चेद्भवति तर्हि समासस्यैवेति। तेन वाक्यस्य न। चकारोऽनुक्तसमुच्चयार्थः। तेन निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्येति गतार्थम्। येषां द्योत्योऽप्यर्थो नास्ति तदर्थमिदम्। अवद्यति॥

**ह्रस्वो नपुंसके प्रातिपदिकस्य। १। २। ४७॥**

क्लीबे प्रातिपदिकस्याजन्तस्य ह्रस्वः स्यात्॥ श्रीपं कुलम्॥

**गोस्त्रियोरुपसर्जनस्य। १। २। ४८॥**

स्त्रीशब्दः स्वर्यते। तेन स्त्र्यधिकारोक्तचातुर्थिकप्रत्ययलाभः। उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तश्च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्॥ चित्रगुः। निष्कौशाम्बिः। उपसर्जनस्य किम्। सुगौः। राजकुमारी। स्त्र्यधिकारोक्तप्रत्ययग्रहणान्नेह। अतिलक्ष्मीः। अतिश्रीः। कथं सुगोकुलं राजकुमारीपुत्र इति चेच्छृणु। उपसर्जनत्वस्य ससम्बन्धिकतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते तदर्थं प्रति यद्युत्तरपदभूतयोर्गोस्त्रियोर्गुणीभावस्तदेदम् ह्रस्वत्वम्। अतएव महासंज्ञाकरणम्। न चेह तदस्ति। गोः कुलं प्रति गुणीभावेऽपि गां प्रत्यतथात्वात्। कुमार्याश्च पुत्रं प्रति गुणीभावेऽपि स्वं प्रत्यतथात्वात्। शास्त्रीयश्चैवेहोपसर्जनत्वं गृह्यते। कृत्रिमत्वात्। अतएव कुमारीमिच्छन्कुमारीवाचरन् ब्राह्मणः कुमारीत्यत्र ह्रस्वो न॥ ईयसो बहुव्रीहेर्नेति वाच्यम्॥ * ॥ ईयसन्ताद्यः स्त्रीप्रत्ययस्तदन्तान्तो यो बहुव्रीहिस्तस्येत्यर्थः। बह्व्यः श्रेयस्यो यस्य बहुश्रेयसी। क्लीबत्वविवक्षायां नपुंसकह्रस्वत्वमपीह न। ईयसो बहुव्रीहेर्नेति ह्रस्वमात्रस्य प्रतिषेधादिति श्रीपतिपुरुषोत्तमविश्वरूपादयः। अन्ये तूपसर्जनह्रस्व

एव निषिध्यते नपुंसकह्रस्वत्वं तु स्यादेवेत्याहुः । बहुव्रीहेः किम् । अतिश्रेयसिः ॥

## लुक्तद्धितलुकि । १ । २ । ४९ ॥

तद्धितलुकि सति उपसर्जनस्य स्त्रीप्रत्ययस्य लुक् स्यात् ॥ लुक् तावत्प्रत्ययस्यैव सम्भवति न तु तदन्तस्य । अतएवोपसर्जनमिह लौकिकं न तु पूर्ववच्छास्त्रीयम् । असम्भवात् । न हि प्रत्ययमात्रं शास्त्रीयमुपसर्जनम् । आमलक्याः फलमामलकम् । नित्यं वृद्धशरादिभ्य इति मयटः फले लुक् । उपसर्जनस्य किम् । अवन्ती । कुरूः । पूर्वसूत्रस्य निष्कौशाम्बिरित्यादौ सावकाशत्वेन पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यत्र परत्वाल्लुगेव ॥

## इद्गोण्याः । १ । २ । ५० ॥

गोण्या इत्स्यात्तद्धितलुकि ॥ लुकोऽपवादः । पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः । पूर्वाचार्यमतं दूषयितुमुत्थापयति ॥

## लुपि युक्तवद्व्यक्तिवचने । १ । २ । ५१ ॥

लुपि सति प्रकृतिवल्लिङ्गवचने स्तः ॥ कटुबदर्या अदूरभवो ग्रामः कटुबदरी । पञ्चालानां निवासो जनपदः पञ्चालाः । पञ्चालाः क्षत्रियाः । पुंल्लिङ्गा बहुवचनविषयाः । लुपि किम् । लवणः सूपः । संसृष्टे लवणाल्लुक् । व्यक्तिवचने इति किम् । शिरीषाणामदूरभवो ग्रामः शिरीषास्तस्य वनं शिरीषवनम् । अत्र वनस्पतित्वातिदेशे विभाषौषधीति णत्वं माभूत् ॥ समास उत्तरपदस्य बहुवचनस्य लुपो युक्तवद्भावो वक्तव्यः ॥ * ॥ मथुरापञ्चाला । वर्तिपदार्था एवापेक्षितपरस्परा द्वन्द्वार्थ इति सिद्धे समासे बहुवचनान्तप्रकृतिकलुबन्तार्थे चेदतिदेशस्तर्ह्युत्तरपदस्यैवेति नियमार्थमिदम् । तेनेह न ।

पञ्चालमथुरे । अत एव मथुरागोदा इति भवति न तु मथुरागोदाविति । द्वन्द्वेऽपि गोदार्थस्य द्वित्वानतिक्रमात् । बहुवचनस्य किम् । गोदौ ग्रामो मथुरा च गोदमथुराः । अबहुवचनान्तलुबन्तपूर्वपदस्य नियमेन व्यावृत्तिर्माभूत् ॥

## विशेषणानाञ्चाजातेः । १ । २ । ५२ ॥

लुबर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जातिं वर्जयित्वा ॥ पञ्चाला रमणीयाः । गोदौ रमणीयौ । अजातेः किम् । पञ्चाला जनपदः । गोदौ ग्रामः ॥ हरीतक्यादिषु व्यक्तिः ॥ * ॥ नियमार्थमिदम् । तेन वचनं न युक्तवत् । हरीतक्याः फलानि हरीतक्यः ॥ गौरादिङीषन्तादनुदात्तादेश्चेत्यञ् । हरीतक्यादिभ्यश्चेति लुप् ॥ खलतिकादिषु वचनम् ॥ * ॥ अयमपि नियम एव । खलतिकस्य पर्वतस्यादूरभवानि वनानि खलतिकं वनानि ॥ मनुष्यलुपि प्रतिषेधः ॥ * ॥ मनुष्यलक्षणे लुबर्थे विशेषणानां न । लुबन्तस्य तु भवतीत्यर्थः । चञ्चा तृणमयः पुमान् । स इव चञ्चा अभिरूपः । संज्ञायामिति कन् । लुम्मनुष्ये इति लुप् । चर्मविकारविशेषो वध्रिका । स इव वध्रिका दर्शनीयः । तदिह द्वे वार्तिके आद्यस्य तृतीयन्तु द्वितीयस्यापवाद इति स्थितम् । एवमनूद्य दूषयति ॥

## तदशिष्यं संज्ञाप्रमाणत्वात् । १ । २ । ५३ ॥

तद्युक्तवद्वचनं अशिष्यं अकर्तव्यं कुतः संज्ञानां प्रमाणत्वादित्यर्थः ॥ अयं भावः । पञ्चाला वरणा इत्यादयो न यौगिकाः । किं तर्हि । जनपदानां संज्ञाः । ताश्च यल्लिङ्गसंख्यतया लोके प्रसिद्धास्तत्र प्रमाणीभूता एव न तु तत्रानुशासनापेक्षा । यथा आपो दारा गृहाः सिकता वर्षा इत्यादाविति । ननु विषम उपन्यासः । आपो

दारा इत्यादयो न यौगिका इति न युक्तम् । अनुशासनाभावात् । अतस्तत्र न लिङ्गसंख्यानुशासनापेक्षा । पञ्चालादयस्तु यौगिका एव । तस्य निवासो जनपदे लुबित्याद्यनुशासनोपलम्भात् । अतस्तेष युक्तवद्वचनं कर्तव्यमेवेत्यत आह ॥

**लुब्योगाप्रख्यानात् । १ । २ । ५४ ॥**

न पञ्चालादयो यौगिकाः । योगाप्रख्यानात् । योगस्यावयवार्थस्येहाप्रख्यानादप्रतीतेरित्यर्थः ॥ अयं भावः । न हि यौगिकत्वे अनुशासनं प्रयोजकं किं तर्हि योगार्थप्रतीतिः । सा च पञ्चालादिष्वपि आपो दारा इत्यादिष्विव नास्तीति । नन्वेवं लुबनुशासनवैयर्थ्यम् । योगार्थाप्रतीतेरेव तस्य निवासोऽदूरभवश्चेति तद्धितस्यैवानुत्पत्तेरिति चेन्न । इष्टापत्तेरित्याह । लुबिति । जनपदे लुप् वरणादिभ्यश्चेति लुबप्यशिष्य इत्यर्थः । विपक्षे बाधकमप्यस्तीत्याह ॥

**योगप्रमाणे च तदभावेऽदर्शनं स्यात् । १ । २ । ५५ ॥**

यदि हि पञ्चालादिशब्दो योगस्यावयवार्थस्य प्रमाणं बोधकं स्यात्तदा तदभावे न दृश्येत । दृश्यते च सम्प्रति विनैव क्षत्रिययोगं जनपदे पञ्चालशब्दः । न च भूतपूर्वगतिः । क्षत्रिययोगाद्देशे देशयोगाद्वा क्षत्रिये शब्द इत्यत्र विनिगमकाभावेन वैपरीत्यस्यापि सुवचत्वापत्तेरिति भावः । अतोऽब्‌आदिवन्नानार्था एवैते इति तत्वम् । प्रसङ्गादन्यदपि पूर्वाचार्यमतमनूद्य दूषयति ॥

**प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् । १ । २ । ५६ ॥**

प्रत्ययार्थः प्रधानमित्येवंरूपं वचनमप्यशिष्यम् । कुतः ।

ऽर्थस्य लोकत एव सिद्धः । आख्यातस्य क्रियाप्रधानतया व्यभिचाराच्चेत्यर्थः ॥

## कालोपसर्जने च तुल्यम् । १ । २ । ५७ ॥

अतीताया रात्रेः पश्चार्द्धेनागामिन्याः पूर्वार्द्धेन च सहितो दिवसोऽद्यतनः । विशेषणमुपसर्जनमित्यादि पूर्वाचार्यैः परिभाषितं तथाप्यशिष्यत्वं समानमित्यर्थः ॥ लोकप्रसिद्धत्वादेवेति भावः । प्रासङ्गिकं समाप्य प्रकृतमनुसरति ॥

## जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् । १ । २ । ५८ ॥

एकोऽप्यर्थो वा बहुवद्भवति ॥ ब्राह्मणाः पूज्याः । ब्राह्मणः पूज्यः ॥ सङ्ख्याप्रयोगे प्रतिषेधः ॥ * ॥ एको व्रीहिः सम्पन्नः सुभिक्षं करोति ॥

## अस्मदो द्वयोश्च । १ । २ । ५९ ॥

एकत्वे द्वित्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यात् ॥ वयं ब्रूमः । पक्षे ऽहं ब्रवीमि । आवां ब्रूव इति वा ॥ सविशेषणस्य प्रतिषेधः ॥ * ॥ पटुरहं ब्रवीमि । कथं तर्हि "त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नता" इति भर्तृहरिः । अत्रोन्नतत्वस्य विधेयत्वाद्भवत्येव । अनुवाद्यविशेषणपरत्वात्प्रतिषेधस्येति हरदत्तः ॥

## फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे । १ । २ । ६० ॥

द्वित्वे बहुत्वप्रयुक्तं कार्यं वा स्यात् नक्षत्रे यद्यभिधीयेते ॥ पूर्वे फल्गुन्यौ । पूर्वाः फल्गुन्यः । पूर्वे प्रोष्ठपदे । पूर्वाः प्रोष्ठपदाः । नक्षत्रे किम् । फल्गुन्यौ माणविके । फल्गुन्योर्जाते इत्यर्थः । फल्गु-

न्यषाढाभ्यामिति टः । टित्वात् ङीप् । एकस्यां तु तारायां नैतौ प्रयुज्येते । उद्भूतावयवभेदे समूहे एव रूढत्वात् ॥

### छन्दसि पुनर्वस्वोरेकवचनम् । १ । २ । ६१ ॥

द्वयोरेकवचनं वा स्यात् ॥ पुनर्वसुर्नक्षत्रम् । पुनर्वसू वा । लोके तु द्विवचनमेव ॥

### विशाखयोश्च । १ । २ । ६२ ।

प्राग्वत् ॥ विशाखा नक्षत्रम् । पक्षे विशाखे । छन्दसीत्यनुवृत्तेर्लोके विशाखे इत्येव ॥

### तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् । १ । २ । ६३ ॥

छन्दसीति निवृत्तम् । बहुत्वं द्वित्ववद्भवति ॥ तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू । तिष्येति किम् । विशाखानुराधाः । नक्षत्रेति किम् । तिष्यपुनर्वसवो माणवकाः । तिष्यपुनर्वसुशब्दाभ्यां नक्षत्रेण युक्त इत्यणो लुबविशेषे इति लुपि जातार्थे सन्धिवेलेत्यणः श्रविष्ठाफल्गुनीति लुक् । माणवकवृत्तिरयं द्वन्द्वो न तु नक्षत्रवृत्तिः । न चायं गौणः । यौगिकत्वात् । नक्षत्र इत्यनुवृत्त्या सिद्धे पुनर्नक्षत्रग्रहणं तिष्यपुनर्वस्वोः शब्दयोरभिधेये नक्षत्रे वर्तमानो यो नक्षत्रशब्दानां द्वन्द्व इत्यर्थलाभेन पुष्यपुनर्वसू सिध्यपुनर्वसू इत्यत्र पर्यायाणामपि यथा स्यादित्येवमर्थम् । द्वन्द्वे किम् । यस्तिष्यस्तौ पुनर्वसू येषां ते तिष्यपुनर्वसवः । तिष्यादय एव विपर्ययविषया इह बहुव्रीहिणोच्यन्ते । अतो भवत्ययं नक्षत्रसमासो न तु द्वन्द्वः । बहुवचनस्य किम् । इदं तिष्यपुनर्वसु ॥

## सरूपाणामेकशेष एकविभक्तौ। १। २। ६४॥

विभक्तिः सारूप्ये उपलक्षणं नन्वेकशेषे निमित्तम्। उत्तरसूत्रादेवकारोऽपकृष्यते। एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते अन्ये लुप्यन्ते॥ घटौ। घटाः। तितिक्षान्त्योः क्षमा। वासेन सम्यक् क्षमयोश्च तस्मिन्निति श्रीहर्षः। श्रियैनरेन्द्रस्य निरीक्ष्य तस्येति च। सरूपाणां किम्। घटपटौ। एवकारापकर्षः किम्। मातृमातृभ्याम्। अत्र जननीपरिच्छेतृवाचिनोर्मातृशब्दयोर्माभूत्। एवकारापकर्षे तु भ्यामादौ सारूप्येऽप्यौजसादिषु वैरूप्यान्न दोषः। एकविभक्तौ किम्। हरिणी मृगी हरितवर्णा च हरिण्यौ। इहापि यथा स्यात्। अन्यथा पुंवद्भावेन तद्धितादौ वैरूप्यान्न स्यात्। एकेति किम्। कमल् कमलौ। कमल इत्यादावेव स्यात्। अन्यच्च स्वसरि च स्वस्रोश्च स्वसृष्वित्यादौ क्वापि न स्यात्। विभक्तिभेदेन वैरूप्यात्। तथोक्तौ तु समानायां विभक्तौ यानि स्वरूपाण्येवेत्यर्थान्न दोषः। एकशेष इत्यत्रैकेति किम्। द्विबहूनामपि शेषो माभूत्। शेष इति किम्। अश्वश्चाश्वश्चेत्यादौ ह्युदात्तवत्वादिरूपान्तर्येण तादृश एक आदेशो माभूत्॥ स्वरभिन्नानां यस्योत्तरः स्वरविधिः स शिष्यते इति वक्तव्यम्॥ *॥ अक्षौ। अक्षस्यादेवनस्येति फिट्सूत्रेण शकटाक्ष आद्युदात्तः। देवनाक्षे तु फिष इत्यन्तोदात्तः। परत्वादाद्युदात्तस्य शेषः॥ विरूपाणामपिसमानार्थानाम्॥ *॥ वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ। कुटिलदण्डौ॥

## वृद्धो यूना तल्लक्षणश्चेदेव विशेषः। १। २। ६५॥

यूना सहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः

कुत्स्नं वैरूप्यं स्यात् ॥ गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । वृद्धः किम् । गर्गगार्ग्यायणौ । यूना किम् । गर्गगार्ग्यौ । तल्लक्षणः किम् । भागवित्तिभागवित्तिकौ । भागवित्तिशब्दाद्गोत्रार्थकेञन्ताद्यूनि वृद्धाट्ठक् सौवीरेषु बहुलमिति कुत्सायां ठक् । अतोऽत्र कुत्सा सौवीरत्वञ्चापरो विशेषः । कृत्स्नं किम् । गार्ग्यवात्स्यायनौ ॥

## स्त्री पुंवच्च । १ । २ । ६६ ॥

यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत् तल्लक्षण एव विशेषश्चेत् ॥ गार्गी च गार्ग्यायणश्च गर्गाः । अस्त्रियामित्यनुवर्तमाने यञञोश्चेति लुक् । दाक्षी च दाक्षायणश्च दाक्षी । तल्लक्षण इत्यादि किम् । भागवित्ती च भागवित्तिकश्च गार्गी च वात्स्यायनश्चेत्यादौ माभूत् ॥

## पुमान् स्त्रिया । १ । २ । ६७ ॥

सरूपाणां मध्ये स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत् ॥ हंसी च हंसश्च हंसौ । सरूपाणां किम् । हंसश्च वरटा चेत्यत्र माभूत् । अन्यथा हंसत्वजातिसाम्येऽपि शब्दवैलक्षण्यस्य स्त्रीत्वपुंस्त्वमात्रप्रयुक्तत्वादेकशेषः स्यात् । नन्वेवमपि गौरियं गौश्चायं तयोः सहोक्तौ एतौ गावाविति नियमतो न स्यात् तल्लक्षणविशेषाभावादिति चेन्न । इयमयमिति पदान्तरगम्यस्य तल्लक्षणविशेषस्य सत्वात् । चेदेवशब्दोपादानसामर्थ्येन विशेषश्चेत्तल्लक्षण एवेत्यन्वयेन तदितरकृतविशेषविरहरूपे विशिष्टाभावे तात्पर्याच्च । स चेह विशेष्याभावादस्त्येव । इन्द्रेन्द्राण्यावित्यादौ तु पुंयोगकृतविशेषान्नैकशेषः । स्त्रीपुंसयोर्विशेषप्रयोजकता च प्रधानयोरेव गृह्यते । प्रधाने कार्यसंप्रत्ययात् । तेन ब्राह्मणीवत्सश्च ब्राह्मणवत्साचेत्या-

दौ नैकशेषः । पुमान्किम् । प्राक् च प्राची च प्राक्प्राच्यौ । प्रपूर्वादञ्चेः क्विन्नन्तादस्तातेरञ्चेर्लुकि तद्धितश्चासर्वेत्यव्ययत्वादलिङ्गः प्राक् शब्दः ॥

## भ्रातृपुत्रौ स्वसृदुहितृभ्याम् । १ । २ । ६८ ॥

भ्राता च स्वसा च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ ॥

## नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् । १ । २ । ६९ ॥

अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत् स्यात्तल्लक्षण एव विशेषश्चेत् ॥ शुक्लः पटः । शुक्ला पटी । शुक्लं वस्त्रम् । तदिदं शुक्लम् । तानीमानि शुक्लानि । अनपुंसकेनेति किम् । शुक्लञ्च शुक्लञ्च शुक्ले । अस्येति किम् । उत्तरसूत्रे एकवद्भावानुवृत्तिर्माभूत् । तल्लक्षण एवेति किम् । हिमहिमान्यौ । अरण्यारण्यान्यौ । इह महत्त्वकृतोऽपि विशेषः ॥

## पिता मात्रा । १ । २ । ७० ॥

मात्रा सहोक्तौ पिता वा शिष्यते ॥ माता च पिता च पितरौ । मातापितरौ ॥

## श्वशुरः श्वश्र्वा । १ । २ । ७१ ।

श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते ॥ श्वशुरौ । श्वश्रूश्वशुरौ ॥

## त्यदादीनि सर्वैर्नित्यम् । १ । २ । ७२ ॥

सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते ॥ स च देवदत्तश्च तौ ॥ त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते ॥ ... स च यश्च यौ । पूर्वशेषोऽपि दृश्यते ... स च यश्च तौ । अहं च ... दतः शेषे पुंनपुंसकतो लिङ्गवचनानि ॥ * ॥

भवां—

लिङ्गप्रतिपादकानीत्यर्थः । सा च देवदत्तश्च तौ । तच्च देवदत्ता च यज्ञदत्ता च तानि । पुन्नपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते । तच्च देवदत्तश्च ते ॥ अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम् ॥ * ॥ कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धं पिप्पल्यास्तत् अर्धपिप्पल्यौ च ते अर्धपिप्पल्यस्ताः ॥

## ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री । १ । २ । ७३ ॥

एषु सहविवक्षायां स्त्री शिष्यते ॥ पुमान्स्त्रियेत्यस्यापवादः । गाव इमाः । ग्राम्येति किम् । रुरव इमे । पशुषु किम् । ब्राह्मणाः । सङ्घेषु किम् । एतौ गावौ । सङ्घो बहूनां गृह्यते सामर्थ्यात् । अन्यथैकशेषस्यानेकविषयत्वात् किं तेन । अतरुणेषु किम् । वत्सा इमे । बर्करा इमे ॥ अनेकशफेष्विति वक्तव्यम् ॥ * ॥ अश्वा इमे । कथमुष्ट्रा इमे इति । आरण्यत्वात् । इह सर्वत्र एकशेषे कृतेऽनेकाभावात् द्वन्द्वो न । तेन शिरसी शिरांसीत्यादौ समासस्येत्यन्तोदात्तः प्राण्यङ्गत्वादेकवद्भावश्च न । पन्थानौ पन्थान इत्यादौ समासान्तो न ॥

इति श्रीव्याकरणदीपिकायां वृत्तौ प्रथमस्याध्यायस्य
द्वितीयः पादः ॥



# अथ प्रथमाध्यायस्य तृतीयः पादः ।

## भूवादयो धातवः । १ । ३ । १ ॥

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥ धातुत्वाल्लडादयः । भवति । एधते ॥

## उपदेशे ऽजनुनासिक इत् । १ । ३ । २ ॥

उपदेश आद्योच्चारणम् । उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् ॥ प्रतिज्ञानुनासिक्याः पाणिनीयाः । एधते । स्पर्धते । अनुदात्तेत्त्वादात्मनेपदम् । भवान् । उगित्त्वान्नुम् । लण्सूत्रेऽकारस्येत्वाद्रप्रत्याहारः । उपदेशे किम् । अभ्र आं अपः । अच् किम् । मनिनो मकारस्य माभूत् । अनुनासिकः किम् । चिरिणोति ॥

## हलन्त्यम् । १ । ३ । ३ ॥

इदं सूत्रमावर्तनीयम् । तत्रैकस्यायमर्थः । हलिति प्रत्याहारसूत्रेऽन्त्यमित्स्यादिति । एवञ्चादिरन्त्येनेत्यनेन हल्संज्ञायां सिद्धायां उपदेशेऽन्त्यं हलित्स्यादित्यपरस्यार्थ इति नान्योन्याश्रयः । शेते । ङित्वात्तङ् । अइउणादिसूत्रेषु णादीनमित्वादण् अच् इत्यादिप्रत्याहाराः ॥

## न विभक्तौ तुस्माः । १ । ३ । ४ ॥

विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः ॥ रामात् । पचेरन् । ब्राह्मणाः । पचतः । रामम् । अद्राक्षम् । विभक्तौ किम् । अचो यत् । जर्णाया युस् । रुधादिभ्यः श्नम् । इदमस्थमुरितिज्ञा-

पक्षादनित्यमिदम् । तेन किमोऽत् क्वेति सिद्धम् । श्रोत् इटोऽत् इत्यत्र तु मुखसुखार्थस्तकारो नत्वित्संज्ञकः । तित्स्वरापत्तेः ॥

## आदिर्ञिटुडवः । १ । ३ । ५ ॥

उपदेशे आदिभूता एते इतः स्युः ॥ ञिइन्धी । इद्धः । टुवेपृ । वेपथुः । डुकृञ् । कृत्रिमम् । उपदेशे किम् । ञिकारीयति । आदिः किम् । पटूयति ॥

## षः प्रत्ययस्य । १ । ३ । ६ ॥

प्रत्ययस्यादिः ष इत्स्यात् ॥ शिल्पिनि ष्वुन् । नर्तकी । प्रत्ययस्य किम् । षोडश । आदिः किम् । अविषः । महिषः । अविमहीभ्यां टिषच् ॥

## चुटू । १ । ३ । ७ ॥

प्रत्ययाद्यौ इतौ स्तः ॥ च्फञ् । कौञ्जायन्याः । जस् । ब्राह्मणाः । शण्डिकादिभ्यो ञ्यः । शाण्डिक्यः । चरेष्टः । कुरुचरी । सप्तम्यां जनेर्डः । उपसरजः । अन्नाण्णः । आन्नः । छफठकानां ईय्, अन्त, इक, एय्, एते आदेशा वक्ष्यन्ते । चुञ्चुप्चणप्टीटचान्तु यादित्वादुपदेशे प्रत्ययादित्वाभावान्नेत्वम् ॥

## लशक्वतद्धिते । १ । ३ । ८ ॥

तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः ॥ ल्युट् । भवनम् । कर्तरि शप् । भवति । क्तक्तवतू निष्ठा । भूतः । भूतवान् । प्रियवशे वदः खच् । प्रियंवदः । ग्लाजिस्थश्च ग्स्नुः । जिष्णुः । भञ्जभासमिदो घुरच् । भङ्गुरम् । ङे । हरये । अतद्धिते किम् । चूडालः । लोमशः । कर्णिका । कर्णललाटात्कनलङ्कारे ।

अत्र क्ङिति चेति वृद्धिः स्यात् ॥ इर उपसङ्ख्यानम् ॥ * ॥ अरुधत् । अरौत्सीत् । अवयवे अचरितार्थस्य स्वरितत्वस्य समुदायविशेषकत्वात्स्वरितेत्त्वप्रयुक्तमात्मनेपदम् । तेन रुन्धे इत्यादि सिद्धम् ॥

**तस्य लोपः । १ । ३ । ९ ॥**

तस्येतो लोपः स्यात् ॥ तथैवोदाहृतम् । तस्य ग्रहणं सर्वलोपार्थम् । ञिटुडूनामलोऽन्त्यस्य माभूत् ॥

**यथासंख्यमनुदेशः समानाम् । १ । ३ । १० ॥**

समानां समसंख्यानां अनुदेशः सम्बन्धो यथाक्रमं स्यात् ॥ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । नन्दनः । ग्राही । पचः । अत्र स्वरितेनेत्यपकृष्यते । तेन ख्यत्यादित्यादौ नातिप्रसङ्गः । प्रतिज्ञास्वरिताः पाणिनीयाः ॥

**स्वरितेनाधिकारः । १ । ३ । ११ ॥**

इत्थम्भूतलक्षणे तृतीया । अधिकारो विनियोगः । स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम् ॥ प्रत्ययः परश्चेत्यादि यथेति दिक् ॥

**अनुदात्तङित आत्मनेपदम् । १ । ३ । १२ ॥**

अनुदात्तेत उपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदमेव स्यात् ॥ एधते । स्पर्धते । बोभूयते । ऋतीयते । शेते । उपदेशे किम् । चुकुटिषति । धातोः किम् । अच्युतत् । अदुद्रुवत् । कथं पुनर्धातोरिति लब्धम् । भ्वादिसूत्रान्मण्डूकानुवृत्त्या विभक्तिविपरिणामात् । ननु विकरणेभ्यो नियमो बलीयानित्यस्य वृद्भ्यः स्यसनोरिति स्यग्रहणेन ज्ञापितत्वाच्चुङ्डोर्न दोष इति चेन्न ।

उपजनिष्यमाणेनापि ङिता उपसञ्जातनिमित्तस्यापि परस्मैपदस्य बाधापत्तेः । नियमो बलीयानित्यस्यापि पाक्षिकत्वाच्च । विकरण-व्यवधानेऽपि नियमप्रवृत्तिरित्यपि स्यग्रहणेन ज्ञापयितुं शक्यत्वात् ।

**भावकर्मणोः । १ । ३ । १३ ॥**

अनयोर्विहितस्य तस्यात्मनेपदमेव स्यात् ॥ सुप्यते । क्रियते । न चैवं कर्मणि घञ् न स्यात् को भवता लाभो लब्ध इति। अकर्तरि चेत्यस्य त्वपादानादिरवकाश इति वाच्यम् । तुल्य-जातीयस्य परस्मैपदस्यैव नियमेन व्यावर्तनात् । ननु लूयते केदारः स्वयमेवेत्यादौ कर्मवद्भावेऽपि शास्त्रातिदेशेनैतदपेक्षया परत्वाच्छे-षात्कर्तरीति परस्मैपदं स्यादिति चेन्न । तत्र प्राधान्यात्कार्यातिदे-शस्यैवोपगमादात्मनेपदस्यैव परत्वात् । शास्त्रातिदेशेऽपि शेषात्क-र्तरीत्यत्र कर्तरीति कर्तरि कर्मेत्यतोऽनुवर्त्य कर्तैव यः कर्ता न तु कर्मकर्ता तत्रेति व्याख्यानाच्च ॥

**कर्तरि कर्मव्यतिहारे । १ । ३ । १४ ॥**

क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् ॥ व्यतिलु-नीते । अन्यस्य योग्यं लवनं करोतीत्यर्थः । परस्परकरणमपि कर्म-व्यतिहारः । सम्प्रहरन्ते राजानः । श्नसोरल्लोपः । व्यतिस्ते । व्यतिषाते । व्यतिषते । तासस्त्योर्लोपः । व्यतिसे । धि च । व्यतिध्वे । ह एति । व्यतिहे । व्यत्यसै । व्यत्यास्त । व्यतिषीत । व्यतिराते२ । व्यतिभाते२ । व्यतिबभे । कर्तृग्रहणमुत्तरार्थम् ।

**न गतिहिंसार्थेभ्यः । १ । ३ । १५ ।**

कर्मव्यतिहारे आत्मनेपदं न स्यात् । व्यतिगच्छन्ति । व्य-तिघ्नन्ति ॥ प्रतिषेधे हसादीनामुपसंख्यानम् ॥ * ॥ हसादयो हस-

प्रकाराः शब्दक्रियाः । व्यतिहसन्ति । व्यतिजल्पन्ति ॥ हरतेरप्रतिषेधः ॥ * ॥ सम्प्रहरन्ते क्षत्रियाः । कथं ततः सम्प्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयाविति । योत्स्यमानाविति विवक्षितं न कर्मव्यतिहारः ॥

## इतरेतरान्योन्योपपदाच्च । १ । ३ । १६ ॥

परस्परोपपदाच्चेति वक्तव्यम् ॥ * ॥ इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यतिलुनन्ति ॥

## नेर्विशः । १ । ३ । १७ ॥

आत्मनेपदं स्यात् ॥ निविशते । न्यविशत । अर्थवद्ग्रहणान्नेह । मधूनि विशन्ति भ्रमराः । कथमित्युक्त्वा मैथिलीं भर्तुरङ्के निविशतीं भयादिति । अङ्गानि विशतीमिति पाठः ॥

## परिव्यवेभ्यः क्रियः । १ । ३ । १८ ॥

अकर्त्रभिप्रायार्थमिदम् । परिक्रीणीते । विक्रीणीते । अवक्रीणीते । परस्परसाहचर्येणोपसर्गाणामेव ग्रहणान्नेह । वे क्रीणासीति । एकदेशविकृतस्यानन्यत्वाद्विशब्दोऽयम् ॥

## विपराभ्यां जेः । १ । ३ । १९ ॥

विजयते । पराजयते । प्राग्वदुपसर्गग्रहणान्नेह । वे जयसि । परा जयति सेना । परा । उत्कृष्टा ॥

## आङो दोऽनास्यविहरणे । १ । ३ । २० ॥

आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्तमानादात्मनेपदं स्यात् ॥ विद्यामादत्ते । अनास्येति किम् । मुखं व्याददाति । आस्यग्रहणमविवक्षितम् । विपादिकां व्याददाति । पादस्फोटो विपादिका । नदी कूलं व्याददाति ॥ पराङ्गकर्मकान्न निषेधः ॥ * ॥ व्याददते पिपीलिकाः पतङ्गस्य मुखम् । कथं व्यादत्ते विहगपति-

मुखं स्वकीयमिति । कर्त्रभिप्रायत्वात् । अकर्त्रभिप्रायार्थो ह्ययमारम्भः ॥

**क्रीडोऽनुसंपरिभ्यश्च । १ । ३ । २१ ॥**

चादाङः ॥ अनुक्रीडते । संक्रीडते । परिक्रीडते । आक्रीडते । अनोः कर्मप्रवचनीयान्न । उपसर्गेण समा साहचर्यात् । माणवकमनुक्रीडति । तेन सहेत्यर्थः । तृतीयार्थ इत्यनोः कर्मप्रवचनीयत्वम् ॥ समोऽकूजने ॥ * ॥ कूजने तु संक्रीडति चक्रम् ॥ आगमेः क्षमायाम् ॥ * ॥ णयन्तस्येदं ग्रहणम् । आगमयस्व तावत् । सहस्व कञ्चित्कालम् । मा त्वरिष्ठा इत्यर्थः ॥ शिक्षेर्जिज्ञासायाम् ॥ * ॥ धनुषि शिक्षते । धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः ॥ आशिषि नाथः ॥ * ॥ आशिष्येवेति नियमार्थमिदम् । सर्पिषो नाथते । सर्पिर्मे स्यादित्याशास्ते इत्यर्थः । कथं नाथसे किमु पतिं न भूभृतामिति । नाधसे इति पाठः ॥ हरतेर्गतताच्छील्ये ॥ * ॥ गतं प्रकारः । पैतृकमश्वा अनुहरन्ते । मातृकं गावः । पितुर्मातुश्चागतं प्रकारं सततं परिशीलयन्तीत्यर्थः । ताच्छील्ये किम् । मातुरनुहरति । सादृश्यमात्रमिह विवक्षितं न तु प्रकारताच्छील्यम् ॥ किरतेर्हर्षजीविकाकुलायकरणेषु ॥ * ॥ विक्षेपार्थः किरतिः । हर्षादयस्तु विषयत्वेनोपात्ताः । तत्र हर्षो विक्षेपस्य कारणम् । इतरे फले । षष्ठेऽपीदृशमेव वार्तिकम् । तेन एष्वेवार्थेष्वपाच्चतुष्पादिति सुड् वीधीयते । अपस्किरते वृषो हृष्टः । कुक्कुटो भक्षार्थी । श्वा आश्रयार्थी च । हर्षादिष्विति किम् । अपकिरति कुसुमम् । इह तङ्सुटौ न । हर्षादिमात्रसत्वे तु यद्यपि तङ् प्राप्तस्तद्विधौ चतुष्पाच्छकुनिकर्तृत्वस्यालेखनस्य चानिमित्तत्वात् । तथापि शब्दशक्तिस्वाभाव्यात्सुडभावे नेष्यते । तेन गजोऽपकिरतीत्येवेत्याहुः ॥ आङि नुप्रच्छ्योः ॥ * ॥ आनुते शृगालः । उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थः । आपृच्छते

गुरुम् । शप उपालम्भे ॥ * ॥ आक्रोशार्थात्स्वरितेतोऽकर्तृगेऽपि फले शपथरूपेऽर्थे आत्मनेपदं वक्तव्यमित्यर्थः ॥ कृष्णाय शपते । त्वत्पदौ स्पृशामि नैतन्मया कृतमित्येवं रूपं शपथं करोतीत्यर्थः ॥

**समवप्रविभ्यः स्थः । १ । ३ । २२ ॥**

सन्तिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते ॥ आङः प्रतिज्ञायामुपसंख्यानम् ॥ * ॥ शब्दं नित्यमातिष्ठते । नित्यत्वेन प्रतिजानीत इत्यर्थः ॥

**प्रकाशनस्थेयाख्ययोश्च । १ । ३ । २३ ॥**

गोपी कृष्णाय तिष्ठते । स्वाशयं प्रकाशयतीत्यर्थः । संशय्य कर्णादिषु तिष्ठते यः । कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः । स्थेयो विवादपदनिर्णेता । तिष्ठन्तेऽस्मिन्निति व्युत्पत्तेः । बाहुलकादधिकरणेऽचो यत् ॥

**उदोऽनूर्ध्वकर्मणि । १ । ३ । २४ ॥**

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता । अनूर्ध्वेति किम् । जवेन पीठादुदतिष्ठदच्युतः । ईहायामेव । नेह । ग्रामाच्छतमुत्तिष्ठति । उत्पद्यते इत्यर्थः ॥

**उपान्मन्त्रकरणे । १ । ३ । २५ ॥**

मन्त्रः करणं कारकविशेषो यत्र तस्मिन्नर्थे वर्तमानात्तिष्ठतेरित्यर्थः ॥ आग्नेय्याग्नीध्रमुपतिष्ठते । ऐन्द्र्या गार्हपत्यमुपतिष्ठते । मन्त्रकरणे किम् । भर्तारमुपतिष्ठति यौवनेन ॥ उपाद्देवपूजासङ्गतकरणमित्रकरणपथिष्विति वाच्यम् ॥ * ॥ आदित्यमुपतिष्ठते । कथं तर्हि स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वतीति । देवतात्वारोपात् । नृपस्य देवतांशत्वाद्वा । गङ्गा यमुनामुपतिष्ठते । उपश्लिष्यतीत्य-

र्थः । मित्रकरणं तु प्रश्लेषं विनापि भवति । रथिकानुपतिष्ठते ।
मित्रीकरोतीत्यर्थः । अयं पन्थाः स्रुघ्नमुपतिष्ठते । प्राप्नोतीत्यर्थः ॥
वा लिप्सायामिति वक्तव्यम् ॥ * ॥ भिक्षुकः प्रभुमुपतिष्ठते । उपति-
ष्ठति वा । लिप्सयोप गच्छतीत्यर्थः ॥

## अकर्मकाच्च । १ । ३ । २६ ॥

उपातिष्ठतेरकर्मकादात्मनेपदं स्यात् ॥ भोजनकाले उपति-
ष्ठते । सन्निहतो भवतीत्यर्थः ॥

## उद्विभ्यां तपः । १ । ३ । २७ ॥

अकर्मकादित्येव ॥ उत्तपते । वितपते । दीप्यते इत्यर्थः ।
स्वाङ्गकर्मकाच्चेति वक्तव्यम् ॥ * ॥ स्वमङ्गं स्वाङ्गं न त्वद्रवमिति परिभा-
षितम् । उत्तपते वितपते पाणिम् । नेह । सुवर्णमुत्तपति । सन्ताप-
यति विलापयति वेत्यर्थः । चैत्रो मैत्रस्य पाणिमुत्तपति । सन्ताप-
यतीत्यर्थः । उद्विभ्यां किम् । निष्टपति । ज्वलतीत्यर्थः ॥

## आङो यमहनः । १ । ३ । २८ ॥

आयच्छते । आहते । अकर्मकात्स्वाङ्गकर्मकादित्येव । नेह ।
परस्य शिर आहन्ति । कथमाजघ्ने विषमविलोचनस्य वक्ष इति
भारविः आहध्वं मा रघूत्तममिति भट्टिश्च । प्रमाद एवायमिति
भागवृत्तिः । प्राप्येत्यध्याहारो वा । ल्यब्लोपे पञ्चमीति तु ल्यबन्तं
विनैव वाक्ये वाक्यैकदेशप्रयोगन्यायेन तदर्थावगतिर्यत्र तद्विषयम् ।
इह तु शब्दाध्याहारः । भेत्तुमित्यादि तुमुनन्ताध्याहारो वाऽस्तु ।
विषमविलोचनस्य समीपमेत्य स्वं वक्ष आजघ्ने इति वा । मल्लो युद्धो-
त्साहाविष्करणाय स्वं वक्ष आस्फालयतीत्याहुः ॥

## समो गम्यृच्छिभ्याम् । १ । ३ । २९ ॥

अकर्मकाभ्यामित्येव ॥ सङ्गच्छते । समृच्छिष्यते । अकर्मकाभ्यां किम् । ग्रामं सङ्गच्छति ॥ विदिप्रच्छिस्वरतीनामुपसंख्यानम् ॥ * ॥ वेत्तेरेव ग्रहणम् । परस्मैपदिभ्यां साहचर्यात् । संवित्ते । संविदाते । संविद्रते । संपृच्छते । संस्वरते ॥ अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम् ॥ * ॥ अर्तीति द्वयोर्ग्रहणम् । अङ्विधौ त्वियर्तेरेव । लुप्तशपा शासिना साहचर्यात् । परस्मैपदेष्विति तूत्तरार्थमनुवर्तमानमपि पुषादिसूत्रेण योगविभागसामर्थ्यात्सर्तिशास्तीत्यनेनाङ्विधौ न सम्बध्यते । तेन मा समृत । मा समृषाताम् । मा समृषतेति । समार्त । समार्षाताम् । समार्षतेति च भ्वादेः । इयर्तेस्तु मा समरत । मा समरेताम् । मा समरन्तेति । समारत । समारेताम् । समारन्तेति च । संशृणुते । संपश्यते । अकर्मकादित्येव । अत एव रक्षांसीति पुरापि संशृणुमहे इति मुरारिप्रयोगः प्रामादिक इत्याहुः । अध्याहारो वा इति कथयद्भ्य इति । अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकतेति चेत् । शृणु ॥

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥

वहति भारम् । नदी वहति । स्यन्दते इत्यर्थः । जीवति । नृत्यति । प्रसिद्धेर्यथा । मेघो वर्षति । कर्मणोऽविवक्षातो यथा । हितान्न यः संशृणुते स किम्प्रभुः ॥ उपसर्गादस्यत्यूह्योर्वेति वक्तव्यम् ॥ * ॥ अकर्मकादिति निवृत्तम् । बन्धं निरस्यति । निरस्यते । समूहति । समूहते ॥

## निसमुपविभ्यो ह्वः । १ । ३ । ३० ॥

निह्वयते ॥

**स्पर्द्धायामाङः । १ । ३ । ३१ ॥**

कृष्णश्चाणूरमाह्वयते । स्पर्द्धायां किम् । पुत्रमाह्वयति ॥

**गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनो-पयोगेषु कृञः । १ । ३ । ३२ ॥**

गन्धनं हिंसा । उत्कुरुते । सूचयतीत्यर्थः । सूचनं तु प्राणवियोगानुकूलत्वाद्धिंसैव । अवक्षेपणं भर्त्सनम् । श्येनो वर्तिकामुदाकुरुते । भर्त्सयते इत्यर्थः । हरिमुपकुरुते । सेवते इत्यर्थः । परदारान्प्रकुरुते । तेषु सहसा प्रवर्तते इत्यर्थः । प्रयोगोपाधिरयम् । धात्वर्थस्तु वशीकरणम् । अन्यथा परदारानिति कर्मणोऽनन्वयप्रसङ्गात् । एधो दकस्योपस्कुरुते । गुणमाधत्ते । गाथाः प्रकुरुते । प्रकथयतीत्यर्थः । शतमुपकुरुते । धर्मार्थं विनियुङ्क्ते इत्यर्थः । एषु किम् । घटं करोति ॥

**अधेः प्रसहने । १ । ३ । ३३ ॥**

प्रसहनं क्षमाऽभिभवश्च । षह मर्षणे ऽभिभवे चेति पाठात् । शत्रुमधिकुरुते । क्षमते इत्यर्थः । अभिभवतीति वा ॥

**वेः शब्दकर्मणः । १ । ३ । ३४ ॥**

शब्दः कर्म कारकं यस्य तस्मादित्यर्थः ॥ स्वरान्विकुरुते । उच्चारयतीत्यर्थः । शब्दकर्मणः किम् । चित्तं विकरोति कामः ॥

**अकर्मकाच्च । १ । ३ । ३५ ॥**

वेः कृञ इत्येव ॥ छात्रा विकुर्वते । विकारं लभत इत्यर्थः ।

**संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगण-नव्ययेषु नियः । १ । ३ । ३६ ॥**

अत्रोत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः । इतरे

प्रयेगोपाधयः । तथाहि । शास्त्रे नयते । शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः । तेन च शिष्यसम्माननं फलितम् । उत्संजने । दण्डमुन्नयते । उत्क्षिपतीत्यर्थः । माणवकमुपनयते । विधिना आत्मसमीपं प्रापयतीत्यर्थः । तत्फलं माणवकसंस्कारः । तस्य चाकर्त्रभिप्रायत्वादप्राप्तमात्मनेपदमाचार्यकरणे विधीयते । उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियते । ज्ञाने । तत्त्वं नयते । निश्चिनोतीत्यर्थः । कर्मकरानुपनयते । भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः । विगणनमृणादेर्निर्यातनम् । करं विनयते । राज्ञो देयं भागं शोधयतीत्यर्थः । शतं विनयते । धर्मार्थे विनियुङ्क्ते इत्यर्थः । एषु किम् । घटं नयति ॥

## कर्तृस्थे चाशरीरे कर्मणि । १ । ३ । ३७ ॥

नियः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्न एव स्यात् ॥ सूत्रे शरीरशब्देन तदवयवो लक्ष्यते । शरीरतादात्म्यापन्नस्य कर्तृतया शरीरस्य तत्स्थत्वासम्भवात् । अवयवानां तु सम्बन्धविशेषेण तत्स्थत्वस्यानुभवात् । क्रोधं विनयते । अपगमयति । तत्फलस्य चित्तप्रसादस्य कर्तृगत्वात्स्वरितञित इत्येव सिद्धे नियमार्थमिदम् । तेनेह न । गडुं विनयति । कथं तर्हि विगणय्य नयन्ति पौरुषमिति । कर्तृगामित्वाविवक्षायां भविष्यति ॥

## वृत्तिसर्गतायनेषु क्रमः । १ । ३ । ३८ ॥

वृत्तिरप्रतिबन्धः । ऋचि क्रमते बुद्धिः । न प्रतिहन्यत इत्यर्थः । सर्ग उत्साहः । अध्ययनाय क्रमते । उत्सहते । तायनं स्फीतता । क्रमन्ते अस्मिन् शास्त्राणि । स्फीतानि भवन्तीत्यर्थः ॥

## उपपराभ्याम् । १ । ३ । ३९ ॥

वृत्त्यादिष्वर्थेषु आभ्यामेव क्रमतेर्न तूपसर्गान्तरपूर्वात् ॥ उपक्रमते । पराक्रमते । नेह । संक्रामति ॥

**आङ उद्गमने । १ । ३ । ४० ॥**

आक्रमते सूर्यः । उदयते इत्यर्थः ॥ ज्योतिरुद्गमन इति वाच्यम् ॥ * ॥ नेह । आक्रामति धूमो हर्म्यतलात् ॥

**वेः पादविहरणे । १ । ३ । ४१ ॥**

साधु विक्रमते वाजी । पादविहरणे किम् । विक्रामति सन्धिः । द्विधा भवति । स्फुटतीत्यर्थः ॥

**प्रोपाभ्यां समर्थाभ्याम् । १ । ३ । ४२ ॥**

समर्थौ तुल्यार्थौ । शकन्ध्वादित्वात्पररूपम् । प्रारम्भेऽनयोस्तुल्यार्थता । प्रक्रमते । उपक्रमते । समर्थाभ्यां किम् । प्रक्रामति । गच्छतीत्यर्थः । उपक्रामति । आगच्छतीत्यर्थः ॥

**अनुपसर्गाद्वा । १ । ३ । ४३ ॥**

क्रामति । क्रमते । अप्राप्तविभाषेयम् । वृत्त्यादौ तु नित्यमेव ॥

**अपह्नवे ज्ञः । १ । ३ । ४४ ॥**

शतमपजानीते । अपलपतीत्यर्थः ॥

**अकर्मकाच्च । १ । ३ । ४५ ॥**

सर्पिषो जानीते । सर्पिषा उपायेन प्रवर्त्तत इत्यर्थः ॥

**सम्प्रतिभ्यामनाध्याने । १ । ३ । ४६ ॥**

शतं संजानीते । अवेक्षत इत्यर्थः । शतं प्रतिजानीते । अङ्गीकरोतीत्यर्थः । अनाध्याने इति योगो विभज्यते । तत्सामर्थ्या-

दकर्मकाच्चेति प्राप्तिरपि वार्यते । मातरं मातुर्वा संजानाति । उत्क ण्ठापूर्वकं स्मरतीत्यर्थः । कर्मणः शेषत्वविवक्षायां षष्ठी ॥

**भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः । १ । ३ । ४७ ॥**

उपसम्भाषोपमन्त्रणे धातोर्वाच्ये । इतरे प्रयोगोपाधयः । शास्त्रे वदते । भासमानो ब्रवीतीत्यर्थः । शिष्यैः स्तूयमानो हि भासते । तथा चोपर्युपरि शास्त्रार्थप्रतिभासात्सुष्टूक्तिर्निर्वहति । तेजोभङ्गे तु न शक्नुयाद्वदितुमिति भावः । उपसम्भाषोपसान्त्वनम् । भृत्यानुपवदते । सान्त्वयतीत्यर्थः । ज्ञाने । शास्त्रे वदते । उक्तिविषयकज्ञानवानिति फलितोऽर्थः । यत्न उत्साहः । क्षेत्रे वदते । तद्विषयकमुत्साहमाविष्करोतीत्यर्थः । विमतौ । क्षेत्रे विवदन्ते विमत्या हेतुभूतया नानाविधं भाषत इत्यर्थः । उपमन्त्रणमुपच्छन्दनम् । भार्यामुपवदते । स्वाभिलषिते प्रवर्तयितुं प्रार्थयते इत्यर्थः । एषु किम् । यत्किञ्चिद्वदति ॥

**व्यक्तवाचां समुच्चारणे । १ । ३ । ४८ ॥**

मनुष्यादीनां संभूयोच्चारणे वदेरात्मनेपदं स्यात् ॥ सम्प्रवदन्ते ब्राह्मणाः । नेह । सम्प्रवदन्ति खगाः ॥

**अनोरकर्मकात् । १ । ३ । ४९ ॥**

व्यक्तवाग्विषयादनुपूर्वादकर्मकाद्वदेरात्मनेपदं स्यात् ॥ अनुवदते कठः कलापस्य । अनुः सादृश्ये । तेन कलापस्येति तुल्यार्थयोगे शेषलक्षणा षष्ठी । अकर्मकात्किम् । व्यक्तमनुवदति । व्यक्तवाचां किम् । अनुवदति वीणा ॥

**विभाषा विप्रलापे । १ । ३ । ५० ॥**

विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणे उक्तं वा स्यात् । विप्रवदन्ते । विप्रवदन्ति वा वैद्याः ॥

**अवाद् ग्रः । १ । ३ । ५१ ॥**

अवगिरते । गृणातिस्त्ववपूर्वो न प्रयुज्यत एवेति भाष्यम् ॥

**समः प्रतिज्ञाने । १ । ३ । ५२ ॥**

शब्दं नित्यं सङ्गिरते । प्रतिजानीत इत्यर्थः । प्रतिज्ञाने किम् । सङ्गिरति ग्रासम् ॥

**उदश्चरः सकर्मकात् । १ । ३ । ५३ ॥**

धर्ममुच्चरते । उल्लंघ्य गच्छतीत्यर्थः । सकर्मकात्किम् । बाष्प उच्चरति । उपरिष्टाद्गच्छतीत्यर्थः ॥

**समस्तृतीयायुक्तात् । १ । ३ । ५४ ॥**

रथेन सञ्चरते । तृतीयेति किम् । उभौ लोकौ सञ्चरसि इमञ्चामुञ्च देवल ॥

**दाणश्च सा चेच्चतुर्थ्यर्थे । १ । ३ । ५५ ॥**

सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्तृतीया चेच्चतुर्थ्यर्थे ॥

अशिष्टव्यवहारे इति वक्तव्यम् ॥ * ॥ दास्या संयच्छते । धर्मे तु भार्यायै संयच्छति । पूर्वसूत्रे सम इति षष्ठी । तेन सूत्रद्वयमिदं व्यवहितेऽपि प्रवर्तते । रथेन समुदाचरते । दास्या सम्प्रयच्छते ॥

**उपाद्यमः स्वकरणे । १ । ३ । ५६ ॥**

स्वकरणं स्वीकारः ॥ भार्यामुपयच्छते ।

**ज्ञाश्रुस्मृदृशां सनः । १ । ३ । ५७ ॥**

सन्नन्तानामेषां प्राग्वत् ॥ धर्मं जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते ॥

## नानोर्ज्ञः । १ । ३ । ५८ ॥

पुत्रमनुजिज्ञासति। पूर्वसूत्रस्यैवायं निषेधः। अनन्तरस्येति न्यायात्। तेनेह न। सर्पिषोऽनुजिज्ञासते। सर्पिषा प्रवर्तितुमिच्छतीत्यर्थः। पूर्ववत्सन इति तङ्। अकर्मकाच्चेति केवलाद्विधानात्।

## प्रत्याङ्भ्यां श्रुवः । १ । ३ । ५९ ॥

आभ्यां सन्नन्ताच्छ्रुव उक्तं न स्यात्। प्रतिशुश्रूषति। आशुश्रूषति। कर्मप्रवचनीयात्स्यादेव। देवदत्तं प्रति शुश्रूषते॥

## शदेः शितः । १ । ३ । ६० ॥

शितः प्रकृतिभूतो यः शदिस्तस्मादात्मनेपदं स्यात्। शद्लृ शातने इति पठ्यते। विशीर्णतायामयम्। शातनन्तु विषयतया निर्दिश्यते। ज्वलादावस्य पाठो णार्थः। तुदादौ पुनः पाठः स्वरार्थ एव। शबनुदात्तः। शस्तूदात्तः। न तु सदिवन्नुम्विकल्पार्थोऽपि। शदेः शित इत्यात्मनेपदोक्तेरस्माच्छत्रभावात्। शीयते। शितः किम्। शत्स्यति॥

## म्रियतेर्लुङ्लिङोश्च । १ । ३ । ६१ ॥

लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र॥ अमृत। मृषीष्ट। म्रियते। म्रियेत। नियमः किम्। ममार। ङित्त्वं तु स्वरार्थम्। मा हि मृत। लुङि तास्यनुदात्तेदिति ङिल्लक्षणः सार्वधातुकनिघातः। हि चेति तिङ्घातो न॥

## पूर्ववत्सनः । १ । ३ । ६२ ॥

सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्॥ येन निमित्तेन सन्प्रकृतेरात्मनेपदं विधीयते तदेव निमित्तं सना व्यवहितं सदप्यात्मनेपदं प्रवर्तयतीत्यर्थः। एदिधिषते। शिशयि-

षते । निविविक्षते । बुभुक्षते इत्यादि । शिशत्सति । मुमूर्षतीत्यत्र तु न । न ह्येषा शदिम्रियतिव्यक्तिः शितः प्रकृतिः । अतो नात्मनेपदनिमित्तम् । कृते हि सनि सन्नन्तमेव शितः प्रकृतिः । शिशयिषते इत्यादौ तु प्रकृतौ ङित्वानपायान्निमित्तातिदेशः सम्भवत्येवेति वैषम्यात् । नन्वेवमनुचिकीर्षतीत्यत्रातिप्रसङ्गः । गन्धनादेरर्थस्य ञित्त्वस्य चात्मनेपदनिमित्तस्यातिदेशापत्तेरिति चेन्न । अनुपराभ्यां कृञ इति वचनपर्यालोचनया अनुपूर्वकत्वाभावविशिष्टस्यैवात्मनेपदनिमित्तताया अध्यवसायात् । अस्तु वा प्राधान्यात्कार्यस्यैवातिदेशः । प्राक् सनो येभ्य आत्मनेपदं दृष्टं तेभ्यः सन्नन्तेभ्योऽपि भवतीति । न चैवं शिशत्सति मुमूर्षतीत्यत्रातिप्रसङ्गः । शदेरित्यादिसूत्रद्वये सनो नेत्यनुवर्त्य वाक्यभेदेन व्याख्यानात् । अस्मिन्पक्षे जुगुप्सते इत्यादौ यथाऽऽत्मनेपदं तथा गुप्तिजित्यत्र वक्ष्यामः । पूर्ववत्किम् । बुभूषति ॥

## आम्प्रत्ययवत्कृञो ऽनुप्रयोगस्य । १ । ३ । ६३ ॥

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यात् ॥ एधाञ्चक्रे । ञित्वादेव सिद्धे अकर्त्रभिप्रायार्थमिदम् । इह पूर्ववदित्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । पूर्ववदेवात्मनेपदं न तु तद्विपरीतमिति । तेन कर्तृगेऽपि क्रियाफले इन्दाञ्चकारेत्यादौ नात्मनेपदम् । कृञः किम् । एधामास । एधाम्बभूव । इह कृञ्ग्रहणसामर्थ्यान्न प्रत्याहारग्रहणम् ॥

## प्रोपाभ्यां युजेरयज्ञपात्रेषु । १ । ३ । ६४ ॥

प्रयुङ्क्ते । उपयुङ्क्ते ॥ स्वराद्यन्तोपसर्गादिति वक्तव्यम् ॥ * ॥ उद्युङ्क्ते । नियुङ्क्ते । अयज्ञपात्रेषु किम् । द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति ॥

**समः क्ष्णुवः । १ । ३ । ६५ ॥**

संक्ष्णुते शस्त्रम् ॥

**भुजोऽनवने । १ । ३ । ६६ ॥**

ओदनं भुङ्क्ते । अभ्यवहरतीत्यर्थः । बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् । वृद्धो जनो दुःखशतानि भुङ्क्ते । इहोपभोगो भुजेरर्थः । अनवने किम् । महीं भुनक्ति । संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वान्नेह । विभुजति पाणिम् । भुजो कौटिल्ये इति तुदादिः ॥

**णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने । १ । ३ । ६७ ॥**

ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव चेण्ण्यन्तेनोच्येत अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यान्नत्वाध्याने ॥ णिचश्चेति सिद्धे ऽकर्त्रभिप्रायार्थमिदम् । कर्त्रभिप्राये तु विभाषोपपदेनेति विकल्पे ऽणावकर्मकादिति परस्मैपदे च परत्वात्प्राप्ते पूर्वविप्रतिषेधेनेदमेवेष्यते । कर्तृस्थभावकाः कर्तृस्थक्रियाश्चोदाहरणम् । तथाहि । निवृत्तप्रेषणपक्षमाह । पश्यन्ति भवं भक्ताः । चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः । प्रेरणांशत्यागे पश्यति भवः । विषयो भवतीत्यर्थः । ततो हेतुमण्णिच् । दर्शयन्ति भवं भक्ताः । पश्यन्तीत्यर्थः । पुनर्ण्यर्थस्याविवक्षायां दर्शयते भवः । इह प्रथमतृतीययोरवस्थयोर्द्वितीयचतुर्थ्योश्च तुल्योऽर्थः । तत्र तृतीयकक्ष्यायां न तङ् । क्रियासाम्येऽप्यणौ कर्मकारकस्य णौ कर्तृत्वाभावात् । चतुर्थ्यान्तु तङ् । द्वितीयामादाय क्रियासाम्यात् । प्रथमायां कर्मणो भवस्येह कर्तृत्वाच्च । एवमारोहयते हस्तीत्यप्युदाहरणम् । आरोहन्ति हस्तिनं हस्तिपकाः । न्यग्भावयन्तीत्यर्थः । तत आरोहति हस्ती । न्यग्भवतीत्यर्थः । ततो

णिच् । आरोहयन्ति । आरोहन्तीत्यर्थः । तत आरोहयते । न्यग्भवतीत्यर्थः । अध्यारोपितप्रेषणपक्षमाह । यद्वा पश्यन्त्यारोहन्तीति प्रथमकक्ष्या प्राग्वत् । ततः कर्मण एव हेतुत्वारोपाण्णिच् । दर्शयति भवः । आरोहयति हस्ती । पश्यत आरोहतश्च प्रेरयतीत्यर्थः । ततो णिज्भ्यां तत्प्रकृतिभ्यां च उपात्तयोर्द्वयोरपि प्रेषणयोस्त्यागे दर्शयते आरोहयते इत्युदाहरणम् । अर्थः प्राग्वत् । अस्मिन्पक्षे द्वितीयकक्ष्यायां न तङ् । समानक्रियत्वाभावात् । णिजर्थस्याधिक्यात् । अनाध्याने किम् । स्मरति वनगुल्मं कोकिलः । स्मरयति वनगुल्मः । उत्कण्ठापूर्वकस्मृतौ विषयो भवतीत्यर्थः ॥

## भीस्म्योर्हेतुभये । १ । ३ । ६८ ॥

ण्यन्ताभ्यामाभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयौ ॥ सूत्रे भयग्रहणं धात्वर्थोपलक्षणम् । मुण्डो भीषयते । भियो हेतुभये षुक् । बिभेतेर्हेतुभये इत्यात्वपक्षे भापयते । अत्र षुङ् न । तद्विधावीकारप्रश्लेषात् । जटिलो विस्मापयते । नित्यं स्मयतेरित्यात्वम् । हेतोश्चेद्भयस्मयावित्युक्तेर्नेह । कुञ्चिकयैनं भाययति । रूपेण विस्माययति ॥

## गृधिवञ्च्योः प्रलम्भने । १ । ३ । ६९ ॥

प्रतारणेऽर्थे ण्यन्ताभ्यामाभ्यां प्राग्वत् ॥ माणवकं गर्धयते । वञ्चयते वा । प्रलम्भने किम् । श्वानं गर्धयति । अभिकाङ्क्षामस्योत्पादयतीत्यर्थः । अहिं वञ्चयति । वर्जयतीत्यर्थः ॥

## लियः सम्माननशालीनीकरणयोश्च । १ । ३ । ७० ॥

लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजाभिभवयोः प्रलम्भने चार्थे ॥ जटाभिर्लापयते । पूजामधिगच्छतीत्यर्थः । श्येनो वर्तिकामुल्लापयते । अभिभवतीत्यर्थः । बालमुल्लापयते । वञ्चयते इ-

त्यर्थः। विभाषालीयतेरित्यात्वं व्यवस्थितविभाषात्वेनाच नित्यमन्यच विकल्पेन। सम्माननादिष्विति किम्। बालकमुल्लापयति। आश्लेषयतीत्यर्थः॥

**मिथ्योपपदात्कृञो ऽभ्यासे। १। ३। ७१।**

णेरित्येव॥ पदं मिथ्या कारयते। स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः। मिथ्योपपदात्किम्। पदं सुष्ठु कारयति। अभ्यासे किम्। सकृत्पदं मिथ्या कारयति॥

**स्वरितञितः कर्त्रभिप्राये क्रियाफले। १। ३। ७२।**

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले॥ यजते। पचते। सुनुते। कुरुते। कर्त्रभिप्राये किम्। यजन्ति याजकाः। सुन्वन्ति। पचन्ति पाचकाः। कुर्वन्ति कर्मकराः॥

**अपाद्वदः। १। ३। ७३॥**

न्यायमपवदते। कर्त्रभिप्राय इत्येव। अपवदति॥

**णिचश्च। १। ३। ७४॥**

णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले॥ कारयते॥

**समुदाङ्भ्यो यमो ऽग्रन्थे। १। ३। ७५॥**

अग्रन्थे इति च्छेदः। व्रीहीन्संयच्छते। भारमुद्यच्छते। वस्त्रमायच्छते। अग्रन्थे किम्। उद्यच्छति वेदम्। अधिगन्तुमुद्यमं करोतीत्यर्थः। कर्त्रभिप्राये इत्येव॥

**अनुपसर्गाज्ज्ञः। १। ३। ७६॥**

कर्त्रभिप्राये इत्येव॥ गां जानीते। अनुपसर्गात्किम्। स्वर्गं लोकं न प्रजानाति। कथं तर्हि भट्टिः। इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्येति। कर्मणि लिट्। नृपेणेति विपरिणामः॥

**विभाषोपपदेन प्रतीयमाने। १। ३। ७७॥**

स्वरितञित इत्यादि पञ्चसूच्या यदात्मनेपदं विहितं तत्समीपोच्चारितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते उक्तार्थानामप्रयोगादप्राप्तं वा स्यात् ॥ स्वं यज्ञं यजति । यजते वा । स्वं कटं करोति । कुरुते वा । स्वं पुत्रमपवदति । अपवदते वा । स्वं यज्ञं कारयति । कारयते वा । स्वं व्रीहिं संयच्छति । संयच्छते वा । स्वां गां जानाति । जानीते वा ॥

**शेषात्कर्तरि परस्मैपदम् । १ । ३ । ७८ ॥**

आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ॥ याति । वाति ॥

**अनुपराभ्यां कृञः । १ । ३ । ७९ ॥**

कर्तृगेऽपि फले गन्धनादौ च परस्मैपदार्थमिदम् ॥ अनुकरोति । पराकरोति । कर्तरीत्येव । भावकर्मणोर्माभूत् । न चैवमपि कर्मकर्तरि प्रसङ्गः । कार्यातिदेशपक्षस्य मुख्यतया तत्र कर्मवत्कर्मणेत्यात्मनेपदेन परत्वास्य बाधात् । शास्त्रातिदेशपक्षे तु कर्तरि कर्मत्यातः शेषादित्यतश्च कर्तृग्रहणद्वयमनुवर्त्य कर्तैव यः कर्ता न तु कर्मकर्ता तत्रेति व्याख्येयम् ॥

**अभिप्रत्यतिभ्यः क्षिपः । १ । ३ । ८० ॥**

क्षिप प्रेरणे । स्वरितेत् । अभिक्षिपति ॥

**प्राद्वहः । १ । ३ । ८१ ॥**

वह प्रापणे । स्वरितेत् । प्रवहति ॥

**परेर्मृषः । १ । ३ । ८२ ॥**

मृष तितिक्षायाम् । स्वरितेत् । परिमृष्यति । भौवादिकस्य परिमर्षति । इह परेरिति योगं विभज्य वहेरपीति केचित् ॥

**व्याङ्परिभ्यो रमः । १ । ३ । ८३ ॥**

विरमति ॥

**उपाच्च । १ । ३ । ८४ ॥**

यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ॥

**विभाषाऽकर्मकात् । १ । ३ । ८५ ॥**

उपाद्रमेरकर्मकात्परस्मैपदं वा ॥ उपरमति । उपरमते वा । निवर्तते इत्यर्थः ॥

**बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः । १ । ३ । ८६ ॥**

एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् ॥ णिचश्चेत्यस्यापवादः । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । अध्यापयति । प्रावयति । प्रापयतीत्यर्थः । द्रावयति । विलापयतीत्यर्थः । स्रावयति । स्यन्दयतीत्यर्थः ॥

**निगरणचलनार्थेभ्यश्च । १ । ३ । ८७ ॥**

निगारयति । आशयति । भोजयति । चलयति । कम्पयति ॥ अदेः प्रतिषेधः ॥ * ॥ गतिबुद्धीति सूत्रे भाष्ये उक्तमेतत् । आदयते देवदत्तेन । गतिबुद्धीति कर्मत्वमादिखाद्योर्नेति प्रतिषिद्धम् । निगरणचलनेति सूत्रेण प्राप्तस्यैवायं प्रतिषेधः । णेरणादित्यकर्त्रभिप्राये परस्मैपदं स्यादेव । आदयत्यन्नं बटुना ॥

**अणावकर्मकाच्चित्तवत्कर्तृकात् । १ । ३ । ८८ ॥**

ण्यन्तात् परस्मैपदं स्यात् ॥ शेते कृष्णः । तं गोपी शाययति ।

**न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः । १ । ३ । ८९ ॥**

एभ्यो णयन्तेभ्यः परस्मैपदं न ॥ पिबतिर्निगरणार्थः । इतरे चित्तवत्कर्तृकाकर्मकाः । नृतिश्चलनार्थोऽपि । तेन सूत्रद्वयेन प्राप्तिः । पाययते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते ॥ धेट उपसंख्यानम् ॥ * ॥ धापयेते शिशुमेकं समीची । अकर्त्रभिप्राये शेषादिति परस्मैपदं स्यादेव । वत्सान्पाययति पयः । दमयन्ती कमनीयतामदम् । भिक्षा वासयति ॥

**वा क्यषः । १ । ३ । ९० ॥**

लोहितायति । लोहितायते ॥

**द्युद्भ्यो लुङि । १ । ३ । ९१ ॥**

अद्युतत् । अद्योतिष्ट ॥

**वृद्भ्यः स्यसनोः । १ । ३ । ९२ ॥**

वर्त्स्यति । वर्तिष्यते । विवृत्सति । विवर्तिषते ॥

**लुटि च क्लृपः । १ । ३ । ९३ ॥**

कल्प्तासि । कल्पितासे । कल्प्तासे । कल्प्स्यति । कल्पिष्यते । कल्प्स्यते । चिक्लृप्सति । चिकल्पिषते । चिक्लृप्सते ॥

इति श्रीव्याकरणदीपिकायां वृत्तौ प्रथमस्याध्यायस्य तृतीयः पादः ॥



# अथ प्रथमाध्यायस्य चतुर्थः पादः ।

## आकडारादेका संज्ञा ।१।४।१॥

इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया ॥ या परा ऽनवकाशा च । तत्र परस्या उदाहरणम् । धनुषा विध्यतीति । शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकतमत्वमित्युभयप्रसङ्गे परत्वात्करणसंज्ञाऽपादानसंज्ञां बाधते । तथा कांस्यपात्र्यां भुङ्क्ते इत्यधिकरणसंज्ञा धनुर्विध्यतीति कर्तृसंज्ञा च । अनवकाशायास्तु दतः दतेति । पद्दन्निति दन्तस्य दत् । यसादावचि भसंज्ञैव न पदसंज्ञा । अतोऽत्र जश्त्वं न ॥

## विप्रतिषेधे परं कार्यम् ।१।४।२॥

तुल्यबलविरोधे परं कार्यं स्यात् ॥ अतो दीर्घो यञि सुपि चेत्यस्यावकाशो वृक्षाभ्याम् । बहुवचने झल्येदित्यस्य वृक्षेषु । इहोभयं प्राप्नोति । वृक्षेभ्यः । परं भवति विप्रतिषेधेन ॥

## यू स्त्र्याख्यौ नदी ।१।४।३॥

ईदूदन्तौ नित्यस्त्रीलिंगौ नदीसंज्ञौ स्तः ॥ गौर्यै । वध्वै । यू किम् । मात्रे । स्वस्रे । स्त्र्याख्यौ किम् । ग्रामण्ये । हूहूवे । प्रधीशब्दस्य तु वृत्तिकारादीनां मते लक्ष्मीवद्रूपम् । पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति स्वीकारात् । लिंगांतरानभिधायकत्वं तदिति कैयटमते तु पुंवद्रूपम् । प्रकृष्टा धीरिति विग्रहे तु लक्ष्मीवत् । अमि शसि च प्रध्यं प्रध्य इति विशेषः । सुष्ठु धीर्यस्याः सुष्ठु ध्याय-

तीति वा विग्रहे वृत्तिकारमते सुधीः श्रीवत् । मतान्तरे तु पुंवत् । सुष्ठु धीरिति विग्रहे तु श्रीवदेव । ग्रामणीः पुंवत् । ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं विना स्त्रियामप्रवृत्तेः । एवं खलपवनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ॥ प्रथमलिंगग्रहणं च ॥ * ॥ पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः । प्रयोजनं क्विप्लुप्समासाः । कुमारीमिच्छन्कुमारीवाचरन् ब्राम्हणः कुमारी । तस्मै कुमार्यै ब्राम्हणाय । खरकुट्यै ब्राम्हणाय । लुम्मनुष्ये इति लुप् । समासे । अतिलक्ष्म्यै । बहुश्रेयस्यै ब्राम्हणाय ॥

## नेयङुवङ्स्थानावस्त्री १ । ४ । ४ ॥

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री ॥ हे श्रीः । हे भ्रूः । अस्त्रीति किम् । हे स्त्रि । कथं तर्हि क्षापितः क्वासि हे सुभ्रु इति भट्टिः । प्रमाद एवायमिति बहवः ॥

## वामि १ । ४ । ५ ॥

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री ॥ श्रीणाम् । श्रियाम् । भ्रूणाम् । भ्रुवाम् । अस्त्री किम् । स्त्रीणाम् ॥

## ङिति ह्रस्वश्च १ । ४ । ६ ॥

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इउवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे ॥ श्रियै । श्रिये । भ्रुवै । भ्रुवे । श्रियाः२ । श्रियः२ । भ्रुवाः२ । भ्रुवः२ । श्रियाम् । श्रियि । भ्रुवाम् । भ्रुवि । अस्त्री किम् । स्त्रियै । नित्यस्त्रीलिंगो किम् । अतिश्रिये । कटप्रुवे ब्राम्हण्यै । ह्रस्वयोर्यथा । मत्यै । मतये । धेन्वै । धेनवे । स्त्रीलिंगो किम् । अग्नये । वायवे । ह्रस्ववाक्ये नित्यस्त्री-

लिंगाविति नियमो नाश्रीयते । तेन हष्वयनिप्रभृतीनामुभयलिङ्गानां स्त्रियां वृत्तौ नदीत्वविकल्पो भवत्येव॥

**शेषो घ्यसखि १ । ४ । ७ ॥**

अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञं स्यात्॥ हरये । भानवे । शेषः किम् । मत्यै । एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थम् । ह्रस्वौ किम् । वातप्रम्ये । इदुतौ किम् । मात्रे। असखि किम् । सख्या सख्ये । सख्युः२ । सख्यौ । इह तु समुदायस्य सखिरूपत्वाभावेनासखीति निषेधाप्रवृत्तेर्घिसंज्ञा । सुसखिना । सुसखये । ङसिङसोर्गुणे कृते कृतयणादेशत्वाभावात् ख्यत्यादित्युत्वं न । सुसखेः । सुसखौ । एवमतिशयितेन सख्या अतिसखिना । परमः सखा यस्य तेन परमसखिना । सखीमतिक्रान्तेनातिसखिनेत्यादि ॥

**पतिः समास एव । १ । ४ । ८ ॥**

पतिशब्दः समास एव घिसंज्ञः स्यात् ॥ भूपतये । नेह । पत्या । पत्ये । इह तु सुसखिन्यायेन स्यादेव । बहुपतिना । बहुव्प्रत्ययः ॥

**षष्ठीयुक्तश्छन्दसि वा । १ । ४ । ९ ॥**

षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसंज्ञो वा स्यात् ॥ क्षेत्रस्य पतिना वयम् । इह वेति योगं विभज्य छन्दसीत्यनुवर्तते । तेन सर्वे विधयश्छन्दसि वैकल्पिकाः । बहुलं छन्दसीत्यादिरस्यैव प्रपञ्चः ॥

**ह्रस्वं लघु । १ । ४ । १० ॥**

ह्रस्वं लघुसंज्ञं स्यात् ॥ लघूपधगुणः । चेतति । न च ह्रस्वप्रदेशेष्वपि लघुसंज्ञयैव व्यवहारः सुकरः । सर्पिष्टमित्यादौ ह्रस्वात्तादौ तद्धित इति षत्वासिद्धिप्रसङ्गात् । गुरुसंज्ञया तत्र लघु-

संज्ञाया बाधात् । अत एवाततक्षदित्यादौ सन्वद्भावो न भवति ॥

**संयोगे गुरु । १ । ४ । ११ ॥**

संयोगे परे ह्रस्वमक्षरं गुरुसंज्ञं स्यात् ॥ शिक्षा । भिक्षा । गुरोश्च हल इत्यकारप्रत्ययः ॥

**दीर्घं च । १ । ४ । १२ ॥**

दीर्घं गुरुसंज्ञं स्यात् ॥ ईहांचक्रे ॥

**यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । १ । ४ १३ ॥**

यः प्रत्ययो यस्माद्विहितस्तदादि शब्दरूपं तस्मिन्प्रत्यये परे अङ्गसंज्ञं स्यात् ॥ रामेण । भवामि भविष्यामीत्यादौ विकरणविशिष्टास्यप्यङ्गसंज्ञार्थं तदादिग्रहणम् । तेनातो दीर्घो यञीति दीर्घः सिध्यति । न चारम्भसामर्थ्यम् । पय वय गतौ । आभ्यां यङ्लुकि पापामि । पापावः । पापामः । वावामि । वावावः । वावामः । इत्यादौ चरितार्थत्वात् । विधिरिति किम् । स्त्री इयती । प्रत्यये किम् । प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा माभूत् ।

**सुप्तिङन्तं पदम् । १ । ४ । १४ ॥**

सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ॥ ब्राह्मणा ऊचुः ॥

**नः क्ये । १ । ४ । १५ ॥**

क्यचि क्यङि च नान्तमेव पदसंज्ञं स्यात् नान्यत् ॥ नलोपः । राजीयति । राजायते । नान्तमेवेति किम् । वाच्यति ॥

**सिति च । १ । ४ । १६ ॥**

सिति प्रत्यये परे पूर्वं पदसंज्ञं स्यात् ॥ भसंज्ञापवादः । भवतष्ठक्छसौ । भवदीयः । ऊर्णायुः । ऋतोरण् । छन्दसि घस् । ऋतुः प्राप्तोऽस्य ऋत्वियः ॥

## स्वादिष्वसर्वनामस्थाने। १। ४। १७॥

कप्प्रत्ययावधिषु स्वादिषु असर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात्॥ राजभ्याम्। राजभिः। राजत्वम्। राजता। सर्वनामस्थाने तु। राजानौ। राजानः। भुवद्वद्भ्यो घारयद्वद्भ्य इति पदसंज्ञायामुपसंख्यानं कर्तव्यम्। तसौ मत्वर्थे इति भसंज्ञाया अपवादः॥

## यचि भम्। १। ४। १८॥

यकारादिष्वजादिषु च स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात्॥ गार्ग्यः। राज्ञः॥ नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्॥ * ॥ नभसा तुल्यं नभस्वत्। भत्वादुत्वाभावः। अङ्गिरस्वदङ्गिरः। मनुष्वदग्ने। जनेरुसीति विहित उसिप्रत्ययो मनेरपि बाहुलकात्। आदेशप्रत्यययोरिति षत्वम्॥ वृषन्वस्वश्वयोः॥ * ॥ वृषन्वर्षकं वसु यस्य सः वृषण्वसुः। वृषा अश्वो यस्य स वृषणश्वः। इहान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्राप्तो भत्वाद्बार्यते। अत एव पदान्तस्येति णत्वनिषेधोऽपि न। अल्लोपो न इति तु नानङ्गत्वात्। उपसंख्यानान्येतानि छन्दोविषयाणीति कैयटः॥

## तसौ मत्वर्थे। १। ४। १९॥

तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे॥ विद्युत्वान्। यशस्वान्। यशस्वी। तसौ किम्। तक्षवान्॥

## अयस्मयादीनिच्छन्दसि। १। ४। २०॥

एतानि छन्दसि साधूनि॥ भपदसंज्ञाधिकाराद्यथायोगं संज्ञाद्वयं बोध्यम्। तथा च वार्तिकम्॥ उभयसंज्ञान्यपीति वक्तव्यम्॥ * ॥ अयस्मयं पात्रम्। भत्वादुत्वं न। अयसो विकार

इत्यर्थे द्व्यचश्छन्दसीति मयट् । एतेन मयड्वैतयोर्भाषायामित्युक्तेः कथमिह मयडित्यपास्तम् । स सुष्टुभा स ऋक्वता गणेन । पदत्वात्कुत्वं भत्वाज्जश्त्वाभावः । जश्त्वविधानार्थाया: पदसंज्ञाया भत्वसामर्थ्येन बाधात् । नैनं हिन्वन्त्यपि वाजिनेषु । अत्र पदत्वाज्जश्त्वं भत्वात्कुत्वाभावः । वाचां इनाः प्रभवस्तेष्वित्यर्थः । छन्दसि किम् । अयोमयम् । आकृतिगणश्चायम् ॥

## बहुषु बहुवचनम् । १ । ४ । २१ ॥

बहुत्वे एतत् स्यात् । वृक्षाः सन्ति ॥

## द्व्येकयोर्द्विवचनैकवचने । १ । ४ । २२ ॥

द्वित्वैकत्वयोरेते स्तः ॥ वृक्षौ स्तः । वृक्षोऽस्ति ॥

## कारके ॥ १ । ४ । २३ ॥

इत्यधिकृत्य ॥

## ध्रुवमपाये ऽपादानम् । १ । ४ । २४ ॥

अपायो विश्लेषस्तस्मिन्साध्ये यद्ध्रुवमवधिभूतं कारकं तदपादानं स्यात् ॥ वृक्षात्पतति । ग्रामादायाति । धावतोऽश्वात्पतति । कारकं किम् । वृक्षस्य पर्णं पतति ॥ जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् ॥ * ॥ पापाज्जुगुप्सते । विरमति । धर्मात्प्रमाद्यति ॥

## भीत्रार्थानां भयहेतुः । १ । ४ । २५ ॥

भयार्थानां त्राणार्थानां च प्रयोगे भयहेतुरपादानं स्यात् ॥ चोराद्बिभेति । चोरात्त्रायते । भयहेतुः किम् । अरण्ये बिभेति । त्रायते वा ॥

## पराजेरसोढः । १ । ४ । २६ ॥

पराजेः प्रयोगे ऽसह्यो ऽर्थो ऽपादानं स्यात् ॥ अध्ययना-

त्पराजयते । ग्लायतीत्यर्थः । असोढः किम् । शत्रून्पराजयते । अभिभवतीत्यर्थः ॥

**वारणार्थानामीप्सितः । १ । ४ । २७ ॥**

वारणार्थानां प्रयोगे ईप्सितोऽर्थो ऽपादानं स्यात् ॥ प्रवृत्ति-विघातो वारणम् । यवेभ्यो गां वारयति । ईप्सितः किम् । यवेभ्यो गां वारयति क्षेत्रे ॥

**अन्तर्द्धौ येनादर्शनमिच्छति । १ । ४ । २८ ॥**

व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् ॥ मातुर्निलीयते कृष्णः । अन्तर्द्धौ किम् । चोरान्न दिदृक्षते । इच्छतिग्रहणं किम् । अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् ॥

**आख्यातोपयोगे । १ । ४ । २९ ॥**

नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात् ॥ उपाध्यायादधीते । उपयोगे किम् । नटस्य गाथां शृणोति ॥

**जनिकर्तुः प्रकृतिः । १ । ४ । ३० ॥**

जायमानस्य हेतुरपादानं स्यात् । ब्रह्मणः प्रजा जायन्ते ॥

**भुवः प्रभवः । १ । ४ । ३१ ॥**

भवनं भूः । भुवः कर्तुः प्रभवस्तथा ॥ हिमवतो गङ्गा प्रभवति । तत्र प्रकाशत इत्यर्थः ॥

**कर्मणा यमभिप्रैति स सम्प्रदानम् । १ । ४ । ३२ ॥**

दानस्य कर्मणा यमभिप्रैति स संप्रदानसंज्ञः स्यात् ॥ विप्राय गां ददाति ॥ क्रियया यमभिप्रैति सोऽपि सम्प्रदानम् ॥ * ॥

पत्ये शेते ॥ कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा ॥ * ॥ पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः ॥

**रुच्यर्थानां प्रीयमाणः । १ । ४ । ३३ ॥**

रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानं स्यात् ॥ हरये रोचते भक्तिः । अन्यकर्तृकोऽभिलाषो ऽत्र रुचिः । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री । प्रीयमाणः किम् । देवदत्ताय रोचते मोदकः पथि ॥

**श्लाघन्हुङ्स्थाशपां ज्ञीप्स्यमानः । १ । ४ । ३४ ॥**

एषां प्रयोगे बोधयितुमिष्टः सम्प्रदानं स्यात् ॥ गोपी स्मरात्कृष्णाय श्लाघते । ह्नुते । तिष्ठते । शपते वा । ज्ञीप्स्यमानः किम् । देवदत्ताय श्लाघते पथि ॥

**धारेरुत्तमर्णः । १ । ४ । ३५ ॥**

धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात् ॥ भक्ताय धारयति मोक्षं हरिः । उत्तमर्णः किम् । देवदत्ताय शतं धारयति ग्रामे ॥

**स्पृहेरीप्सितः । १ । ४ । ३६ ॥**

स्पृहयतेः प्रयोगे इष्टः सम्प्रदानं स्यात् ॥ पुष्पेभ्यः स्पृहयति ईप्सितः किम् । पुष्पेभ्यो वने स्पृहयति । ईप्सितमात्रे इयं संज्ञा । प्रकर्षविवक्षायां तु परत्वात्कर्मसंज्ञा । पुष्पाणि स्पृहयति ॥

**क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः । १ । ४ । ३७ ॥**

क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसंज्ञः स्यात् ॥ हरये क्रुध्यति । द्रुह्यति । ईर्ष्यति । असूयति । यं प्रति कोपः किम् । भार्यामीर्ष्यति । मैनामन्योऽद्राक्षीदिति । क्रोधोऽमर्षः । द्रोहोऽपकारः । ईर्ष्याऽक्षमा । गुणेषु दोषारोपोऽसूया । द्रोहादयोऽपि कोप-

प्रभवा एव गृह्यन्ते ऽतो विशेष्यं सामान्येन यं प्रति कोप इति ॥

**क्रुधद्रुहोरुपसृष्टयोः कर्म । १ । ४ । ३८ ॥**

सोपसर्गयोरनयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यात् ॥ क्रूरमभिक्रुध्यति । अभिद्रुह्यति ॥

**राधीक्ष्योर्यस्य विप्रश्नः । १ । ४ । ३९ ॥**

एतयोः कारकं सम्प्रदानं स्यात् ॥ यदीयो विविधः प्रश्नः क्रियते । कृष्णाय राध्यति । ईक्षते वा । पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः । शुभाशुभरूपकर्मणो धात्वर्थेऽन्तर्भावाज्जीवत्यादिवदकर्मकत्वम् । षष्ठ्यां प्राप्तायां वचनम् । अत एव राध्यतीति श्यन् । अकर्मकादेव तद्विधानात् । तथा च दिवाद्यन्तर्गणसूत्रम् । राधोऽकर्मकाद्वृद्धावेवेति । अस्यार्थः । एवकारो भिन्नक्रमः । राधोऽकर्मकादेव श्यन् । उदाहरणमाह । वृद्धाविति । अत एव कर्मवत्कर्मणेति सूत्रे राध्यत्योदनः स्वयमेवेति भाष्यं सङ्गच्छते । तत्र हि सिध्यतीत्यर्थः । एतेन "न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति । क्रियासमभिहारेण विराध्यन्तं क्षमेत कः" इति माघप्रयोगौ व्याख्यातौ । तत्र हि अपराध्यतीत्यस्य द्रुह्यतीति विराध्यन्तमित्यस्य च द्रुह्यन्तमित्यर्थः । एतेनैतयोः कर्म कारकं सम्प्रदानं स्यादिति व्याचक्षाणाः परास्ताः । यस्येत्यनर्थकम् । यं प्रतीत्यनुवृत्त्यैवेष्टसिद्धेः ॥

**प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता । १ । ४ । ४० ॥**

आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनरूपव्यापारस्य कर्ता सम्प्रदानं स्यात् ॥ विप्राय गां प्रतिशृणोति । आशृणोति वा । विप्रेण मह्यं देहीति प्रवर्तितः प्रतिजानीत इत्यर्थः ॥

**अनुप्रतिगृणश्च । १ । ४ । ४१ ॥**

आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसंज्ञं स्यात् ॥ होत्रे ऽनुगृणाति । होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः ॥

**साधकतमं करणम् । १ । ४ । ४२ ॥**

क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् ॥ काष्ठैः पचति । तमब्ग्रहणं किम् । गङ्गायां घोषः प्रतिवसति । यदा च तीरधर्मं आधारत्वं प्रवाहे उपचर्यते तदेदं प्रयोजनम् । यदा तु गङ्गाशब्द एव तीरे वर्तते तदा न प्रयोजनम् ॥

**दिवः कर्म च । १ । ४ । ४३ ॥**

दिवः साधकतमं कर्मसंज्ञं स्याच्चात्करणम् ॥ अक्षैरक्षान्वा दीव्यति ॥

**परिक्रयणे सम्प्रदानमन्यतरस्याम् । १ । ४ । ४४ ॥**

नियतकालं भृत्या स्वीकरणं परिक्रयणं तस्मिन्साधकतमं कारकं सम्प्रदानं स्याद्वा ॥ शतेन शताय वा परिक्रीतः ॥

**आधारो ऽधिकरणम् । १ । ४ । ४५ ॥**

कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात् ॥ औपश्लेषिको वैषयिको ऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छास्ति । सर्वस्मिन्नात्मास्ति ॥

**अधिशीङ्स्थासां कर्म । १ । ४ । ४६ ॥**

अधिपूर्वाणामेषामाधारः कर्म स्यात् ॥ अधिशेते । अधितिष्ठति । अध्यास्ते वा वैकुण्ठं हरिः ॥

**अभिनिविशश्च । १ । ४ । ४७ ॥**

अभिनीत्येतत्संघातपूर्वस्य विशतेराधारः कर्म स्यात् ॥ अभि-

निविशते सन्मार्गम् । परिक्रयणे सम्प्रदानमिति सूत्रादिह मण्डूकप्लुत्याऽन्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात्क्वचिन्न । पापे ऽभिनिवेशः ॥

## उपान्वध्याङ्वसः । १ । ४ । ४८ ॥

उपादिपूर्वस्य वसतेराधारः कर्म स्यात् ॥ उपवसति । अनुवसति । अधिवसति । आवसति वा वैकुण्ठं हरिः । अभुक्त्यर्थस्य न । ग्रामे उपवसति ॥

## कर्तुरीप्सिततमं कर्म । १ । ४ । ४९ ॥

कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ॥ हरिं भजति । कर्तुः किम् । माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषा न कर्तुः । तमप्ग्रहणं किम् । पयसा ओदनं भुङ्क्ते । कर्मेत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम् । अन्यथा गेहं प्रविशतीत्यत्रैव स्यात् ॥

## तथायुक्तं चानीप्सितम् । १ । ४ । ५० ॥

ईप्सिततमवत्क्रियायुक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात् ॥ ग्रामं गच्छन् तृणं स्पृशति । विषं भुङ्क्ते ॥

## अकथितं च । १ । ४ । ५१ ॥

अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् ॥

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमन्थमुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥

दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्मेति परिगणनं कर्तव्यमित्यर्थः । अन्यथा नटस्य शृणोतीत्यादावतिप्रसङ्गः स्यादिति भावः । गां दोग्धि पयः ।

बलिं याचते वसुधाम् । अविनीतं विनयं याचते । तण्डुलानोदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि । कारकं किम् । माणवकस्य पितरं धर्मं पृच्छति । अथेदं विचार्यते । कर्मणि विधीयमाना लकृत्यक्तखलर्थाः किं द्विकर्मकेभ्यो मुख्ये कर्मणि स्युर्गौणे वेति । अत्राहुः ।

गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ।
बुद्धिप्रत्यवसानार्थशब्दकर्मसु चेच्छया ॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानामिह निश्चितः ।
लकृत्यक्तखलर्थानां प्रयोगो भाष्यपारगैरिति ॥

क्रमेणोदाहरणानि । गौर्दुह्यते पयः । दोह्या । दुग्धा । सुदोहा । अजा ग्रामं नीयते । नेया । नीता । सुनया । बोध्यते माणवकं धर्मः । माणवको धर्ममिति वा । देवदत्तो ग्रामं गम्यते । गमयितव्यः । गमितः । सुगम इति । नन्वकर्मकाणां प्राकृतकर्माभावात्कथं द्विकर्मकता । तथा च णिजन्तात्प्रयोज्ये प्रत्ययोऽस्तु । आस्यते माणवक इति मासमिति तु प्रयोगोऽसङ्गत इति चेन्न । अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यमिति वचनात् । अस्योदाहरणानि । कुरून् स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते । इहाकर्मकाणां कालादिकर्मकाणां कर्मणि भावे च लकार इष्यते । मासो मासं वा आस्यते

देवदत्तेनेति । ननु भावे चाकर्मकेभ्य इति वचनान्मासादिकर्मका-
त्कथं भावे ल इति चेदुच्यते । अकर्मकेभ्य इत्यनेनान्तरङ्गं द्रव्यकर्म
व्युदस्यते न तु बहिरङ्गं कालादिकर्म । कर्मणीत्यत्र तु व्यक्तिपक्षा-
श्रयणादन्तरङ्गासन्निधौ बहिरङ्गे कालादिकर्मण्यपि प्रवृत्तिरविरुद्धा ।
जातिव्यक्तिपक्षयोर्लक्ष्यानुरोधेन व्यवस्थेति सिद्धान्तात् ॥

## गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मका-
## णामणि कर्ता स णौ । १ । ४ । ५२ ॥

गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणां चाणौ यः कर्ता स
णौ कर्म स्यात् ॥

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् ।
आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥
आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ।

गतीत्यादि किम् । पाचयत्योदनं देवदत्तेन । अण्यन्तानां
किम् । गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः ॥ नीवह्योर्न ॥ * ॥
नाययति वाहयति वा भारं भृत्येन ॥ नियन्तृकर्तृकस्य वहेरनि-
षेधः ॥ * ॥ वाहयति रथं वाहान्सूतः ॥ आदिखाद्योर्न ॥ * ॥ आ-
दयति खादयति वाऽन्नं बटुना ॥ भक्षेरहिंसार्थस्य न ॥ * ॥ भक्ष-
यत्यन्नं बटुना । अहिंसार्थस्य किम् । भक्षयति बलीवर्दान्सस्यम् ॥
जल्पतिप्रभृतीनामुपसंख्यानम् ॥ * ॥ जल्पयति भाषयति पुत्रं देव-
दत्तः ॥ दृशेश्च ॥ * ॥ दर्शयति हरिं भक्तान् । सूत्रे ज्ञानसामान्या-
र्थानामेव ग्रहणं न तु तद्विशेषाणामित्यनेन ज्ञाप्यते । तेन स्मरति
जिघ्रतीत्यादीनां न । स्मारयति घ्रापयति देवदत्तेन ॥ शब्दाय-
तेर्न ॥ * ॥ शब्दाययति देवदत्तेन । धात्वर्थसंगृहीतकर्मकत्वेना-

कर्मकत्वात्प्राप्तिः । येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽक-र्मकाः । नत्वविवक्षितकर्माणोऽपि । तेन मासमासयति देवदत्त-मित्यादौ कर्मत्वं भवति । देवदत्तेन पाचयतीत्यादौ तु न । गत्य-र्थाकर्मकश्लिषेति सूत्रेऽप्येवम् । अत एवाविवक्षितकर्मकेभ्यः पचि-ददातिप्रभृतिभ्यः कर्तरि क्तो न । अन्यथा पक्ववान् दत्तवानित्यर्थे पक्वो दत्त इति स्यादिति दिक् ॥

## हृक्रोरन्यतरस्याम् । १ । ४ । ५३ ॥

हृक्रोरणौ कर्ता णौ वा कर्म स्यात् ॥ हारयति कारयति वा भृत्येन भृत्यं वा कटम् ॥ अभिवादिदृशोरात्मनेपदे वेति वाच्यम् ॥ * ॥ अभिवादयते दर्शयते वा देवं भक्तेन भक्तं वा ॥

## स्वतन्त्रः कर्ता । १ । ४ । ५४ ॥

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥ देवदत्तः पचति । स्थाली पचति ॥

## तत्प्रयोजको हेतुश्च । १ । ४ । ५५ ॥

कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् ॥ संज्ञास-मावेशार्थश्चकारः । कुर्वन्तं प्रेरयति कारयति हरिः । हेतुत्वात्त-द्व्यापारे हेतुमति चेति णिच् । कर्तृत्वात्कर्तरि लकारः ॥

## प्राग्रीश्वरान्निपाताः । १ । ४ । ५६ ॥

इत्यधिकृत्य ॥

## चादयोऽसत्त्वे । १ । ४ । ५७ ॥

अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः ॥ च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । भूयस् । कूपत् । सूपत् । कुवित् । नेत् । चेत् । चण् । कच्चित् । यत्र । नह ।

हन्त । माकिः । माकीम् । नकिः । नकीम् । मा । माङ् । नञ् । यावत् । तावत् । त्वै । न्वै । श्रौषट् । वौषट् । स्वाहा । स्वधा । वषट् । तुम् । तथाहि । खलु । किल । अथ । सुष्ठु । स्म । आदह । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च । अवदत्तम् । अहंयुः । अस्तिक्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथा । कथा । च । पाट् । प्याट् । अङ्ग । हे । है । भोः । अये । द्य । विषु । एकपदे । युत् । आतः । चादिराकृतिगणः ॥

**प्रादयः । १ । ४ । ५८ ॥**

अद्रव्यार्थाः प्रादयस्तथा । प्र । परा । अप । सम् । अनु । अव । निस् । निर् । दुस् । दुर् । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप । एते प्रादयः ॥

**उपसर्गाः क्रियायोगे । १ । ४ । ५९ ॥**

**गतिश्च । १ । ४ । ६० ॥**

प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः ॥ प्रणायकः । प्रकृत्य । उपसर्गसंज्ञया समावेशार्थश्चकारः । अन्यथा पर्यायः स्यात् । तेन प्रणेयमित्यादौ णत्वं कृदुत्तरपदप्रकृतिस्वरश्च सिध्यति । इह यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः । योगग्रहणसामर्थ्यात् । तेन प्रगतो नायकोऽस्मात्प्रनायको देश इत्यत्र प्रवृद्धं कृतं प्रकृतमित्यत्र च णत्वं गतिरनन्तर इति स्वरश्च न । नयत्यर्थेकृञर्थविशेषकत्वे तु स्यादेव ॥

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ॥

आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥

वगाहः । अवगाहः । पिधानम् । अपिधानम् ॥ उपसर्गसं-

ज्ञायां मरुच्छब्दस्योपसंख्यानम् ॥ * ॥ मरुद्भिर्दत्तो मरुत्तः । उपसर्गसंज्ञाविधानसामर्थ्यादजन्तत्वाभावेऽप्यत्र उपसर्गात्त इति तत्वं प्रवर्तते इत्याहुः । एवं च मरुन्नयतीत्यत्र णत्वमपि प्राप्नोति तस्मात्तत्वे एव संज्ञा वक्तव्या । अत एव किविधिरङ् च न भवति । निपातसंज्ञा तु नास्त्येष्टा । तेन तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरे कृते मरुत्तशब्दो मध्योदात्तः । निपातत्वेत्वाद्युदात्तः स्यादिति दिक् । प्रकारान्तरेणापि तत्पूर्वमरुद्भ्यामिति मत्वर्थीयान्तो मरुत्तशब्दः सिद्ध्यति ॥ श्रच्छब्दस्याङ्विधावुपसंख्यानम् ॥ * ॥ श्रद्धा । भिदादिपाठात्प्रज्ञाश्रद्धेति निपातनाद्वा सिद्धम् ॥ अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् ॥ * ॥ एतच्चान्तरपरिग्रहे इत्यत्र भाष्ये स्थितम् । अन्तर्द्धा । अन्तर्द्धिः । अन्तर्णयति । अन्तर्भवाणि ॥ सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वेषु ॥ * ॥ सुलभम् । दुर्लभम् । उपसर्गात् खल्घञोरिति नुम्न । एतच्च प्रयोजनमापाततः । न सुदुर्भ्यां केवलाभ्यामिति सूत्रस्यावश्यारभ्यत्वात् । अन्यथाऽतिसुलम्भमित्यत्र नुम्न स्यात् । तत्वे । सुदत्तम् । अत्र उपसर्गादिति तत्वं माभूत् । षत्वे । दुःस्थितिः । सुसिक्तम् । सुः पूजायामिति तु कर्तव्यमेव । पूजायामिति विशेषणार्थम् । तेन सुषिक्तं किं तवात्रेत्यादौ षत्वं भवत्येव । णत्वे । दुर्नीतम् । दुर्नयः ॥ गतिसंज्ञायां कारिकाशब्दस्योपसंख्यानम् ॥ * ॥ कारिका क्रिया । मर्यादा स्थितिरित्यर्थः । यत्न इत्यपरे । धात्वर्थनिर्देशे ण्वुल् । यस्तु कर्तरि ण्वुलन्तः कारिका दासीति यश्च श्लोकवाची तयोर्नेह ग्रहणम् । व्याख्यानात् । कारिकाकृत्य । यत्कारिका करोति । तिङि चोदात्तवतीति गतेर्निघातः । निपातत्वादव्ययत्वे सति विभक्तेर्लुक् ।

पुनश्चनसौ छन्दसि गतिसंज्ञाविति वक्तव्यम् ॥ * ॥ पुनराधेयम् । गतित्वात्समासः । कृदुत्तरपदप्रकृतिस्वरेण यतो नाव इति धेशब्द उदात्तः । चनो हितः । चायतेरन्ने ह्रस्वश्चेत्यसुन्नन्तत्वान्निपातत्वाद्वा ऽऽद्युदात्तस्य चनःशब्दस्य गतिरनन्तर इति प्रकृतिस्वरः ॥

**ऊर्यादिच्विडाचश्च । १ । ४ । ६१ ॥**

एते क्रियायोगे गतिसंज्ञा स्युः ॥ ऊरीकृत्य । उररीकृत्य । शुक्लीकृत्य । पटपटाकृत्य ॥

**अनुकरणं चानितिपरम् । १ । ४ । ६२ ॥**

खाट्कृत्य । अनितिपरं किम् । खाडिति कृत्वा निरष्ठीवत् ॥

**आदरानादरयोः सदसती । १ । ४ । ६३ ॥**

सत्कृत्य । असत्कृत्य ॥

**भूषणे ऽलम् । १ । ४ । ६४ ॥**

अलङ्कृत्य । भूषणे किम् । अलङ्कृत्वोदनं गतः । पर्याप्तमित्यर्थः । अनुकरणमित्यादि त्रिसूची स्वभावात्कृञ्विषया ॥

**अन्तरपरिग्रहे । १ । ४ । ६५ ॥**

अन्तर्हत्य । मध्ये हत्वेत्यर्थः । अपरिग्रहे किम् । अन्तर्हत्वा गतः । हतं परिगृह्य गत इत्यर्थः । अयं भावः । हत्वा गमनं द्विधा । हतं त्यक्त्वा परिगृह्य चेति । आद्यमुदाहरणम् । द्वितीयं प्रत्युदाहरणम् । अपरिग्रहे इति च प्रयोगोपाधिर्न तु वाच्यकोटिनिविष्टमिति ॥

**कणेमनसी श्रद्धाप्रतीघाते । १ । ४ । ६६ ॥**

कणेहत्य पयः पिबति । मनोहत्य । कणेशब्दः सप्तमीप्र-

तिरूपको निपातोऽभिलाषातिशये वर्तते । मनःशब्दोऽप्यव्ययमेव । अतिशयेनाभिलष्य तन्निवृत्तिपर्यन्तं पिबतीत्यर्थः । ततश्च श्रद्धाया अपगमात्तत्प्रतीघातो गम्यते । श्रद्धाप्रतीघाते किम् । कणे हत्वा गतः । मनो हत्वा । सूक्ष्मतण्डुलावयवः कणस्तस्मिन्हत्वेत्यर्थः । मनःशब्दस्तु चेतसि ॥

## पुरोऽव्ययम् । १ । ४ । ६७ ॥

पूर्वाधरावराणामसीति व्युत्पादितोऽसिप्रत्ययान्तोऽव्ययं पुरःशब्दो गतिसंज्ञः स्यात् ॥ पुरस्कृत्य । अव्ययं किम् । पूः पुरौ पुरः कृत्वा ॥

## अस्तं च । १ । ४ । ६८ ॥

अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात् ॥ अस्तङ्गत्य । अव्ययं किम् । अस्तं कृत्वा काण्डं गतः । अस्तं काण्डम् क्षिप्तमित्यर्थः ॥

## अच्छ गत्यर्थवदेषु । १ । ४ । ६९ ॥

अव्ययमित्येव ॥ अच्छगत्य । अच्छोद्य । अभिमुखं गत्वा उक्त्वा चेत्यर्थः । अव्ययं किम् । जलमच्छं गच्छति ॥

## अदोऽनुपदेशे । १ । ४ । ७० ॥

अदःशब्दस्त्यदादिषु पठ्यते । सोऽनुपदेशे गतिसंज्ञः स्यात् ॥ उपदेशः परार्थकथनम् । अदःकृत्य । अदः कृतम् । यदा स्वयमेवेत्थं पर्यालोचयति तदेदमुदाहरणम् । परम्प्रत्युपदेशे तु प्रत्युदाहरणम् ।

## तिरोऽन्तर्द्धौ । १ । ४ । ७१ ॥

तिरोभूय । अन्तर्द्धौ किम् । तिरो भूत्वा स्थितः । पार्श्वतो भूत्वेत्यर्थः ॥

**विभाषा कृञि । १ । ४ । ७२ ॥**

प्राप्तविभाषेयम् । तिरोऽन्तर्द्धावित्यनुवृत्तेः । तिरःकृत्य । तिरस्कृत्य । तिरः कृत्वा । अन्तर्द्धौ किम् । तिरस्कृत्वा काण्डं तिष्ठति ॥

**उपाजेन्वाजे । १ । ४ । ७३ ॥**

एतौ कृञि वा गतिसंज्ञौ स्तः ॥ विभक्तिप्रतिरूपकौ निपातावेतौ दुर्बलस्य सामर्थ्याधाने वर्तेते । उपाजेकृत्य । उपाजे कृत्वा । अन्वाजेकृत्य । अन्वाजे कृत्वा । दुर्बलस्य बलमाधायेत्यर्थः ॥

**साक्षात्प्रभृतीनि च । १ । ४ । ७४ ॥**

कृञि वा गतिसंज्ञानि स्युः ॥ च्व्यर्थ इति वक्तव्यम् ॥ * ॥ साक्षात्कृत्य । साक्षात्कृत्वा । लवणंकृत्य । लवणं कृत्वा । मान्तत्वं निपातनात् । च्व्यन्ते तु पूर्वविप्रतिषेधादूर्यादिच्वीति नित्यैव संज्ञा । तेन लवणीकृत्येत्यत्र मान्तत्वं न । तद्धि विकल्पसन्नियोगेनेह गणे निपात्यते ॥

**अनत्याधान उरसिमनसी । १ । ४ । ७५ ॥**

विभक्तिप्रतिरूपकौ निपातावेतौ । कृञि वा गतिसंज्ञौ स्तः ॥ उरसिकृत्य । उरसि कृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य । मनसि कृत्वा । निश्चित्येत्यर्थः । अत्याधानमुपश्लेषस्तत्र न । उरसि कृत्वा पाणिं शेते ॥

**मध्येपदेनिवचने च । १ । ४ । ७६ ॥**

एते कृञि गतिसंज्ञा वा स्युरनत्याधाने ॥ मध्येकृत्य । मध्ये कृत्वा । पदेकृत्य । पदे कृत्वा । निवचनेकृत्य । निवचने कृत्वा ।

वाचं नियम्येत्यर्थः । निवचनं वचनाभावः । अविशेषेणैदन्तता निपात्यते । न तु संज्ञासन्नियोगेन । व्याख्यानात् । अनत्याधाने किम् । हस्तिनः पदे कृत्वा शिरः शेते ॥

## नित्यं हस्तेपाणावुपयमने । १ । ४ । ७७ ॥

कृञि ॥ उपयमनं विवाहः । स्वीकारमात्रमित्यन्ये । हस्तेकृत्य । पाणौकृत्य । एतौ निपातावित्येके । तत्पुरुषे कृतीत्यलुगिति कश्चित् । उपयमने किम् । हस्ते कृत्वा सुवर्णं गतो भृत्यः ॥

## प्राध्वं बन्धने । १ । ४ । ७८ ॥

प्राध्वमिति चादिषु पाठान्मान्तमव्ययमानुकूल्ये वर्त्तते ॥ तत्कृञि नित्यं गतिसंज्ञं स्यात् बन्धनहेतुकं चेदानुकूल्यम् ॥ प्राध्वंकृत्य । बन्धनेनानुकूलं कृत्वेत्यर्थः । प्रार्थनादिना त्वानुकूल्यकरणे प्राध्वं कृत्वा ॥

## जीविकोपनिषदावौपम्ये । १ । ४ । ७९ ॥

कृञि नित्यं गतिसंज्ञौ स्तः ॥ जीविकामिव कृत्वा जीविकाकृत्य । उपनिषदमिव कृत्वा उपनिषत्कृत्य । औपम्ये किम् । जीविकां कृत्वा ॥

## ते प्राग्धातोः । १ । ४ । ८० ॥

ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः ॥ तथैवोदाहृताः । तेग्रहणमुपसर्गार्थम् । गतयो ह्यनन्तराः । धातोः किम् । प्रकर्तुमैच्छत्प्राचिकीर्षदित्यत्र सनः प्राक् प्रयोगो माभूत् ॥

## छन्दसि परेऽपि । १ । ४ । ८१ ॥

## व्यवहिताश्च । १ । ४ । ८२ ॥

स्पष्टम् । हरिभ्यां याह्योक आ । आमन्द्रैरिन्द्र हरिभिर्याहि ॥

**कर्मप्रवचनीयाः । १ । ४ । ८३ ॥**

इत्यधिकृत्य ॥

**अनुर्लक्षणे । १ । ४ । ८४ ॥**

लक्षणे द्योत्ये ऽनुरुक्तसंज्ञः स्यात् ॥ गत्युपसर्गसंज्ञापवादः । जपमनु प्रावर्षत् । हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः । परा ऽपि हेतौ तृतीया ऽनेन बाध्यते । लक्षणेत्थम्भूतेत्यादिना सिद्धे पुनःसंज्ञाविधानसामर्थ्यात् । न च तृतीयार्थे इति सूत्रेण गतार्थता । तस्य पुरस्तादपवादन्यायेन सहयुक्तेऽप्रधाने इत्येतावन्मात्रबाधकत्वात् ॥

**तृतीयार्थे । १ । ४ । ८५ ॥**

अस्मिन्द्योत्येऽनुरुक्तसंज्ञः स्यात् ॥ नदीमन्ववसिता सेना । नद्या सह सम्बद्धेत्यर्थः । षिञ् बन्धने । अस्मात्कर्त्तरि क्तः ॥

**हीने । १ । ४ । ८६ ॥**

हीने द्योत्येऽनुः प्राग्वत् ॥ अनु हरिं सुराः । हरेर्हीना इत्यर्थः ॥

**उपो ऽधिके च । १ । ४ । ८७ ॥**

अधिके हीने च द्योत्ये उपेत्यव्ययं प्राग्वत् ॥ उपपरार्द्धे हरेर्गुणाः । परार्द्धादधिका इत्यर्थः । यस्मादधिकमिति सप्तमी । हीने । उपहरिं सुराः ॥

**अपपरी वर्जने । १ । ४ । ८८ ॥**

एतौ वर्जने कर्मप्रवचनीयौ स्तः ॥ अप हरेः परि परि हरेः संसारः । पञ्चम्यपाङ्परिभिरिति पञ्चमी । परेर्वर्जने इति द्विर्वचनम् । तद्धि पञ्चमीसहितेन कर्मप्रवचनीयेन द्योतितेऽपि वर्जने भवत्येव ।

उभयोरपि विधानसामर्थ्यात् । वर्जने किम् । परिषिञ्चति । सर्वत इत्यर्थः । अत्रोपसर्गत्वात्षत्वम् ॥

## आङ् मर्यादावचने । १ । ४ । ८९ ॥

आङुक्तसंज्ञः स्यान्मर्यादाशब्दो यस्मिन्सूत्रे उच्यते तत्रत्यश्चेत् ॥ आङ् मर्यादाभिविध्योरित्यत्रोपात्तो ह्यर्थ इत्यर्थः । आमुक्तेः संसारः । आबालेभ्यो हरिभक्तिः ॥

## लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः । १ । ४ । ९० ॥

एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः ॥ लक्षणे । वृक्षं प्रति पर्यनु वा विद्योतते विद्युत् । इत्थम्भूताख्याने । भक्तो विष्णुं प्रति पर्यनु वा । भागे । लक्ष्मीर्हरिं प्रति पर्यनु वा । हरेर्भाग इत्यर्थः । वीप्सायाम् । वृक्षं वृक्षं प्रति पर्यनु वा सिञ्चति । अत्रोपसर्गत्वाभावान्न षत्वम् । एषु किम् । परिषिञ्चति ॥

## अभिरभागे । १ । ४ । ९१ ॥

भागवर्जे लक्षणादावभिरुक्तसंज्ञः ॥ हरिमभि वर्तते । भक्तो हरिमभि । देवं देवमभि सिञ्चति । अभागे किम् । यदत्र ममाभिष्यात्तद्दीयताम् ॥

## प्रतिः प्रतिनिधिप्रतिदानयोः । १ । ४ । ९२ ॥

एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात् ॥ प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रतियच्छति माषान् । प्रतिनिधिप्रतिदाने च यस्मादिति पञ्चमी ॥

## अधिपरी अनर्थकौ । १ । ४ । ९३ ॥

उक्तसंज्ञौ स्तः ॥ कुतो ऽध्यागच्छति । कुतः पर्यागच्छति । गतिसंज्ञाबाधाद्गतिर्गताविति निघातो न ॥

## सुः पूजायाम् । १ । ४ । ९४ ॥

सुसिक्तम् । सुस्तुतम् । अनुपसर्गत्वान्न षः । पूजायां किम् । सुषिक्तं किं तवात्र । क्षेपो ऽयम् । कथं तर्हि सुष्टुतिरिति । अतिशयमात्रं विवक्षितं न तु पूजेत्याहुः । पठन्ति च । प्रशंसानुमते पूजा भृशकृच्छ्रसुखेषु सुरिति ॥

## अतिरतिक्रमणे च । १ । ४ । ९५ ॥

अतिक्रमणे पूजायाञ्चातिः कर्मप्रवचनीयः स्यात् ॥ अतिदेवान्कृष्णः । देवेभ्यो ऽधिको देवपूज्य इति वार्थः ॥

## अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु । १ । ४ । ९६ ॥

एषु द्योत्येष्वपिरुक्तसंज्ञः ॥ सर्पिषो ऽपि स्यात् । मात्रा बिन्दुः स्तोकमित्यस्यार्थे ऽपिर्वर्तते । सम्भावनायां लिङ् । तस्या एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन सम्बध्यते । सर्पिष इति षष्ठी तु अपिशब्दबलेन गम्यमानस्य बिन्दोरवयवावयविभावसम्बन्धे । इयमेव ह्यपिशब्दस्य पदार्थद्योतकता नाम । द्वितीया तु नेह प्रवर्तते । सर्पिषो बिन्दुना योगो न त्वपिनेत्युक्तत्वात् । अनुपसर्गत्वान्न षः । सम्भावनं शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः । अपि स्तुयाद्विष्णुम् । अन्ववसर्गः कामचारानुज्ञा । अपि स्तुहि । गर्हा । धिग्देवदत्तमपि स्तुयाद्वृषलम् । समुच्चये । अपि सिञ्च । अपि स्तुहि । सिञ्च च स्तुहि चेत्यर्थः ॥

## अधिरीश्वरे । १ । ४ । ९७ ॥

स्वस्वामिभावसम्बन्धे ऽधिः कर्मप्रवचनीयः स्यात् ॥ इह यस्मादधिकं यस्य चेश्वरवचनमिति स्वस्वामिभ्यां पर्यायेण सप्तमी । अधि भुवि रामः । अधि रामे भूः ॥

## विभाषा कृञि । १ । ४ । ९८ ॥

अधिः करोतौ प्राक्संज्ञो वा स्यादीश्वरे ऽर्थे । प्राप्तविभाषेयम् । यदत्र मामधिकरिष्यति । विनियोक्ष्यत इत्यर्थः । इह विनियोक्तुरीश्वरत्वं गम्यते । कर्मत्वाद् द्वितीया । अगतित्वात्तिङि चोदात्तवतोति निघातो न । किञ्च मामधिकृत्वेत्यत्र प्रादिसमासो न । कर्मप्रवचनीयानां प्रतिषेध इत्युक्तेः । पक्षे ऽधिकृत्येति बोध्यम् ॥

## लः परस्मैपदम् । १ । ४ । ९९ ॥

आदेशापेक्षया ल इति षष्ठी । लादेशाः परस्मैपदसंज्ञाः स्युः ॥ पचन्तं पश्य ॥

## तङानावात्मनेपदम् । १ । ४ । १०० ॥

तङ्प्रत्याहारो लादेशौ शानच्कानचौ चैतत्संज्ञाः स्युः ॥ पूर्वसंज्ञापवादः । आस्ते । आसीनः । चक्राणः । शानन्चानशोर्न ग्रहणम् । लादेशत्वाभावात् । तेन पूङ्यजोः शानन् यजेरकर्तृगे ऽपि फले भवति । कतीह निघ्नाना इत्यादौ परस्मैपदिभ्यो ऽपि चानश् भवति ॥

## तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः । १ । ४ । १०१ ॥

तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ॥ संज्ञाप्रदेशाः शेषे प्रथम इत्येवमादयः । इह त्रीणित्रीणीत्येकं पदम् ।

द्वे वेति हरदत्तः । तन्न । सत्यामप्यवान्तरपदसंज्ञायां महापदसंज्ञामाश्रित्य संहितैकपदे नित्येत्यस्य प्रवृत्तेः । अन्यथा समासादावपि पृथक्छेदापत्तेः । द्विरुक्तमध्ये पदान्तरप्रयोगापत्तेश्च । एतेन संहितैकपदे इत्यत्रैकपदशब्देनाखण्डं पदम् । अत एव नित्या समासे इति चरितार्थम् । अत एवाग्नेऽग्ने इत्यादौ पदद्वित्वे संहिताऽनित्यैव । अखण्डत्वञ्च पदत्वाभाववदुत्तरखण्डत्वम् । तेन राजायतीत्यादौ न दोषः । अन्यथा तत्र पक्षे शपैकादेशोऽपि न स्यादित्यपास्तम् । न चैवं नित्या समासे इति व्यर्थम् । समासस्य पृथगुपादानं गोबलीवर्दन्यायेन । एकपदे इत्यनेनैव तत्संग्रहसिद्धेरित्यइउरासूत्रे कौस्तुभोक्तेः । न चैवमेकं बहुव्रीहिवदिति सूत्रे अथ बहुव्रीहिवत्त्वे किं प्रयोजनम् । सुब्लोपपुंवद्भावौ । सुब्लोपः । एकैकम् । पुंवद्भावः । गतगता । इति भाष्ये गतगतेति प्रतीकमुपादाय उत्तरसूत्रेण द्विर्वचनबहुव्रीहिवद्भावौ । एकैकेत्यत्र तु पुंवद्भावे विशेषाभावोऽवग्रहे त्वत्रापि विशेषोऽस्ति । न चात्र नित्या संहिता । एकैकयेत्येक इत्यवग्रहकरणात् अग्ने अग्ने सूक्ष्म इत्युदाहरणाच्चेति कैयटोक्तं विरुध्येत । न चात्रेत्यादिकैयटस्य संहितैकपदे नित्येत्यस्य समासग्रहणसामर्थ्येनाखण्ड पद एव प्रवृत्तिरित्याशयकत्वादिति वाच्यम् । एतदाशयकत्वे न चात्रेत्यादिकैयटस्य प्रकृतानुपयोगात् । अवग्रहे संहितानित्यत्वस्याप्रतिबन्धकत्वात् । द्विरुक्तमध्ये पदान्तरप्रयोगापत्तिरूपपूर्वोक्तदूषणस्यानुद्धाराच्च । एकैकेत्यत्र तु पुंवद्भावे विशेषाभाव इत्युक्त्वा अवग्रहपर्यन्तमनुधावनस्य निर्बीजत्वापत्तेश्च । त्वदुक्तरीत्या तत्र संहिताया अनित्यत्वेन तत्रैव विशेषस्य स्फुटत्वात् । अवग्रहे संहितानित्यत्वस्याप्रतिबन्धकत्वे मयूररोमभिरित्यादौ मुख्यसमासेऽप्यवग्रहकरणाद्रूपहेतूपपादनं तु त्वदीयमप्यसङ्गतमेव । मयूररोमभिरित्यत्र समासे

ऽवग्रहस्यासाम्प्रदायिकत्वात् । मिथः पूर्वमवग्रहस्य सत्वात् । कस्तर्हि तदाशय इति चेत् । शृणु । अवग्रहे त्वत्रापि विशेषोऽस्तीत्युक्तम् । तत्र संहितैकपदे इत्यनेन संहिताया नित्यत्वात्तदभावरूपो ऽवग्रहः कथमित्यवग्रहे संहितानित्यत्वस्याप्रतिबन्धकत्वमजानानस्य शङ्कायामाह । न चात्र नित्या संहितेति । अत्र नित्या संहितेति कथं तदभावरूपोऽवग्रह इति न च वाच्यमिति शेषः । अवग्रहे संहितानित्यत्वस्याप्रतिबन्धकत्वाभिप्रायेण समाधत्ते । एकैकयेत्येक इत्यवग्रहकरणादिति । अवग्रहकरणादवग्रहे संहितानित्यत्वस्याप्रतिबन्धकत्वमुपेयमित्यर्थः । अवग्रहे संहितानित्यत्वस्याप्रतिबन्धकत्वं पदकारसंमतमपि न भाष्यकारसम्मतमित्याशङ्कायामाह । अग्रे अग्रे सूक्ष्म इत्युदाहरणाच्चेति । उदाहरणात्प्रकारे इति सूत्रे भाष्यकारेणेति शेषः । तथाचावग्रहे संहितानित्यत्वस्याप्रतिबन्धकत्वं भाष्यसम्मतमपीति भावः । अग्रे अग्रे इति भाष्योदाहरणमवगृहीतं वैदिकमेव । संप्रत्यनुपलभ्यमानं चेत् लुप्तवेदशाखास्थम् । लोके तु संहिताय नित्यत्वादग्रेऽग्रे सूक्ष्म इत्येव भवतीति भावः । इदमेव व्याख्यानं ज्यायः । अन्यथा प्रकृतानुपयोगेन कैयटस्य निरालम्बनत्वापत्तेः । द्विरुक्तमध्ये पदान्तरप्रयोगापत्तिरूपपूर्वोक्तदूषणस्यानुद्धाराच्चेत्यास्ताम् । प्रकृतमनुसरामः ॥

**तान्येकवचनद्विवचनबहुवचनान्येकशः । १ । ४ ।१०२॥**

लब्धप्रथमादिसंज्ञानि तिङस्त्रीणित्रीणि प्रत्येकमेकवचनादिसंज्ञानि स्युः ॥ संज्ञाप्रदेशा द्व्येकयोर्द्विवचनैकवचने बहुषु बहुवचनमित्येवमादयः । तानीत्युक्तिः संज्ञासमावेशार्था । अन्यथा पुरुषवचनसंज्ञयोः पर्यायः स्यात् । ततश्चाडुतमस्येत्यादि कार्यं पक्षे न स्यात् ॥

## सुपः । १ । ४ । १०३ ॥

सुपस्त्रीणित्रीणि वचनानि प्रत्येकमेकवचनद्विवचनबहुवचनसंज्ञानि स्युः ॥

## विभक्तिश्च । १ । ४ । १०४ ॥

सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥ तत्र सु औ जसित्यादीनां सप्तानां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः । चकारः पुरुषवचनसंज्ञाभ्यां समावेशार्थः । तिङो विभक्तिसंज्ञायाः प्रयोजनं न विभक्तौ तुस्मा इति । सुपां तु त्यदाद्यत्वादिकमपि ।

## युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । १ । ४ । १०५ ॥

तिङ्वाच्यकारकवाचिनि युष्मदि अप्रयुज्यमाने प्रयुज्यमाने च मध्यमः स्यात् ॥ त्वं पचसि । दृश्यसे च । समानाधिकरणे किम् । त्वां पश्यति । त्वया दृश्यते ॥

## प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च । १ । ४ । १०६ ॥

मन्यधातुरुपपदं यस्य धातोस्तस्मिन्प्रकृतिभूते सति मध्यमः स्यात् परिहासे गम्यमाने मन्यतेस्तूत्तमः स्यात्स चैकार्थस्य वाचकः स्यात् ॥ एहि मन्ये ओदनं भोक्ष्यसे भुक्तः सोऽतिथिभिः । एतमेत वा मन्ये ओदनं भोक्ष्येथे भोक्ष्यध्वे । भोक्ष्ये भोक्ष्यावहे इत्यादि । मन्यसे मन्येथे इत्यादिरर्थः । युष्मद्युपपदे इत्याद्यनुवर्तते । तेनेह न । एतु भवान् मन्यते ओदनं भोक्ष्ये । श्यना निर्देशान्नेह ।

एहि मनुषे रथेन यास्यामि । प्रहासे किम् । यथार्थकथने माभूत् । एहि मन्यसे ओदनं भोक्ष्ये इति भुक्तः सोऽतिथिभिः ॥

**अस्मद्युत्तमः । १ । ४ । १०७ ॥**

तिङ्वाच्यकारकवाचिन्यस्मदि अप्रयुज्यमाने प्रयुज्यमाने चोत्तमः स्यात् ॥ अहं पश्यामि । दृश्ये वा । युष्मदस्मद्भ्यां सामानाधिकरण्ये तु परत्वादुत्तम एव । अहं च त्वञ्च वृत्रहन्संयुज्याव: ॥

**शेषे प्रथमः । १ । ४ । १०८ ॥**

मध्यमोत्तमयोरविषये प्रथमः स्यात् । पचति । पचतः । पचन्ति ॥

**परः सन्निकर्षः संहिता । १ । ४ । १०९ ॥**

वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् ॥ दध्यत्र । प्रदेशाः संहितायामित्येवमादयः ॥

**विरामो ऽवसानम् । १ । ४ । ११० ॥**

विरतिर्विरामः । अभाव इति यावत् । वर्णानामभावोऽवसानसंज्ञः स्यात् ॥ वृक्षः । प्लक्षः । यद्वा विरम्यतेऽनेनेति करणे घञ् । चरमवर्णश्च संज्ञी । अस्मिन्पक्षे खरवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते । खरि परे रेफस्य विसर्गः । अवसाने च रेफे स्थानिनीति सर्वेष्टसिद्धिः ॥

इत्योरम्भट्टेन विरचितायां व्याकरणदीपिकायां पाणिनिसूत्रवृत्तौ प्रथमस्याध्यायस्य चतुर्थः पादः ॥

अध्यायश्च प्रथमः समाप्तः ॥

श्रीगणेशाय नमः ।

# अथ द्वितीयाध्यायस्य प्रथमः पादः ।

## समर्थः पदविधिः । २ । १ । १ ॥

परिभाषेयम् । पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः ॥ वक्ष्यति द्वितीया श्रितेत्यादि । कष्टश्रितः । समर्थग्रहणं किम् । पश्य देवदत्त कष्टं, श्रितो विष्णुमित्रो गुरुकुलम् । पदग्रहणं किम् । तिष्ठति कुमारी, च्छत्रं हर देवदत्त । अत्र तुग्भवत्येव । आख्यातं सविशेषणं वाक्यम् । उच्चैः पठति । ओदनं पचति । एकतिङ् वाक्यं भवतीति वक्तव्यम् ॥ * ॥ एकशब्दः समानवचनो न तु संख्यावाची । बहुव्रीहिश्चायम् । ब्रूहिब्रूहि देवदत्त । अत्र वाक्यत्वादामन्त्रितनिघातः सिध्यति ॥ समानवाक्ये इति प्रकृत्य निघातयुष्मदस्मदादेशा वक्तव्याः ॥ * ॥ किं प्रयोजनं नानावाक्ये माभूवन्निति । अयं दण्डो हरानेन पचोदनं तव भविष्यति मम भविष्यति ॥ अधात्वभिहितं समानाधिकरणमसमर्थवद्भवतीति वक्तव्यम् ॥ * ॥ सर्पिः कालकम् । अत्र इसुसोरिति षत्वं न । अधात्वभिहितमिति किम् । सर्पिष्पीयते । वीरपुरुषादौ तु वचनप्रामाण्यात्समासः । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । परार्थाभिधानं वृत्तिः । सा द्विविधा । जहत्स्वार्था ऽजहत्स्वार्था च । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स द्विधा । लौकिको ऽलौकिकश्च । परिनिष्ठितत्वात्साधुर्लौकिकः । प्रयोगानर्हो ऽसाधुर्लौकिकः । यथा राज्ञः पुरुषः । राजन् अस् पुरुष सु इति । अविग्रहो नित्य-

समासो ऽस्वपदविग्रहो वा । समासश्चतुर्विधेति प्रायोवादः । अव्य-यीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिकारबहिर्भूतानामपि सहसुपेति सा-मासविधानात् । पूर्वपदार्थप्रधानो ऽव्ययीभावः । उत्तरपदार्थप्रधान-स्तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्व इत्यपि प्राचां प्रवादः प्रायोभिप्रायः । सूपप्रति उन्मत्तगङ्गमि-त्याद्यव्ययीभावे अतिमालादौ तत्पुरुषे द्विवा इत्यादिबहुव्रीहौ दन्तोष्ठमित्यादिद्वन्द्वे चाभावात् । तत्पुरुषविशेषः कर्मधारयः । तद्वि-शेषो द्विगुः । अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव । तत्पुरुषस्य क्वचिदेवे-त्यभिधास्यते । किञ्च ।

सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा ।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥

सुपा । राजपुरुषः । तिङा । पर्यभूषत् । नाम्ना । कुम्भकारः । धातुना । कटप्रूः ॥ अजस्रम् । तिङां तिङा । पिबतखादता । तिङां सुपा । कृन्त विचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा । एही-डदयो ऽन्यपदार्थे इति मयूरव्यंसकादौ पाठात्समासः ॥

## सुबामन्त्रिते पराङ्गवत्स्वरे । २ । १ । २ ॥

सुबन्तमामन्त्रिते परे पराङ्गवत्स्यात् स्वरे कर्तव्ये ॥ परशुना वृश्चन् । मद्राणां राजन् । गोषु स्वामिन् । द्रवत्पाणी शुभस्पती । शुभ इति शुभेः क्विबन्तात् षष्ठ्यन्तम् । तस्य परशरीरानुप्रवेशे षाष्ठि-कमामन्त्रिताद्युदात्तत्वम् । न चाष्टमिको निघातः शङ्क्यः । पूर्वामन्त्रि-तस्याविद्यमानत्वे पादादित्वात् । यत्ते दिवो दुहितर्मर्तभोजनम् । इह दिवःशब्दस्याष्टमिको निघातः । सुबिति किम् । पीड्ये पीड्य-मान । आमन्त्रिते किम् । गेहे गार्ग्यः । परग्रहणं किम् । पूर्वस्य

माभूत् । यज्ञदत्त कुण्डेनाटन् । अङ्ग्रहणं किम् । पृथगादाुदात्तत्वं माभूत् । वत्ग्रहणं किम् । स्वाश्रयमपि यथा स्यात् । आम् कुण्डेनाटन् । आम एकान्तरमित्येकान्तरता भवति । स्वरे किम् । कूपे सिञ्चन् । चर्म नमन् । षत्वणत्वे प्रति पराङ्गवन्न भवति ॥ तन्निमित्तग्रहणं कर्तव्यम् ॥ * ॥ तस्यामन्त्रितस्य यन्निमित्तं तत्पराङ्गवद्भवतीत्यर्थः । मद्राणां राजन्निति मद्रनिमित्तं राजत्वमित्यस्ति तन्निमित्तत्वम् । भृत्यदेशनिमित्ता हि राजता । तेनेह न । अयमग्ने जरिता । एतेनाग्ने ब्रह्मणा । समर्थानुवृत्त्या वा सिद्धम् ॥ सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमननन्तरत्वात् ॥ * ॥ तीक्ष्णेन परशुना वृश्चन् ॥ परमपि छन्दसि पूर्वस्याङ्गवद्भवतीति वक्तव्यम् ॥ * ॥ आते पितर्मरुतां सुम्नमेतु ॥ अव्ययानान्न ॥ * ॥ उच्चैरधीयान । अव्ययीभावस्य तु इष्यते । उपाग्न्यधीयान ॥

### प्राक्कडारात्समासः । २ । १ । ३ ॥

कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते ॥ समासप्रदेशाः कृत्तद्धितसमासाश्चेत्येवमादयः । प्राग्वचनं संज्ञासमावेशार्थम् ॥

### सह सुपा । २ । १ । ४ ॥

सहेति योगो विभज्यते । सुबन्तं समर्थेन सह समस्यते ॥ योगविभागस्येष्टसिद्ध्यर्थत्वात्कतिपयतिङन्तोत्तरपदोऽयं समासः । स च छन्दस्येव । पर्यभूषत् । अनुव्यचलत् ।

### सुपा । २ । १ । ४ ॥

सुप्सुपा सह समस्यते ॥ भूतपूर्वे चरडिति निर्देशाद्भूतशब्दस्य पूर्वनिपातः । पूर्वं भूतो भूतपूर्वः ॥ इवेन समासो विभक्त्यलोपः

पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् ॥ * ॥ वाससीइव कन्येइव । कन्याराजन्यमनुष्याणामिति फिट्सूत्रपाठात्कन्याशब्दो ऽन्तस्वरितः । सुपेतिलक्षणात्समासे सिद्धे कार्यान्तरविधानार्थं वचनमिति कैयटः ॥

## अव्ययीभावः । २ । १ । ५ ॥

अधिकारोऽयम् ॥ अव्ययीभावप्रदेशा अव्ययीभावश्चेत्येवमादयः ॥

## अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु । २ । १ । ६ ॥

अव्ययमिति योगो विभज्यते । अव्ययं समर्थेन समस्यते सोऽव्ययीभावः ॥ दिशयोर्मध्यं अपदिशम् । क्लीबेऽव्ययं त्वपदिशं दिशोर्मध्यं विदिक् स्त्रियामित्यमरः । विभक्तीत्यादेरयमर्थः । विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह समस्यते सोऽव्ययीभावः ॥ विभक्तौ तावत् । हरौ इत्यधिहरि । सप्तम्यर्थस्यैवात्र द्योतकोऽधिः । हरि ङि अधि इत्यलौकिकं प्रक्रियावाक्यम् । अत्र निपातेनाभिहिते ऽप्यधिकरणे वचनसामर्थ्यात्सप्तमी । समीपे । कृष्णस्य समीपमुपकृष्णम् । समया ग्रामं निकषा लङ्कां आराद्वनात् इत्यत्र नाव्ययीभावः । अभितः परितः अन्यारादिति द्वितीयापञ्चम्योर्विधानसामर्थ्यात् । मद्राणां समृद्धिः सुमद्रम् । यवनानां व्यृद्धिर्दुर्यवनम् । विगता ऋद्धिर्व्यृद्धिः । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । अत्ययो ध्वंसः । निद्रा संप्रति न युज्यत इत्यतिनिद्रम् ।

हरिशब्दस्य प्रकाश इतिहरि। विष्णोः पश्चादनुविष्णु। पश्चाच्छब्दस्य नायं समासः। ततः पश्चात्संस्यत इति भाष्यप्रयोगात्। योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः। अनुरूपम्। रूपस्य योग्यमित्यर्थः। अर्थमर्थं प्रति प्रत्यर्थम्। प्रतिशब्दस्य वीप्सायां कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्तद्योगे द्वितीयागर्भं वाक्यमपि। शक्तिमनतिक्रम्य यथाशक्ति। हरेः सादृश्यं सहरि। अव्ययीभावे चाकाले इति वक्ष्यमाणेन सहस्य सः। ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम्। चक्रेण युगपत् सचक्रम्। सदृशः सख्या ससखि। यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येवमर्थम्। क्षत्राणां सम्पत्तिः सक्षत्रम्। ऋद्धेराधिक्यं समृद्धिः। अनुरूपमात्मभावः सम्पत्तिरिति भेदः। तृणमप्यपरित्यज्य सतृणमत्ति। साकल्येनेत्यर्थः। न त्वत्र तृणभक्षणे तात्पर्यम्। अन्ते। अग्निग्रन्थपर्यन्तमधीते साग्नि। इयं समाप्तिरसकलेऽप्यध्ययने भवतीति साकल्यात्पृथगुच्यते।

## यथाऽसादृश्ये। २।१।७॥

असादृश्ये एव यथाशब्दः समस्यते॥ यथावृद्धं ब्राह्मणानामन्त्रयस्व। ये ये वृद्धा इत्यर्थः। असादृश्य इति किम्। यथा हरिस्तथा हरः। हरेरुपमानत्वं यथाशब्दो द्योतयति। तेनसादृश्य इति वा यथार्थे इति वा प्राप्तं निषिध्यते॥

## यावदवधारणे। २।१।८॥

यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामा यावच्छ्लोकम्। अवधारणे किम्। यावद्दत्तं तावद्भुक्तं नावधारयामि कियन्मया भुक्तमिति। अत्रैकपद्यं न॥

## सुप्प्रतिना मात्रार्थे। २।१।९॥

शाकस्य लेशः शाकप्रति । मात्रार्थे किम् । वृक्षं प्रति विद्योतते विद्युत् । सुबिति वर्तमाने पुनः सुप्ग्रहणं अव्ययनिवृत्त्यर्थम् ॥

**अक्षशलाकासंख्याः परिणा । २ । १ । १० ॥**

द्यूतव्यवहारे पराजयेऽक्षशलाकयोश्चैकत्वे एव चायं समासः ॥ अक्षेण विपरीतं वृत्तमक्षपरि । शलाकापरि । एकपरि । द्यूतव्यवहारे किम् । अक्षेणेदं न तथा वृत्तं शकटेन यथा पूर्वमिति । पराजये किम् । अक्षेणेदं तथा वृत्तं यथा पूर्वजये । एकत्वे किम् । अक्षाभ्यां विपरीतं वृत्तम् ॥

**विभाषा । २ । १ । ११ ॥**

अधिकारोऽयम् ॥ एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वम् । सुप्सुपेति तु न नित्यसमासः । अव्ययमित्यादिना समासविधानाज्ज्ञापकात् ॥

**अपपरिबहिरञ्चवः पञ्चम्या । २ । १ । १२ ॥**

अपविष्णु संसारः । अप विष्णोः । परिविष्णु । परि विष्णोः । बहिर्वनम् ॥ बहिर्वनात् । प्राग्वनम् । प्राग्वनात् ॥

**आङ्मर्यादाभिविध्योः । २ । १ । १३ ॥**

एतयोराङ् पञ्चम्यन्तेन वा समस्यते सोऽव्ययीभावः ॥ आमुक्ति संसारः । आ मुक्तेः । आकुमारं यशः पाणिनेः । आ कुमारेभ्यः ॥

**लक्षणेनाभिप्रती आभिमुख्ये । २ । १ । १४ ॥**

आभिमुख्यद्योतकावभिप्रती चिन्हवाचिना सह प्राग्वद्वा ॥ अभ्यग्नि शलभाः पतन्ति । अग्निमभि । प्रत्यग्नि । अग्निं प्रति । अग्निं लक्षीकृत्य अभिमुखं पतन्तीत्यर्थः । लक्षणेन किम् । स्रुघ्नं

प्रति गतः । प्रतिनिवृत्य सुघ्नमेवाभिमुखं गतः । अभिप्रती कम् । येनाग्निस्तेन गतः । आभिमुख्ये किम् । अभ्यङ्का गावः । प्रत्यङ्का गावः । अभिनवाङ्का इत्यर्थः ॥

### अनुर्यत्समया । २ । १ । १५ ॥

यं पदार्थं समया तेन लक्षणभूतेनानुः समस्यते सोऽव्ययाभावः ॥ अनुवनमशनिर्गतः । वनस्य समीपं गत इत्यर्थः । अनुः किम् । वनं समया । यत्समया किम् । वृक्षमनु विद्योतते विद्युत् ॥

### यस्य चायामः । २ । १ । १६ ॥

यस्य दैर्घ्यमनुना द्योत्यते तेन लक्षणभूतेनानुः समस्यते ॥ अनुगङ्गं वाराणसी । गंगाया अनु । गङ्गादैर्घ्यासदृशदैर्घ्योपलक्षितेत्यर्थः ॥

### तिष्ठद्गुप्रभृतीनि च । २ । १ । १७ ॥

एतानि निपात्यन्ते ॥ तिष्ठद्गु कालविशेषे इति वक्तव्यम् ॥ * ॥ तिष्ठन्ति गावो यस्मिन् काले स तिष्ठद्गु दोहनकालः । आयतीगवम् । इह शत्रादेशः पुम्वद्भावविरहः समासान्तश्च निपात्यते । चकारोऽवधारणार्थः । अपरः समासो न भवति । परमं तिष्ठद्गु । खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेण नैव सम्बद्ध्यन्ते अन्यपदार्थे च वर्तन्ते । खलेयवम् । खलेबुसम् ।

### पारे मध्ये षष्ठ्या वा । २ । १ । १८ ॥

पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते ॥ एदन्तत्वं चानयोर्निपात्यते । पक्षे षष्ठीतत्पुरुषो वावचनात् । पारेगङ्गादानय । गङ्गापारात् । मध्येगङ्गात् । गङ्गामध्यात् । महाविभाषया वाक्यमपि । गङ्गायाः पारात् । गङ्गाया मध्यात् ॥

## संख्या वंश्येन । २ । १ । १९ ॥

वंशो द्विधा विद्यया जन्मना च । तत्र भवो वंश्यः । दिगादित्वाद्यत् । तद्वाचिना सह संख्या वा समस्यते ॥ द्वौ मुनी वंश्यौ द्विमुनि व्याकरणस्य । त्रिमुनि । विद्यातद्वतामभेदविवक्षया त्रिमुनि व्याकरणम् । एकविंशति भारद्वाजम् ॥

## नदीभिश्च । २ । १ । २० ॥

नदीभिः संख्या प्राग्वत् ॥ सप्तगङ्गम् । द्वियमुनम् । समाहारे चायमिष्यते । इह माभूत् । सप्तमेकनदीतीरे ॥

## अन्यपदार्थे च संज्ञायाम् । २ । १ । २१ ॥

अन्यपदार्थे विद्यमानं सुबन्तं नदीभिः सह नित्यं समस्यते संज्ञायाम् ॥ विभाषाधिकारेऽपि वाक्येन संज्ञानवगमादिह नित्यसमासः । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् । अन्यपदार्थे किम् । कृष्णावेणी । संज्ञायां किम् । शीघ्रगङ्गो देशः ॥

## तत्पुरुषः । २ । १ । २२ ॥

अधिकारोऽयं प्राग्बहुव्रीहेः ॥ तत्पुरुषप्रदेशास्तत्पुरुषे कृति बहुलमित्येवमादयः ॥

## द्विगुश्च । २ । १ । २३ ॥

द्विगुरपि तत्पुरुषसंज्ञः ॥ समासान्तः प्रयोजनम् । पञ्चराजम् । इदं सूत्रं त्यक्तुं शक्यम् । संख्यापूर्वो द्विगुश्चेति पठित्वा चकारबलेन संज्ञासमावेशस्य सुवचत्वात् ॥

## द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः । २ । १ । २४ ॥

द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स

तत्पुरुषः ॥ कृष्णं श्रितः कृष्णश्रितः । दुःखातीतः । नरकपतितः । ग्रामगतः । तरङ्गात्यस्तः । सुखप्राप्तः । सुखापन्नः ॥ गम्यादीना-मुपसंख्यानम् ॥ * ॥ ग्रामं गमी ग्रामगमी । ग्रामगामी । अन्नबुभुत्तुः ॥

**स्वयं क्तेन । २ । १ । २५ ॥**

द्वितीयेति न सम्बन्ध्यतेऽयोग्यत्वात् । स्वयंकृतस्यापत्यं स्वायंकृतिः ॥

**खट्वा क्षेपे । २ । १ । २६ ॥**

खट्वाप्रकृतिकं द्वितीयान्तं क्तान्तप्रकृतिकेन सुबन्तेन समस्यते निन्दायाम् । खट्वारूढो जाल्मः । नित्यसमासोऽयम् । न हि वाक्ये-न निन्दा गम्यते । क्षेपे किम् । खट्वामारूढः उपाध्यायः ॥

**सामि । २ । १ । २७ ॥**

द्वितीयेति न सम्बध्यतेऽयोग्यत्वात् । क्तेनेत्येव ॥ सामिकृ-तम् । अर्धैकपद्यम् ॥

**कालाः । २ । १ । २८ ॥**

कालवाचिनो द्वितीयान्ताः क्तान्तेन सह प्राग्वत् ॥ अनत्य-न्तसंयोगार्थं वचनम् । मासं प्रमितः मासप्रमितः । आदिकर्मणि क्तः । मासं प्रमातुमारब्धवान् । प्रतिपच्चन्द्रमा इत्यर्थः ॥

**अत्यन्तसंयोगे च । २ । १ । २९ ॥**

काला इत्येव ॥ अक्तान्तार्थं वचनम् । मुहूर्तं सुखं मुहूर्त-सुखम् ॥

**तृतीया तत्कृतार्थेन गुणवचनेन । २ । १ । ३० ॥**

तत्कृतेति लुप्ततृतीयाकम् । तृतीयान्तं तृतीयान्तार्थकृतगुण-वचनेनार्थशब्देन च सह प्राग्वत् ॥ शंकुलया खण्डः शंकुलाखण्डः ।

धान्येनार्थी धान्यार्थः । तत्कृतेति किम् । अक्ष्णा काणः । गुणवचनेन किम् । धान्येन धनवान् ॥

**पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः । २ । १ । ३१ ॥**

तृतीयान्तमेतैः प्राग्वत् ॥ मासपूर्वः । मातृसदृशः । पितृसमः । ऊनार्थाः । माषोनं कार्षापणम् । माषविकलम् । वाक्कलहः । आचारनिपुणः । गुडमिश्रः । आचारश्लक्ष्णः । मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम् । मिश्रं चानुपसर्गमसन्धावित्यचानुपसर्गग्रहणात् । गुडसंमिश्रा धानाः ॥ अवरस्योपसंख्यानम् ॥ * ॥ मासेनावरो मासावरः ॥

**कर्तृकरणे कृता बहुलम् । २ । १ । ३२ ॥**

कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् ॥ हरिणा त्रातो हरित्रातः । नखैर्भिन्नो नखभिन्नः । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् । नखनिर्भिन्नः । कर्तृकरणे किम् । भिक्षाभिरुषितः । हेतौ तृतीया । कृता किम् । काष्ठैः पचतितराम् । बहुलं किम् । दात्रेण लूनवान् ॥

**कृत्यैरधिकार्थवचने । २ । १ । ३३ ॥**

स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनम् । तत्र कर्तरि करणे च तृतीया कृत्यैः सह प्राग्वत् ॥ काकपेया नदी । वातच्छेद्यानि तृणानि । पूर्वस्यैवायं प्रपञ्चः ॥ साधनं कृतेति वक्तव्यम् ॥ * ॥ पादाभ्यां ह्रियते पादहारकः । अपादाने पञ्चमी । बाहुलकात्कर्मणि ण्वुल् । गले चोप्यते गलेचोपकः । चुपेर्ण्यन्तस्य कर्मणि ण्वुल् । तृणोपेन्ध्यम् । घनघात्यम् ॥

**अन्नेन व्यञ्जनम् । २ । १ । ३४ ॥**

संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन प्राग्वत् ॥ दध्ना ओदनो दध्योदनः । इहान्तर्भूतोपसेकक्रियाद्वारा सामर्थ्यम् ॥

**भक्ष्येण मिश्रीकरणम् । २ । १ । ३५ ॥**

खरविशदमभ्यवहार्यं भक्ष्यम् । गुडेन धानाः गुडधानाः । मिश्रणक्रियाद्वारा सामर्थ्यम् ॥

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः । २ । १ । ३६ ॥**

चतुर्थ्यन्तार्थाय यत्तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं प्राग्वत् ॥ तदर्थशब्देन प्रकृतिविकृतिभाव एव । बलिरक्षितग्रहणाज्ज्ञापकात् । यूपाय दारु यूपदारु । नेह रन्धनाय स्थाली । अश्वघासादयस्तु षष्ठीसमासाः ॥ अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् ॥ * ॥ द्विजायायं द्विजार्थः सूपः । द्विजार्था यवागूः । द्विजार्थं पयः । भूतबलिः । गोहितम् । गोसुखम् । गोरक्षितम् ।

**पञ्चमी भयेन । २ । १ । ३७ ॥**

चोराद्भयम् । चोरभयम् ॥ भयभीतभीतिभीभिरिति वाच्यम् ॥ * ॥ वृकभीतः ॥

**अपेतापोढमुक्तपतितापत्रस्तैरल्पशः । २ । १ । ३८ ॥**

एतैः सहाल्पं पञ्चम्यन्तं समस्यते स तत्पुरुषः ॥ सुखापेतः । कल्पनापोढः । चक्रमुक्तः । स्वर्गपतितः । तरङ्गापत्रस्तः । अल्पशः किम् । प्रासादात्पतितः ॥

**स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन । २ । १ । ३९ ॥**

स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रादागतः ॥ पञ्चम्याः स्तोकादिभ्य इत्यलुक् ॥

**सप्तमी शौण्डैः । २ । १ । ४० ॥**

सप्तम्यन्तं शौण्डादिभिः प्रागवद्वा ॥ अक्षेषु शौण्डो ऽक्षशौण्डः । अधिशब्दोऽत्र पठ्यते ॥ अध्युत्तरपदादिति खः । ईश्वराधीनः ॥

**सिद्धशुष्कपक्वबंधैश्च । २ । १ । ४१ ॥**

एतैः सप्तमी प्राग्वत् ॥ साङ्काश्यसिद्धः । आतपशुष्कः । स्थालीपक्वः । चक्रबन्धः ॥

**ध्वांक्षेण क्षेपे । २ । १ । ४२ ॥**

ध्वांक्षवाचिना सह सप्तम्यन्तं प्राग्वन्निन्दायाम् । तीर्थे ध्वांक्ष इव तीर्थध्वांक्षः । तीर्थकाकः । क्षेपे किम् । तीर्थे ध्वांक्षस्तिष्ठति ॥

**कृत्यैर्ऋणे । २ । १ । ४३ ॥**

सप्तम्यन्तं कृत्यप्रत्ययांतैः सह प्राग्वदावश्यके ॥ मासेदेयमृणम् । पूर्वाह्णेगेयं साम । ऋणे किम् । मासे देया भिक्षा । यत्प्रत्ययान्तेनैवेष्यते । नेह । पूर्वाह्णे दातव्या भिक्षा ।

**संज्ञायाम् । २ । १ । ४४ ॥**

सप्तम्यन्तं सुपा प्राग्वत्संज्ञायाम् । वाक्येन संज्ञानवगमान्नित्यसमासोऽयम् । अरण्येतिलकाः । वनेकसेरुकाः । हलदन्तादित्यलुक् ॥

**क्तेनाहोरात्रावयवाः । २ । १ । ४५ ॥**

अह्नो रात्रेश्चावयवाः सप्तम्यन्ताः क्तान्तेन सह प्राग्वत् ॥ पूर्वाह्णकृतम् । अपररात्रकृतम् । अवयवग्रहणं किम् । अन्हि दृष्टम् ॥

**तत्र । २ । १ । ४६ ॥**

तत्रेत्येतत्सप्तम्यन्तं क्तान्तेन सह प्राग्वत् ॥ तत्रभुक्तम् ।

**क्षेपे । २ । १ । ४७ ॥**

सप्तम्यन्तं क्तान्तेन प्राग्वन्निन्दायाम् । अवतप्तेनकुलस्थितं त एतत् ॥

**पात्रे समितादयश्च । २ । १ । ४८ ॥**

एते निपात्यन्ते क्षेपे ॥ पात्रेसमिताः । भोजनसमये एव सङ्गता न तु कार्ये । गेहेशूरः । गेहेनर्दी । आकृतिगणोऽयम् । चकारोऽवधारणार्थः । तेनैषां समासान्तरे घटकतया प्रवेशो न । परमाः पात्रेसमिताः । ये चात्र क्तान्तेन समस्तास्तेषां पूर्वेणैव सिद्धौ पुनः पाठो युक्तारोह्यादिषु परिग्रहार्थः । पूर्वपदाद्युदात्तत्वं यथा स्यादिति । युक्तारोह्यादिषु हि पात्रे समितादयश्चेति पठ्यते ॥

**पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन । २ । १ । ४९ ॥**

भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् । विशेषणं विशेष्येणेति सिद्धे पूर्वनिपातनियमार्थं सूत्रम् । एकशब्दस्य दिक्संख्ये संज्ञायामिति नियमबाधनार्थं च । पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः । एकनाथः । सर्वयाज्ञिकाः । जरन्नैयायिकाः । पुराणमीमांसकाः । नवपाठकाः । केवलवैयाकरणाः ॥

**दिक्संख्ये संज्ञायाम् । २ । १ । ५० ॥**

समानाधिकरणेनेत्यापादपरिसमाप्तेरधिकारः । संज्ञायामेवेति नियमार्थं सूत्रम् । पूर्वेषुकामशमी । सप्तर्षयः । नेह । उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ।

## तद्धितार्थोत्तरपदसमाहारे च । २ । १ । ५१ ॥

तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वद्वा ॥ पूर्वस्यां शालायां भवः पौर्वशालः । समासे कृते दिक्पूर्वपदादसंज्ञायां ञ इति ञः । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । आपरशालः । पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः । तेन शालाशब्दे आकार उदात्तः । पूर्वशालाप्रियः । दिक्षु समाहारो नास्त्यनभिधानात् । संख्यायास्तद्धितार्थे । षण्णां मातृणामपत्यं षाण्मातुरः । पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहाववान्तरतत्पुरुषस्य विकल्पे प्राप्ते । द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ॥ * ॥ पञ्चगवधनः । द्वन्द्वोदाहरणं वाक् च दृषच्च प्रिये अस्य वाक्दृषदप्रियः । पञ्चानां गवां समाहारः पञ्चगवम् ॥

## संख्यापूर्वो द्विगुः । २ । १ । ५२ ॥

तद्धितार्थेत्यत्रोक्तः संख्यापूर्वो द्विगुसंज्ञः स्यात् । पञ्चगवम् । द्विगुप्रदेशा द्विगुरेकवचनमित्येवमादयः ॥

## कुत्सितानि कुत्सनैः । २ । १ । ५३ ॥

कुत्स्यमानानि कुत्सनैः सह प्राग्वत् ॥ वैयाकरणखसूचिः । मीमांसकदुर्दुरूढः । कुत्सितानि किम् । वैयाकरणश्चोरः । नह्यत्र वैयाकरणत्वं कुत्सितम् । शब्दप्रवृत्तिनिमित्तकुत्सायामेवास्येष्टत्वात् । कुत्सनैः किम् । कुत्सितो ब्राह्मणः ॥

## पापाणके कुत्सितैः । २ । १ । ५४ ॥

पूर्वसूत्रापवादः । पापनापितः । अणककुलालः ॥

## उपमानानि सामान्यवचनैः । २ । १ । ५५ ॥

घन इव श्यामो घनश्यामः । शस्त्रीव श्यामा शस्त्रीश्यामा । इह पूर्वपदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते । पूर्वनिपातनियमार्थं सूत्रम् । उपमानानि किम् । देवदत्ता श्यामा । सामान्यवचनैः किम् । पर्वता इव बलाहकाः ॥

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे । २ । १ । ५६ ॥

उपमेयं व्याघ्रादिभिः सह प्राग्वत् साधारणधर्मस्याप्रयोगे सति ॥ विशेष्यस्य पूर्वनिपातार्थं सूत्रम् । पुरुषव्याघ्रः । नृसोमः । व्याघ्रादिराकृतिगणः । सामान्यप्रयोगे किम् । पुरुषो व्याघ्र इव शूरः ॥

## विशेषणं विशेष्येण बहुलम् । २ । १ । ५७ ॥

भेदकं समानाधिकरणेन भेद्येन बहुलं प्राग्वत् ॥ नीलमुत्पलं नीलोत्पलम् । बहुलग्रहणात्क्वचिन्नित्यम् । कृष्णसर्पः । क्वचिन्न । रामो जामदग्न्यः ॥

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च । २ । १ । ५८ ॥

पूर्वनिपातनियमार्थमिदम् । पूर्ववैयाकरणः । अपराध्यापकः । अपरश्चासावर्द्धश्च पश्चार्द्धः । अपरस्यार्द्धे पश्चभावो वक्तव्य इति पश्चादिति सूत्रस्थवार्तिकेन पश्चादेशः । प्रथमाध्यापकः । चरमाध्यापकः । जघन्याध्यापकः । समानाध्यापकः । मध्याध्यापकः । मध्यमाध्यापकः । वीरपुरुषः । कथमेकवीर इति पूर्वकालैकेति बाधित्वा परत्वादनेन समासे वीरैक इति हि स्यात् । बाहुलकाद्भविष्यति ॥

## श्रेण्यादयः कृतादिभिः । २ । १ । ५९ ॥

श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम् ॥ * ॥ अश्रेणयः श्रेणयः कृताः । श्रेणिकृताः ॥

## क्तेन नञ्विशिष्टेनानञ् । २ । १ । ६० ॥

नञैव विशिष्टेन क्तांतेनानञ् क्तान्तं समस्यते ॥ कृतं च तदकृतं च कृताकृतम् । नुडिटौ तद्भक्तत्वान्न भेदकौ । अशिताऽनशितेन जीवति । क्लिष्टाक्लिशितेन वर्तते । नञैवेति किम् । सिद्धं च भुक्तं च ॥ कृतापकृतादीनामुपसंख्यानम् ॥ * ॥ कृतापकृतम् ॥ गतप्रत्यागतादीनाञ्चोपसंख्यानम् ॥ * ॥ गतप्रत्यागतम् ॥ शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् ॥ * ॥ शाकप्रियः पार्थिवः शाकपार्थिवः । देवब्राह्मणः ॥

## सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः । २ । १ । ६१ ॥

सद्वैद्यः । महावैयाकरणः । परमपुरुषः । उत्तमपुरुषः । उत्कृष्टपुरुषः । पूज्यमानैः किम् । उत्कृष्टो गौः । पङ्कादुद्धृत इत्यर्थः ॥

## वृन्दारकनागकुञ्जरैः पूज्यमानम् । २ । १ । ६२ ॥

गोवृन्दारकः । गोनागः । गोकुञ्जरः । पूज्यमानं किम् । सुषीमो नागः । व्याघ्रादेराकृतिगणत्वादेव सिद्धे सामान्यप्रयोगार्थं वचनम् ॥

## कतरकतमौ जातिपरिप्रश्ने । २ । १ । ६३ ॥

कतरकठः । कतमकलापः । गोत्रं च चरणैः सहेति जातित्वम् । जातिपरिप्रश्ने किम् । कतरो भवतोर्देवदत्तः । कतमो भवतोर्देवदत्तः । कतमशब्दस्य जातिपरिप्रश्ने एव व्युत्पादितत्वा-

त्कतरशब्दस्यापि तदर्थवृत्तेरेव तत्साहचर्याद्ग्रहणे प्राप्ते एतत्साम-र्थ्यादेव कतमशब्दोऽन्यत्रापि वर्तते इति ज्ञायते॥

किं क्षेपे। २। १। ६४॥

कुत्सितो राजा किंराजा। यो न रक्षति। क्षेपे किम्। को राजा पाटलिपुत्रे॥

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः। २। १। ६५॥

इभपोटा। पोटा स्त्रीपुंसलक्षणा। इभयुवतिः। अग्निस्तोकः। उदश्वित्कतिपयम्। गृष्टिः सकृत्प्रसूता। गोगृष्टिः। धेनुर्नवप्रसूतिका। गोधेनुः। वशा वंध्या। गोवशा। वेहद्गर्भघातिनी। गोवेहत्। बष्कयणी तरुणवत्सा। कठश्रोत्रियः। कठाध्यापकः। कठधूर्तः। जातिः किम्। देवदत्तः प्रवक्ता॥

प्रशंसावचनैश्च। २। १। ६६॥

एतैः सह जातिः प्राग्वत्॥ रूढिशब्दाः प्रशंसावचना मतल्लिकादयो गृह्यन्ते। गोमतल्लिका। गोमचर्चिका। गोप्रकाण्डम्। गवोद्धः। गोतल्लजः। प्रशस्ता गौरित्यर्थः। मतल्लिकादयो नियतलिङ्गा न तु विशेष्यनिघ्नाः। जातिः किम्। कुमारी मतल्लिका॥

युवा खलतिपलितवलिनजरतीभिः। २। १। ६७॥

पूर्वनिपातनियमार्थं सूत्रम्। जरतीभिरिति स्त्रीलिङ्गनिर्देशः प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति ज्ञापनार्थः। युवा खलतिः युवखलतिः। युवतिः खलती युवखलतिः। युवपलितः। युववलिनः। युवजरती। युवत्यामेव जरतीधर्मोपलम्भेन तद्रूपारोपात्सामानाधिकरण्यम्॥

**कृत्यतुल्याख्या अजात्या । २ । १ । ६८ ॥**

भोज्योष्णम् । तुल्यश्वेतः । सदृशश्वेतः । अजात्या किम् । भोज्य ओदनः । प्रतिषेधसामर्थ्याद्विशेषणसमासोऽपि न ॥

**वर्णो वर्णेन । २ । १ । ६९ ॥**

समानाधिकरणेन सह प्राग्वत् ॥ कृष्णसारङ्गः ॥

**कुमारः श्रमणादिभिः २ । १ । ७० ॥**

कुमारी श्रमणा कुमारश्रमणा । कुमाराध्यापकः । इह गणे श्रमणा प्रव्रजिता गर्भिणीत्यादयः स्त्रीलिङ्गाः पठ्यन्ते ॥

**चतुष्पादो गर्भिण्या । २ । १ । ७१ ॥**

गोगर्भिणी ॥ चतुष्पाज्जातिरिति वक्तव्यम् ॥ * ॥ नेह । कालाक्षी गर्भिणी । चतुष्पात् किम् । ब्राह्मणी गर्भिणी ॥

**मयूरव्यंसकादयश्च । २ । १ । ७२ ॥**

एते निपात्यन्ते ॥ मयूरो व्यंसको मयूरव्यंसकः । व्यंसको धूर्तः । छन्दसि । हस्तेगृह्य । पुनर्दाय । एहीडादयोऽन्यपदार्थे ॥ एहीड इति यस्मिन्कर्मणि तदेहीडम् । लङुत्तमपुरुषैकवचनस्य ईडादेशः । एहियवम् । अच यामित्यस्य यवादेशः । उद्धर कोष्ठादुत्सृज देहीति यस्यां क्रियायां सा उद्धरोत्सृजा । उद्धमविधमा । आख्यातमाख्यातेनेत्यनेन सिद्धे असातत्यार्थमिह पाठः । उदक् च अवाक् च उच्चावचम् । उच्चावचादेशोऽच । निश्चितञ्च प्रचितञ्च निश्चप्रचम् । निश्चितप्रचितयोर्निश्चप्रचादेशः । नास्ति किञ्चन यस्याकिञ्चनः । जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारञ्चाभिदधाति ॥ जहीत्येतत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्ये समासेन चेत्कर्ताऽभिधीयत

इत्यर्थः । जहि जोडमिति य आह स जहिजोडः । जहिस्तम्बः । आख्यातमाख्यातेन क्रियासातत्ये ॥ अश्नीत पिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता । पचतभृज्जता । खादतमोदता । नास्ति कुतोऽपि भयं यस्य सोऽकुतोभयः । अन्यो राजा राजान्तरम् । अन्तरशब्दो भिन्नवाची । चिदेव चिन्मात्रम् । अत्रानुनासिकता निपातनात् । एवार्थमात्रशब्देनात्र समासः । मात्रं कार्त्स्न्येऽवधारणे इत्यमरः । अन्तरमात्रशब्दाभ्यां सह नित्यसमासः । मयूरव्यंसकादयश्चेति चकार एवकारार्थः । तेनैषां समासान्तरे घटकता नेति परमो मयूरव्यंसक इत्याद्येव । मयूरव्यंसकादिराकृतिगणः ॥

इत्योरम्भट्टविरचितायां व्याकरणदीपिकायां पाणिनिसूत्रवृत्तौ द्वितीयस्याध्यायस्य प्रथमः पादः ॥



# अथ द्वितीयस्याध्यायस्य
# द्वितीयः पादः ।

## पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे । २ । २ । १ ॥

अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी ॥ षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । अधरकायः । उत्तरकायः । एकदेशिना किम् । पूर्वं नाभेः कायस्य । एकाधिकरणे किम् । पूर्वश्छात्राणाम् । सर्वोऽप्येकदेशोऽन्हा समस्यते । संख्याविसायेति ज्ञापकात् । मध्याह्नः । सायान्हः । केचित्तु सर्व एकदेशः कालेन समस्यते न त्वन्हैव । ज्ञापकस्य सामान्यापेक्षत्वात् । तेन मध्यरात्रः । उपारताः पश्चिमरात्रगोचरा इत्यादि सिद्धमित्याहुः ॥

## अर्द्धं नपुंसकम् । २ । २ । २ ॥

समांशवाच्यर्धशब्दो नित्यं क्लीबे स प्राग्वत् ॥ अर्द्धं पिप्पल्या अर्द्धपिप्पली । क्लीबे किम् । ग्रामार्द्धः । द्रव्यैक्य एव । अर्द्धं पिप्पलीनाम् ॥

## द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् । २ । २ । ३ ॥

एतान्येकदेशिना सह प्राग्वद्वा ॥ द्वितीयं भिक्षाया द्वितीयभिक्षा । तृतीयभिक्षा । चतुर्थभिक्षा । तुर्यभिक्षा । एकदेशिना किम् । द्वितीयं भिक्षाया भिक्षुकस्य । अन्यतरस्यांग्रहणसामर्थ्यात्पूरणगुणेति निषेधं बाधित्वा पक्षे षष्ठीसमासः । भिक्षाद्वितीयम् ॥

## प्राप्तापन्ने च द्वितीयया । २ । २ । ४ ॥

पक्षे द्वितीयाश्रितेति समासः । प्राप्तो जीविकां प्राप्तजीविकः । जीविकाप्राप्तः । आपन्नजीविकः । जीविकापन्नः । इह सूत्रे द्वितीयया अ इति छित्वा अकारोऽपि विधीयते । तेन जीविकां प्राप्ता स्त्री प्राप्तजीविका । आपन्नजीविका ॥

## कालाः परिमाणिना । २ । २ । ५ ॥

परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते ॥ मासो जातस्य यस्य स मासजातः । द्व्यहजातः । द्वयोरन्होः समाहारो द्व्यहः । द्व्यहो जातस्येति विग्रहः ॥ उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम् ॥ * ॥ द्वे अहनी जातस्य यस्य द्व्यह्नजातः । अन्होन्ह इत्यन्हादेशः समासान्तः । पूर्वत्र तु न संख्यादेः समाहार इति तन्निषेधः ॥

## नञ् । २ । २ । ६ ॥

नञ् सुपा समस्यते ॥ अब्राह्मणः । अर्थाभावेऽव्ययीभावेन सहायं विकल्पते । रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति अद्रुतायामसंहितमिति च भाष्यवार्तिकप्रयोगात् । तेनानुपलब्धिरविवादोऽविघ्नमित्यादि सिद्धम् ॥

## ईषदकृता । २ । २ । ७ ॥

ईषत्पिङ्गलः ॥ ईषद्गुणवचनेनेति वाच्यम् ॥ * ॥ ईषद्रक्तम् । नेह ईषद्गार्ग्यः ॥

## षष्ठी । २ । २ । ८ ॥

राज्ञः पुरुषो राजपुरुषः ॥

## याजकादिभिश्च । २ । २ । ९ ॥

एभिः षष्ठ्यन्तं समस्यते ॥ तृजकाभ्यां कर्तरीत्यस्य प्रतिप्रसवोऽयम् । ब्राह्मणयाजकः । देवपूजकः ॥ गुणात्तरेण तरलोपश्चेति वक्तव्यम् ॥ * ॥ तरबन्तं यद्गुणवाचि तेन समासः ॥ न निर्द्धारण इति पूरणगुणेति च निषेधस्य प्रतिप्रसवोऽयम् । सर्वेषां श्वेततरः सर्वश्वेतः । सर्वेषां महत्तरः सर्वमहान् । एतच्च सर्वं गुणकात्स्न्यें इति सूत्रे भाष्ये पठितम् ॥ कृद्योगा च षष्ठी समस्यत इति वाच्यम् ॥ * ॥ इध्मप्रव्रश्चनः ॥ तत्स्थैश्च गुणैः षष्ठी समस्यत इति वाच्यम् ॥ * ॥ चन्दनगन्धः ॥ न तु तद्विशेषणैरिति वक्तव्यम् ॥ * ॥ घृतस्य तीव्रः ॥

## न निर्द्धारणे । २ । २ । १० ॥

निर्द्धारणे या षष्ठी सा न समस्यते ॥ नृणां द्विजः श्रेष्ठः ॥ प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम् ॥ * ॥ सर्पिषो ज्ञानम् ।

## पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन । २ । २ । ११ ॥

पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते ॥ पूरणे । सतां षष्ठः । गुणे । काकस्य कार्ष्ण्यम् । ब्राह्मणस्य शुक्लाः । यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातं तदेदमुदाहरणम् । अनित्योऽयं गुणेन निषेधः । संज्ञाप्रमाणत्वादित्यादिनिर्देशात् । तेनार्थगौरवं बुद्धिमान्द्यमित्यादि सिद्धम् । सुहितार्थास्तृप्त्यर्थाः । फलानां सुहितः । तृतीयासमासस्तु स्यादेव । स्वरे विशेषः । सत् । द्विजस्य कुर्वन् कुर्वाणो वा । किङ्कर इत्यर्थः । अव्ययम् । ब्राह्मणस्य कृत्वा । पूर्वोत्तरसाहचर्यात्कृदव्ययमेव गृह्यते । तेन तदुपरीत्यादि सिद्धमिति

रचितः । तव्ये । ब्राह्मणस्य कर्तव्यम् । तव्यता तु भवत्येव । स्वकर्तव्यम् । स्वरे भेदः । समानाधिकरणे । तक्षकस्य सर्पस्य । विशेषणसमासस्त्विह बहुलग्रहणान्न । गोर्धेनोरित्यादिषु पोटायुवतीत्यादीनां विभक्त्यन्तरे चरितार्थानां परत्वाद्बाधकः षष्ठीसमासः प्राप्तः सोऽप्यनेन बाध्यते ॥

## क्तेन च पूजायाम् । २ । २ । १२ ॥

मतिबुद्धीतिसूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते ॥ राज्ञां मतो बुद्धः पूजितो वा । पूजायां किम् । छात्रहसितम् । राजपूजितइत्यादौ तु भूते क्तान्तेन सह तृतीयान्तसमासः ॥

## अधिकरणवाचिना च । २ । २ । १३ ॥

क्तेन षष्ठी न समस्यते ॥ इदमेषामासितं गतं भुक्तं वा ॥

## कर्मणि च । २ । २ । १४ ॥

उभयप्राप्तौ कर्मणीति या षष्ठी सा न समस्यते ॥ आश्चर्यं गवां दोहोऽगोपेन ॥

## तृजकाभ्यां कर्तरि । २ । २ । १५ ॥

कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः ॥ अपां स्रष्टा । वज्रस्य भर्ता । ओदनस्य पाचकः । कर्तरि किम् । इक्षूणां भक्षणमिक्षुभक्षिका । पत्यर्थभर्तृशब्दस्य याजकादित्वात्समासः । भूभर्ता । कथं तर्हि घटानां निर्मातुस्त्रिभुवनविधातुश्च कलह इति । शेषषष्ठ्या समास इति कैयटः ॥

## कर्तरि च । २ । २ । १६ ॥

कर्तृषष्ठ्या अकेन न समासः ॥ भवतः शायिका । नेह तृजनुवर्तते । तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात् ॥

## नित्यं क्रीडाजीविकयोः । २ । २ । १७ ॥

एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते ॥ उद्दालकपुष्पभञ्जिका । क्रीडाविशेषस्य संज्ञा । संज्ञायामिति ण्वुल् । जीविकायाम् । दन्तलेखकः । तत्र क्रीडायां विकल्पे जिविकायां तृजकाभ्यां कर्तरीति निषेधे प्राप्ते वचनम् ॥

## कुगतिप्रादयः । २ । २ । १८ ॥

एते समर्थेन नित्यं समस्यन्ते ॥ कुत्सितः पुरुषः कुपुरुषः । ऊरीकृत्य । उररीकृत्य । प्रादिग्रहणमगत्यर्थम् । सुपुरुषः । अत्र वार्तिकानि ॥ प्रादयो गताद्यर्थे प्रथमया ॥ * ॥ प्रगत आचार्यः प्राचार्यः ॥ अत्यादयः क्रान्ताद्यर्थे द्वितीयया ॥ * ॥ अतिक्रान्तो मालामतिमालः ॥ अवादयः क्रुष्टाद्यर्थे तृतीयया ॥ अवक्रुष्टः कोकिलया अवकोकिलः ॥ पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ॥ * ॥ परिग्लानोऽध्ययनाय पर्यध्ययनः ॥ निरादयः क्रान्ताद्यर्थे पञ्चम्या ॥ * ॥ निष्क्रान्तः कौशांब्या निष्कौशाम्बिः ॥ कर्मप्रवचनीयानां प्रतिषेधः ॥ * ॥ वृक्षं प्रति ॥

## उपपदमतिङ् । २ । २ १९ ॥

उपपदं सुबन्तं समर्थेन नित्यं समस्यतेऽतिङन्तश्च समासः । कुम्भं करोति कुम्भकारः । इह कुम्भ अस् कार इत्यलै किक प्रक्रियावाक्यम् । अतिङ् किम् । मा भवान्भूत् । माङि लुङिति सप्तमीनिर्देशान्माङुपपदम् । अतिङ्ग्रहणं ज्ञापयति सुपेत्येतन्नेहानुवर्तत इति । पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्यातिङ्ग्रहणं तत्रापकृष्यते सुपेति च निवृत्तम् । तथा च गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति सिद्धम् । व्याघ्री । अश्वक्रीती । कच्छपी ।

### अमैवाव्ययेन । २ । २ । २० ॥

अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते ॥ स्वादुङ्कारम् । नेह कालसमयवेलासु तुमुन् । कालः समयो वेला वा भोक्तुम् । अमैवेति किम् । अग्रे भोजम् । अग्रे भुक्त्वा । विभाषाग्रेप्रथमपूर्वेष्विति क्त्वाणमुलौ । अमा चान्येन च तुल्यविधानमेतत् ॥

### तृतीयाप्रभृतीन्यन्यतरस्याम् । २ । २ । २१ ॥

उपदंशस्तृतीयायामित्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते ॥ मूलकेनोपदंशं भुङ्क्ते मूलकोपदंशम् । उच्चैः कारमाचष्टे उच्चैःकारम् । अमन्तेन किम् । पर्याप्तो भोक्तुम् ॥

### क्त्वा च । २ । २ । २२ ॥

तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते ॥ उच्चैः कृत्वा । उच्चैःकृत्य । अव्यये यथाभिप्रेतेति क्त्वा । तृतीयाप्रभृतीनीति किम् । अलङ्कृत्वा । खलु कृत्वा ॥

### शेषो बहुव्रीहिः । २ । २ । २३ ॥

अधिकारोऽयम् । द्वितीया श्रितेत्यादिना यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेषः प्रथमान्तमित्यर्थः ॥ बहुव्रीहिप्रदेशा बहुव्रीहौ प्रकृत्या पूर्वपदमित्येवमादयः ॥

### अनेकमन्यपदार्थे । २ । २ । २४ ॥

अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ॥ अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामिति च फलितम् । प्राप्तमुदकं यं प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरः । चित्रा

गावो यस्येति लौकिकविग्रहे चित्रा अस् गो अस् इत्यलौकिकविग्रहे चित्रगुः । वीरपुरुषो ग्रामः । प्रथमार्थे तु न । वृष्टे देवे गतः । व्यधिकरणानामपि न । पञ्चभिर्भुक्तमस्य ॥ प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः ॥ * ॥ प्रपतितपर्णः प्रपर्णः ॥ नञो ऽस्त्यर्थानां वोत्तरपदलोपः ॥ * ॥ अविद्यमानपुत्रोऽपुत्रः । अस्तीति विभक्तिप्रतिरूपकमव्ययम् । अस्तिक्षीरा गौः ॥

## संख्यया ऽव्ययासन्नादूराधिकसंख्याः संख्येये । २ । २ । २५ ॥

संख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते स बहुव्रीहिः । दशानां समीपे ये सन्ति ते उपदशाः । नव एकादश वेत्यर्थः । बहुव्रीहौ संख्येये डजबहुगणादिति डच् समासान्तः । आसन्नविंशाः ॥ विंशतेरासन्ना इत्यर्थः । अदूरविंशाः । अधिकचत्वारिंशाः । ति विंशतेर्डितीति तिशब्दलोपः । द्वौ वा त्रयो वा द्वित्राः । द्विरावृत्ता दश द्विदशाः । विंशतिरित्यर्थः । संख्यया किम् । पञ्च ब्राह्मणाः ॥ अव्ययेत्यादि किम् । ब्राह्मणाः पञ्च । संख्येये किम् । अधिका विंशतेर्गवां संख्या ॥

## दिङ्नामान्यन्तराले । २ । २ । २६ ॥

दिशो नामान्यन्तराले वाच्ये प्राग्वत् ॥ सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः ॥ * ॥ दक्षिणस्याः पूर्वस्याश्च दिशोऽन्तरालं दक्षिणपूर्वा । नामग्रहणाद्यौगिकानां न । ऐन्द्र्याश्च कौबेर्याश्चान्तरालम् ॥

## तत्र तेनेदमिति सरूपे । २ । २ । २७ ॥

सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे स बहुव्रीहिः ॥

इतिशब्दादयं विषयविशेषो लभ्यते । केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि । मुष्टीमुष्टि । बाहूबाहवि । अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घत्वम् । इच् कर्मव्यतिहार इतीच् समासान्तः । तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वं च । सरूपग्रहणं किम् । हलैश्च मुसलैश्च प्रहृत्येदं युद्धं प्रवृत्तम् ॥

## तेन सहेति तुल्ययोगे । २ । २ । २८ ॥

तुल्ययोगे वर्तमानं सहेत्येतत्तृतीयान्तेन प्राग्वत् ॥ पुत्रेण सह सपुत्रः । सहपुत्रो वागतः । वोपसर्जनस्येति वा सः । तुल्ययोगे किम् । सहैव दशभिः पुत्रैर्भारं वहति गर्दभी । विद्यमानैरेव बहुभिः पुत्रैर्भारं वहतीत्यर्थः । तुल्ययोगवचनं प्रायिकम् । सकर्मकः । सलोमकः ॥

## चार्थे द्वन्द्वः । २ । २ । २९ ॥

अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः ॥ समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । परस्परनिरपेक्षस्यानेकस्य एकस्मिन्नन्वयः समुच्चयः । अन्यतरस्याऽऽनुषङ्गिकत्वेनान्वयोऽन्वाचयः । मिलितानामन्वय इतरेतरयोगः । समूहः समाहारः । तत्रेश्वरं गुरुञ्च भजस्वेति, समुच्चये भिक्षामट गाञ्चानयेत्यन्वाचये च न समासोऽसामर्थ्यात् । धवखदिरौ छिन्धि । अनेकोक्तेर्होतृपोतृनेष्टोद्गातारः । द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे तु होतापोतानेष्टोद्गातारः । संज्ञापरिभाषम् । वाक्त्वक्स्रजम् । द्वन्द्वप्रदेशा द्वन्द्वाच्चुदषहान्तात्समाहारे इत्येवमादयः ॥

## उपसर्जनं पूर्वम् । २ । २ । ३० ॥

समासे उपसर्जनं प्राक् प्रयोज्यम् ॥ कष्टश्रितः ॥

**राजदन्तादिषु परम् । २ । २ । ३१ ॥**

एषु पूर्वप्रयोगार्हं परं स्यात् ॥ दन्तानां राजा राजदन्तः । धर्मादिष्वनियमः । अर्थधर्मौ । धर्मार्थौ । जम्पती । दम्पती । जायापती । जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते । आकृतिगणोऽयम् ।

**द्वन्द्वे घि । २ । २ । ३२ ॥**

द्वन्द्वे घिसंज्ञं पूर्वं स्यात् ॥ हरिश्च हरश्च हरिहरौ । अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे । हरिगुरुहराः । हरिहरगुरवः ।

**अजाद्यदन्तम् । २ । २ । ३३ ॥**

इदं द्वन्द्वे पूर्वं स्यात् ॥ ईशकृष्णौ ॥ बहुष्वनियमः ॥ * ॥ अश्वरथेन्द्राः । इन्द्राश्वरथाः ॥ घ्यन्तादजाद्यदन्तं विप्रतिषेधेन ॥ * ॥ इन्द्राग्नी ॥

**अल्पाच्तरम् । २ । २ । ३४ ॥**

शिवकेशवौ । ऋतुनक्षत्राणां समानाक्षराणामानुपूर्व्येण ॥ * ॥ हेमन्तशिशिरवसन्ताः । कृत्तिकारोहिण्यौ । समानाक्षराणां किम् । ग्रीष्मवसन्तौ ॥ लघ्वक्षरं पूर्वम् ॥ * ॥ कुशकाशम् ॥ अभ्यर्हितञ्च ॥ * ॥ तापसपर्वतौ ॥ वर्णानामानुपूर्व्येण ॥ * ॥ ब्राह्मणक्षत्रियौ ॥ भ्रातुर्ज्यायसः ॥ * ॥ युधिष्ठिरार्जुनौ ॥ संख्याया अल्पीयस्याः ॥ * ॥ द्वादश ॥ बहुव्रीहावपि । द्वित्राः ॥

**सप्तमीविशेषणे बहुव्रीहौ । २ । २ । ३५ ॥**

द्वन्द्वे इति निवृत्तम् । सप्तम्यन्तं विशेषणञ्च बहुव्रीहौ पूर्वं प्रयोज्यम् ॥ कण्ठेकालः । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ।

चित्रगुः ॥ सर्वनामसंख्ययोरुपसंख्यानम् ॥ * ॥ सर्वश्वेतः । द्विशुक्लः । मिथोऽनयोः समासे संख्यापूर्वं शब्दपरविप्रतिषेधात् । द्व्यन्यः । वा प्रियस्य ॥ * ॥ गुडप्रियः । प्रियगुडः । गड्वादेः परा सप्तमी ॥ * ॥ गडुकण्ठः । क्वचिन्न । वहेगडुः ॥

## निष्ठा । २ । २ । ३६ ॥

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् ॥ कृतकृत्यः ॥ जातिकालसुखादिभ्यः परा निष्ठा वाच्या ॥ * ॥ सारङ्गजग्धी । मासजाता । सुखजाता । प्रायिकं चेदम् । कृतकटः । पीतोदकः ।

## वा ऽऽहिताग्न्यादिषु । २ । २ । ३७ ॥

आहिताग्निः । अग्न्याहितः । आकृतिगणोऽयम् ॥ प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ ॥ * ॥ अस्युद्यतः । दण्डपाणिः । क्वचिन्न । विवृतासिः ॥

## कडाराः कर्मधारये । २ । २ । ३८ ॥

कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः ॥ कडारजैमिनिः । जैमिनिकडारः ॥

इत्योरम्भट्टविरचितायां व्याकरणदीपिकायां वृत्तौ
द्वितीयाध्यायस्य द्वितीयः पादः ॥



# अथ द्वितीयाध्यायस्य तृतीयः पादः ।



**अनभिहिते । २ । ३ । १ ॥**

इत्यधिकृत्य ॥

**कर्मणि द्वितीया । २ । ३ । २ ॥**

अनुक्ते कर्मणि द्वितीया स्यात् ॥ हरिं भजति । अभिहिते तु कर्मणि प्रातिपदिकार्थमात्रे इति प्रथमैव । अभिधानञ्च प्रायेण तिङ्कृत्तद्धितसमासैः । तिङ् । हरिः सेव्यते । कृत् । लक्ष्म्या सेवितः । तद्धितः । शतेन क्रीतः शत्यः । समासः । प्राप्त आनन्दो यं प्राप्तानन्दः । क्वचिन्निपातेनाभिधानं यथा ।

विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम् ।

साम्प्रतमित्यस्य हि युज्यत इत्यर्थः ॥

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।

द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥

उभयतः कृष्णं गोपाः । सर्वतः कृष्णम् । धिक्कृष्णाभक्तम् । उपर्युपरि लोकं हरिः । अध्यधि लोकम् । अधोऽधो लोकम् । अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि । अभितः कृष्णम् । परितः कृष्णम् । ग्रामं समया । निकषा लङ्काम् । हा कृष्णाभक्तम् । तस्य शोच्यत इत्यर्थः । बुभुक्षितं न प्रतिभाति किञ्चित् ॥

**तृतीया च होश्छन्दसि । २ । ३ । ३ ॥**

जुहोतेः कर्मणि तृतीया स्यात् द्वितीया च ॥ यवाग्वा अग्नि-

होत्रं जुहोति। अग्निहोत्रशब्दो हविषि वर्तते। यस्याग्निहोत्रमधिश्रितममेध्यमापद्येतेत्यादिप्रयोगदर्शनात्। अग्नये हूयत इति व्युत्पत्तेश्च। यवाग्वाख्यं हविर्देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः॥

## अन्तरान्तरेण युक्ते। २। ३। ४॥

आभ्यां योगे द्वितीया स्यात्॥ अन्तरा त्वां मां हरिः। अन्तरेण हरिं न सुखम्।

## कालाध्वनोरत्यन्तसंयोगे। २। ३। ५॥

इह द्वितीया स्यात्॥ मासं कल्याणी। मासमधीते। मासं गुडधानाः। क्रोशं कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः। अत्यन्तसंयोगे किम्। मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः॥

## अपवर्गे तृतीया। २। ३। ६॥

अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात्॥ अन्हा क्रोशेन वाऽनुवाकोऽधीतः। अपवर्गे किम्। मासमधीतो नायातः॥

## सप्तमीपञ्चम्यौ कारकमध्ये। २। ३। ७॥

शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः॥ अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता। कर्तृशक्त्योर्मध्येऽयं कालः। इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्। कर्तृकर्मशक्त्योर्मध्येऽयं देशः। अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते। तदस्मिन्नधिकमिति यस्मादधिकमिति च सूत्रनिर्देशात्। लोके लोकाद्वाऽधिको हरिः॥

## कर्मप्रवचनीययुक्ते द्वितीया। २। ३। ८॥

एतेन योगे द्वितीया स्यात्॥ जपमनु प्रावर्षत्। हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः॥

**यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी । २ । ३ । ९ ॥**

अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् ॥ उप परार्द्धे हरेर्गुणाः । परार्द्धादधिका इत्यर्थः । ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी । अधि भुवि रामः । अधि रामे भूः । सप्तमी शौण्डैरिति समासपक्षे तु रामाधीना । अषडक्षेत्यादिना खः ॥

**पञ्चम्यपाङ्परिभिः । २ । ३ । १० ॥**

एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् ॥ अप हरेः परि हरेः संसारः । परिरत्र वर्जने । लक्षणादौ तु हरिं परि । आ मुक्तेः संसारः । आ सकलाद् ब्रह्म ॥

**प्रतिनिधिप्रतिदाने च यस्मात् । २ । ३ । ११ ॥**

अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् ॥ प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रतियच्छति माषान् ॥

**गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि । २ । ३ । १२ ॥**

अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायाम् ॥ ग्रामं ग्रामाय वा गच्छति ॥ चेष्टायां किम् । मनसा हरिं व्रजति । अध्वनीति किम् । पन्थानं गच्छति । गन्त्राधिष्ठितेऽध्वन्येवायं निषेधः । यदा तूत्पथात्पन्थानमेवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव । उत्पथेन पथे गच्छति ॥

**चतुर्थी सम्प्रदाने । २ । ३ । १३ ॥**

स्पष्टम् । विप्राय गां ददाति । अनभिहित इत्येव । दानीयो विप्रः ॥ तादर्थ्ये चतुर्थी वाच्या ॥ * ॥ मुक्तये हरिं भजति ॥

क्लृपि सम्पद्यमाने च ॥ * ॥ भक्तिर्ज्ञानाय कल्पते सम्पद्यते जायत इत्यादि ॥ उत्पातेन ज्ञापिते च ॥ * ॥ वाताय कपिला विद्युत् ॥ हितयोगे च ॥ * ॥ ब्राह्मणाय हितम् ॥

**क्रियार्थोपपदस्य च कर्मणि स्थानिनः । २ । ३ । १४ ॥**

क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात् ॥ फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः । नमस्कुर्मो नृसिंहाय । नृसिंहमनुकूलयितुमित्यर्थः । एवं स्वयंभुवे नमस्कृत्येत्यादावपि ॥

**तुमर्थाच्च भाववचनात् । २ । ३ । १५ ॥**

भाववचनाश्चेति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात् ॥ यागाय याति । यष्टुं यातीत्यर्थः ॥

**नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च । २ । ३ । १६ ॥**

एभिर्योगे चतुर्थी स्यात् ॥ हरये नमः । उपपदविभक्तेः कारकविभक्तिर्बलीयसी । नमस्करोति देवान् । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि । प्रभ्वादियोगे षष्ठ्यपि साधुः । तस्मै प्रभवति स एषां ग्रामणीरिति निर्देशात् । तेन प्रभुर्बुभूषुर्भुवनत्रयस्येति सिद्धम् । वषडिन्द्राय । चकारः पुनर्विधानार्थः । तेनाशीर्विवक्षायां परामपि चतुर्थीं चाशिषीति षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् ॥

**मन्यकर्मण्यनादरे विभाषाऽप्राणिषु । २ । ३ । १७ ॥**

प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे ॥ न

त्वां तृणं मन्ये तृणाय वा । श्वना निर्देशान्नानादिकयोगे न । न त्वां तृणं मन्ये ॥ अप्राणिष्वित्यपनीय नौकाकान्नशुकशृगालवर्जेष्विति वक्तव्यम् ॥ * ॥ तेन न त्वां नावमन्नं वा मन्ये इत्यत्राप्राणित्वेऽपि चतुर्थी न । न त्वां शुने मन्ये इत्यत्र प्राणित्वेऽपि भवत्येव ।

## कर्तृकरणयोस्तृतीया । २ । ३ । १८ ॥

अनभिहिते कर्तरि करणे च तृतीया स्यात् ॥ रामेण बाणेन हतो बाली ॥ प्रकृत्यादिभ्य उपसंख्यानम् ॥ * ॥ प्रकृत्या चारुः ॥ क्रियापदाश्रवणात्कर्तृकरणयोरभावात्तत्रापि च प्राप्नोति ॥ प्रायेण याज्ञिकः । प्रायशब्दो बह्वर्थवाची । बहवो याज्ञिका इत्यर्थः । तत्र प्रथमा प्राप्नोति । गोत्रेण गार्ग्यः । प्रथमा षष्ठी वात्र प्राप्नोति । समेनैति । विषमेणैति । द्वितीया प्राप्नोति । द्विद्रोणेन धान्यं क्रीणाति । द्वयोर्द्रोणयोः समाहारो द्विद्रोणम् । पात्रादित्वात् स्त्रीत्वाभावः । अत्रापि द्वितीया प्राप्नोति । पञ्चकेन पशून् गृह्णाति । पञ्च परिमाणमस्य पञ्चकः संघः । तत्र द्वितीया प्राप्ता । पशूनित्यनेनैतत्समानाधिकरणम् । संघसंघिनोरभेदस्य विवक्षणात् । सुखेन दुःखेन यातीत्यादि ॥

## सहयुक्तेऽप्रधाने । २ । ३ । १९ ॥

सहार्थेन युक्तेऽप्रधाने तृतीया स्यात् ॥ पुत्रेण सहागतः पिता । एवं साकंसार्द्धंसमंयोगेऽपि । विनाऽपि तद्योगं तृतीया । वृद्धो यूनेति निर्देशात् ॥

## येनाङ्गविकारः । २ । ३ । २० ॥

येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् ॥ अक्ष्णा काणः । अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः । अङ्गविकारः किम् । अक्षि काणमस्य ॥

## इत्थम्भूतलक्षणे । २ । ३ । २१ ॥

कञ्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् ॥ जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः ॥

## संज्ञो ऽन्यतरस्यां कर्मणि । २ । ३ । २२ ॥

सम्पूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् ॥ पित्रा पितरं वा संजानीते ॥

## हेतौ २ । ३ । २३ ॥

हेत्वर्थे तृतीया स्यात् ॥ द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतुत्वम् । करणत्वन्तु क्रियामात्रविषयं व्यापारनियतञ्च । दण्डेन घटः । पुण्येन दृष्टो हरिः । फलमपीह हेतुः । अध्ययनेन वसति । गम्यमानाऽपि क्रिया विभक्तौ प्रयोजिका । अलं श्रमेण । श्रमेण साध्यं नास्तीत्यर्थः । इह साधनक्रियां प्रति श्रमः करणम् । शतेन वत्सान् पाययति पयः । शतेन परिच्छिद्येत्यर्थः ॥ अशिष्ट-व्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया ॥ * ॥ दास्या संयच्छते कामुकः ॥ धर्मं तु भार्यायै संयच्छति ॥

## अकर्तर्यृणे पञ्चमी । २ । ३ । २४ ॥

कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात् ॥ शताद्बद्धः । अकर्तरि किम् । शतेन बन्धितः ॥

## विभाषा गुणे ऽस्त्रियाम् । २ । ३ । २५ ॥

गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् ॥ जाड्याज्जाड्येन वा बद्धः । गुणे किम् । धनेन कुलम् । अस्त्रियां किम् । बुद्ध्या मुक्तः । विभाषेति योगविभागादगुणे स्त्रियां च क्वचित् । धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः ॥

## षष्ठी हेतुप्रयोगे । २ । ३ । २६ ॥

हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति ॥

## सर्वनाम्नस्तृतीया च ॥ २ । ३ । २७ ॥

सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च ॥ केन हेतुना वसति । कस्य हेतोः ॥ निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् ॥ * ॥ किं निमित्तं वसति । केन निमित्तेन । कस्मै निमित्तायेत्यादि । एवं किं कारणं को हेतुः किं प्रयोजनमित्यादि । प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः । ज्ञानेन निमित्तेन हरिः सेव्यः । ज्ञानाय निमित्तायेत्यादि ॥

## अपादाने पञ्चमी । ३ । ३ । २८ ॥

ग्रामादायाति । धावतोऽश्वात्पतति ॥ ल्यब्लोपे कर्मण्यधिकरणे च ॥ * ॥ प्रासादात्प्रेक्षते । आसनात्प्रेक्षते । प्रासादमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः । श्वशुराज्जिह्रेति । श्वशुरं वीक्ष्येत्यर्थः । गम्यमानाऽपि क्रिया कारकविभक्तीनां निमित्तम् । कस्मात्त्वम् । नद्याः ॥ यतश्चाध्वकालनिर्माणं तत्र पञ्चमी ॥ * ॥ तद्युक्तादध्वनः प्रथमासप्तम्यौ ॥ * ॥ कालात्सप्तमी च वक्तव्या ॥ * ॥ वनाद्ग्रामो योजने योजनं वा । कार्तिक्या आग्रहायणी मासे ॥

## अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते । २ । ३ । २९ ॥

एतैर्योगे पञ्चमी ॥ अन्य इत्यर्थग्रहणम् । इतरग्रहणं प्रपञ्चार्थम् । अन्यो भिन्न इतरो वा कृष्णात् । आराद्वनात् । ऋते कृष्णात् । पूर्वो ग्रामात् । दिशि दृष्टः शब्दो दिक्शब्दः । तेन सम्प्रति देशका-

लवृत्तिना योगेऽपि भवति । चैत्रात्पूर्वः फाल्गुनः । अवयववाचिना योगे तु न । तस्य परमाम्रेडितमिति निर्देशात् । पूर्वं कायस्य । अञ्चूत्तरपदस्य दिक्शब्दत्वेऽपि षष्ठ्यतसर्थेति षष्ठीं बाधितुं पृथक् ग्रहणम् । प्राक् प्रत्यग्वा ग्रामात् । आच् । दक्षिणा ग्रामात् । आहि । दक्षिणाहि ग्रामात् । अपादाने पञ्चमीति सूत्रे कार्तिक्याः प्रभृतीति भाष्यप्रयोगात् प्रभृतियोगे पञ्चमी । भवात्प्रभृति आरभ्य वा सेव्यो हरिः । अपपरि बहिरञ्चवः पञ्चम्या इति समासविधानाज्ज्ञापकात् बहिर्योगे पञ्चमी । ग्रामाद्बहिः ।

## षष्ठ्यतसर्थप्रत्ययेन । २ । ३ । ३० ॥

एतद्योगे षष्ठी स्यात् ॥ दिक्शब्देति पञ्चम्यपवादः । ग्रामस्य दक्षिणतः पुरः पुरस्तात् उपर्युपरिष्टात् ॥

## एनपा द्वितीया । २ । ३ । ३१ ॥

एनबन्तेन योगे द्वितीया स्यात् ॥ एनपेति योगविभागात्षष्ठ्यपि । दक्षिणेन ग्रामं ग्रामस्य वा । एवमुत्तरेण ॥

## पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् । २ । ३ । ३२ ॥

एभिर्योगे तृतीया स्यात् पञ्चमीद्वितीये च । अन्यतरस्यांग्रहणं समुच्चयार्थम् । पञ्चमीद्वितीये ऽनुवर्तेते । पृथग् रामेण रामाद्रामं वा । एवं विनानाना ॥

## करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्ववचनस्य । २ । ३ । ३३ ॥

एभ्यो ऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः ॥ स्तोकेन स्तोकाद्वा मुक्तः । द्रव्ये तु स्तोकेन विषेण हतः ।

विभागो विभक्तम् । निर्द्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात् । माथुराः पाटलिपुत्रकेभ्य आढ्यतराः ॥

**साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः । २ । ३ । ४३ ॥**

आभ्यां योगे सप्तमी स्यादर्चायां न तु प्रतेः प्रयोगे ॥ मातरि साधुर्निपुणो वा । अर्चायां किम् । निपुणो राज्ञो भृत्यः । इह तत्वकथने तात्पर्यम् ॥ अप्रत्यादिभिरिति वक्तव्यम् ॥ * ॥ साधुर्निपुणो वा मातरं प्रति पर्यनु वा ॥

**प्रसितोत्सुकाभ्यां तृतीया च । २ । ३ । ४४ ॥**

आभ्यां योगे तृतीया स्यात् सप्तमी च । प्रसित उत्सुको वा हरिणा हरौ वा ॥

**नक्षत्रे च लुपि । २ । ३ । ४५ ॥**

नक्षत्रे प्रकृत्यर्थे सति यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तो ऽधिकरणे ॥ मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् । मूले श्रवणे इति वा । लुपि किम् । पुष्ये शनिः ।

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । २ । ३ । ४६ ॥**

नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात् ॥ उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणम् । अनियतलिङ्गास्तु लिङ्गमात्राधिक्यस्य । तटः । तटी । तटम् । परिमाणमात्रे द्रोणो व्रीहिः । द्रोणरूपं यत्परिमाणं तत्परिच्छिन्न इत्यर्थः । प्रत्य-

यार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम् । प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः । वचनं संख्या । एकः । द्वौ । बहवः । इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम् ॥

**सम्बोधने च । २ । ३ । ४७ ॥**

इह प्रथमा स्यात् ॥ हे राम ॥

**सामन्त्रितम् । २ । ३ । ४८ ॥**

सम्बोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात् ॥ अग्ने तव । आमन्त्रितप्रदेशा आमन्त्रितं पूर्वमविद्यमानवदित्येवमादयः ॥

**एकवचनं सम्बुद्धिः । २ । ३ । ४९ ॥**

सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् ॥ हे राम । सम्बुद्धिप्रदेशा एङ्ह्रस्वात्सम्बुद्धेरित्येवमादयः ॥

**षष्ठी शेषे । २ । ३ । ५० ॥**

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः शेषस्तत्र षष्ठी स्यात् ॥ राज्ञः पुरुषः । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव ॥ सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधो दकस्योपस्कुरुते । भजे शम्भोश्चरणयोः । फलानां तृप्तः ॥

**ज्ञो विदर्थस्य करणे । २ । ३ । ५१ ॥**

जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् ॥ सर्पिषो ज्ञानम् ।

**अधीगर्थदयेशां कर्मणि । २ । ३ । ५२ ॥**

एषां कर्मणि शेषे षष्ठी स्यात् ॥ मातुः स्मरणम् । सर्पिषो दयनं ईशनं वा ॥

## कृञः प्रतियत्ने । २ । ३ । ५३ ॥

कृञः कर्मणि शेषे षष्ठी स्याद् गुणाधाने ॥ एधो दकस्योपस्करणम् ।

## रुजार्थानां भाववचनानामज्वरेः । २ । ३ । ५४ ॥

भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात् ॥ चैारस्य रोगस्य रुजा ॥ अज्वरिसन्ताप्योरिति वाच्यम् ॥ * ॥ रोगस्य चैारज्वरः । चैारसन्तापो वा । रोगकर्तृकं चैारसम्बन्धि ज्वरादिकमित्यर्थः ॥

## आशिषि नाथः । २ । ३ । ५५ ॥

आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात् ॥ सर्पिषो नाथनम् । आशिषि किम् । माणवकनाथनम् । तत्सम्बन्धिनी याच्ञेत्यर्थः ।

## जासिनिप्रहणनाटक्राथपिषां हिंसायाम् । २ । ३ । ५६ ॥

हिंसार्थानामेषां कर्मणि शेषे षष्ठी स्यात् ॥ चैारस्योज्जासनम् । निप्रौ संहतौ विपर्यस्तौ व्यस्तौ च । चैारस्य निप्रहणनं प्रणिहननं प्रहणनं निहननञ्च । नट अवस्यन्दने चुरादिः । चैारस्योन्नाटनम् । चैारस्य क्राथनम् । वृषलस्य पेषणम् । हिंसायां किम् । धानापेषणम् ।

## व्यवहृपणोः समर्थयोः । २ । ३ । ५७ ॥

शेषे कर्मणि षष्ठी स्यात् ॥ द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता ॥ शतस्य व्यवहरणं पणनं वा । समर्थयोः किम् । शलाकाव्यवहारः । गणनेत्यर्थः । ब्राह्मणपणनम् । स्तुतिरित्यर्थः ।

## दिवस्तदर्थस्य । २ । ३ । ५८ ॥

द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात्॥ शतस्य दीव्यति। तदर्थस्य किम्। ब्राह्मणं दीव्यति। स्तौतीत्यर्थः॥

**विभाषोपसर्गे। २। ३। ५९॥**

पूर्वयोगापवादः। शतस्य शतं वा प्रतिदीव्यति॥

**द्वितीया ब्राह्मणे। २। ३। ६०॥**

ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात्॥ षष्ठ्यपवादः। गामस्य तदहः सभायां दीव्येयुः॥

**प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने। २। ३। ६१॥**

देवतासम्प्रदानकेऽर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविर्विशेषस्य वाचकाच्छब्दात्षष्ठी स्यात्॥ अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा॥

**चतुर्थ्यर्थे बहुलं छन्दसि। २। ३। ६२॥**

षष्ठी स्यात्॥ पुरुषमृगश्चन्द्रमसे गोधाकालकादार्वाघाटस्ते वनस्पतीनाम्। वनस्पतिभ्य इत्यर्थः। षष्ठ्यर्थे चतुर्थीति वक्तव्यम्॥ * ॥ या खर्वेण पिबति तस्यै खर्वः॥

**यजेश्च करणे। २। ३। ६३॥**

इह छन्दसि बहुलं षष्ठी॥ घृतस्य घृतेन वा यजते॥

**कृत्वोऽर्थप्रयोगे कालेऽधिकरणे। २। ३। ६४॥**

कृत्वोऽर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी॥ पञ्चकृत्वोऽह्नो भोजनम्। द्विरह्नो भोजनम्। शेषे किम्। द्विरहन्यध्ययनम्॥

**कर्तृकर्मणोः कृति। २। ३। ६५॥**

कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात्॥ कृष्णस्य कृतिः॥

जगतः कर्ता कृष्णः । गुणकर्मणि वेष्यते ॥ * ॥ नेताऽश्वस्य स्रुघ्नस्य स्रुघ्नं वा । कृति किम् । तद्धिते माभूत् । कृतपूर्वी कटम् ॥

**उभयप्राप्तौ कर्मणि । २ । ३ । ६६ ॥**

उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यं गवां दोहोऽगोपेन । स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः ॥ * ॥ भेदिका बिभित्सा वा रुद्रस्य जगतः । शेषे विभाषा ॥ * ॥ स्त्रीप्रत्यय इत्येके । विचित्रा जगतः कृतिर्हरेर्हरिणा वा । केचिदविशेषेण विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येणाचार्यस्य वा ॥

**क्तस्य च वर्तमाने । २ । ३ । ६७ ॥**

वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् ॥ न लोकेति निषेधस्यापवादः । राज्ञां मतो बुद्धः पूजितो वा ॥

**अधिकरणवाचिनश्च । २ । ३ । ६८ ॥**

क्तस्य योगे षष्ठी स्यात् ॥ इदमेषां शयितम् ।

**न लोकाव्ययनिष्ठाखलर्थतृनाम् । २ । ३ । ६९ ॥**

एषां प्रयोगे षष्ठी न स्यात् ॥ लादेशाः । कुर्वन् कुर्वाणो वा सृष्टिं हरिः । उः । हरिं दिदृक्षुः । अलङ्करिष्णुर्वा । उकञ् । दैत्यान् घातुको हरिः । कमेरनिषेधः ॥ * ॥ लक्ष्म्याः कामुकः । अव्ययम् । जगत्सृष्ट्वा । सुखं कर्तुम् । निष्ठा । दैत्यान् हतवान् । विष्णुना हता दैत्याः । खलर्थः । ईषत्करः प्रपञ्चो हरिणा । तृन्निति प्रत्याहारः । शतृशानचाविति तृशब्दादारभ्यातृनो नकारात् । शानन् । सोमं पवमानः । चानश् । आत्मानं मण्डयमानः । शतृ । वेदमधीयन् । तृन् । कर्ता लोकान् । द्विषः शतुर्वा ॥ * ॥ मुरस्य मुरं

वा द्विषन्॥ सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः। शेषे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्। नरकस्य जिष्णुः॥

**अकेनोर्भविष्यदाधमर्ण्ययोः। २। ३। ७०॥**

भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात्॥ सतः पालकोऽवतरति। व्रजं गामी। शतं दायी॥

**कृत्यानां कर्तरि वा। २। ३। ७१॥**

षष्ठी वा॥ मया मम वा सेव्यो हरिः। कर्तरीति किम्। गेयो माणवकः साम्नाम्। भव्यगेयेति कर्तरि यद्विधानादनभिहितं कर्म। अत्र योगो विभज्यते। कृत्यानाम्। उभयप्राप्ताविति नेति चानुवर्तते। नेतव्या व्रजं गावः कृष्णेन। ततः कर्तरि वा। उक्तोऽर्थः॥

**तुल्यार्थैरतुलोपमाभ्यां तृतीया ऽन्यतरस्याम्। २। ३। ७२॥**

तुल्यार्थैर्योगे तृतीया वा स्यात् पक्षे षष्ठी॥ तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा। अतुलोपमाभ्यां किम्। तुला उपमा वा कृष्णस्य नास्ति॥

**चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः। २। ३। ७३॥**

एतदर्थैर्योगे चतुर्थी वा स्यात् पक्षे षष्ठी॥ आयुष्यं चिरञ्जीवितं वा कृष्णाय कृष्णस्य वा भूयात्। एवं मद्रं भद्रं कुशलं निरामयं सुखं शं अर्थः प्रयोजनं हितं पथ्यं भूयात्॥ आशिषि किम्। देवदत्तस्यायुष्यमस्ति। व्याख्यानात् सर्वत्रार्थग्रहणम्। मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः॥

इति व्याकरणदीपिकायां वृत्तौ द्वितीयस्याध्यायस्य तृतीयः पादः॥

# अथ द्वितीयाध्यायस्य चतुर्थः पादः ।



## द्विगुरेकवचनम् । २ । ४ । १ ॥

द्विग्वर्थः समाहार एकवत्स्यात् ॥ पञ्चगवम् ।

## द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् । २ । ४ । २ ॥

एषां द्वन्द्व एकवत्स्यात् ॥ पाणिपादम् । मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् । समाहारस्यैकत्वादेकत्वे सिद्धे नियमार्थं प्रकरणम् । प्राण्यङ्गादीनां समाहार एव यथा स्यात् ॥

## अनुवादे चरणानाम् । २ । ४ । ३ ॥

चरणानां द्वन्द्व एकवत् सिद्धस्योपन्यासे ॥ स्थेणोर्लुङीति वक्तव्यम् ॥ * ॥ उदगात्कठकालापम् । प्रत्यष्ठात्कठकौथुमम् ॥

## अध्वर्युक्रतुरनपुंसकम् । २ । ४ । ४ ॥

यजुर्वेदे विहितो यः क्रतुस्तद्वाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवत्स्यात् ॥ अर्काश्वमेधम् । अध्वर्युक्रतुः किम् । इषुवज्रौ सामवेदे विहितौ । अनपुंसकं किम् । राजसूयवाजपेये अर्द्धर्चादी ॥

## अध्ययनतोऽविप्रकृष्टाख्यानाम् । २ । ४ । ५ ॥

अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत् ॥ पदकक्रमकम् ।

## जातिरप्राणिनाम् । २ । ४ । ६ ॥

प्राणिवर्जजातिवाचिनां द्वन्द्व एकवत् ॥ धानाशष्कुलि । प्राणिनान्तु विट्शूद्राः । द्रव्यजातीयानामेव । नेह । रूपरसौ । गम-

नाकुक्कुने । जातिप्राधान्ये एवायमेकवद्भावः । द्रव्यविशेषविवक्षायान्तु बदरामलकानि ॥

**विशिष्टलिङ्गो नदी देशो ऽग्रामाः । २ । ४ । ७ ॥**

ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां समाहारे द्वन्द्वः स्यात् ॥ उध्यश्च इरावती च उध्येरावती । गङ्गा च शोणश्च गङ्गाशोणम् । कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् । भिन्नलिङ्गानां किम् । गङ्गायमुने । मद्रकेकयाः । अग्रामाः किम् । जाम्बवं नगरम् । शालूकिनी ग्रामः । जाम्बवशालूकिन्यौ ॥

**क्षुद्रजन्तवः । २ । ४ । ८ ॥**

एषां समाहारे द्वन्द्वः स्यात् ॥ यूकालिक्षम् । आ नकुलात् क्षुद्रजन्तवः ॥

**येषाञ्च विरोधः शाश्वतिकः । २ । ४ । ९ ॥**

एषां प्राग्वत् । अहिनकुलम् । गोव्याघ्रम् काकोलूकमित्यादौ परत्वाद्विभाषा वृक्षमृगेति प्राप्तं चकारेण बाध्यते ॥

**शूद्राणामनिरवसितानाम् । २ । ४ । १० ॥**

अबहिष्कृतानां शूद्राणां प्राग्वत् ॥ तक्षायस्कारम् । पात्राद्बहिष्कृतानां तु चण्डालमृतपाः ॥

**गवाश्वप्रभृतीनि च । २ । ४ । ११ ॥**

यथोच्चारितानि साधूनि ॥ गवाश्वं दासीदासमित्यादि ॥

**विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् । २ । ४ । १२ ॥**

वृक्षादीनां सप्तानां द्वन्द्वः अश्ववडवेत्यादिकं द्वन्द्वचयञ्च प्राग्वत् ॥ वृक्षादौ विशेषाणामेव ग्रहणम् । प्लक्षन्यग्रोधम् । प्लक्षन्यग्रोधाः । रुरुपृषतम् । रुरुपृषताः । कुशकाशम् । कुशकाशाः । व्रीहियवम् । व्रीहियवाः । दधिघृतम् । दधिघृते । गोमहिषम् । गोमहिषाः । शुकबकम् । शुकबकाः । अश्ववडवम् । अश्ववडवौ । पूर्वापरम् । पूर्वापरे । अधरोत्तरम् । अधरोत्तरे । फलसेनाङ्गवनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम् ॥ * ॥ बदराणि चामलकानि च बदरामलकम् । जातिरप्राणिनामित्येकवद्भावः । नेह । बदरामलके । रथिकाश्वारोहौ । प्लक्षन्यग्रोधौ इत्यादि । विभाषा वृक्षेति सूत्रे ये ऽप्राणिनस्तेषां ग्रहणं जातिरप्राणिनामिति नित्ये प्राप्ते विकल्पार्थम् । पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वान्नित्ये प्राप्ते । मृगाणां मृगैरेव शकुनीनां शकुनिभिरेवोभयत्र द्वन्द्वः । अन्यैस्तु सहेतरेतरयोग एवेति नियमार्थं मृगशकुनिग्रहणम् । एवं पूर्वापराधरोत्तरमपि । अश्ववडवग्रहणं तु पक्षे नपुंसकत्वार्थम् । अन्यथा परत्वात्पूर्ववदश्ववडवाविति स्यात् ॥

**विप्रतिषिद्धं चानधिकरणवाचि । २ । ४ । १३ ॥**

विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवत्स्यात् ॥ वैकल्पिकः समाहारे द्वन्द्वश्चार्थे इति सूत्रेण प्राप्तः स विरुद्धार्थानां यदि भवति तर्हि अद्रव्यवाचिनामेवेति नियमार्थमिदम् । तेन द्रव्यवाचिनामितरेतरयोग एव । शीतोष्णे उदके स्तः । विप्रतिषिद्धं किम् । नन्दकपाञ्चजन्यम् । इह पाक्षिकः समाहारद्वन्द्वो भवत्येव ॥

**न दधिपयआदीनि । २ । ४ । १४ ॥**

एतानि नैकवत्स्युः । दधिपयसी । इध्माबर्हिषी । निपातनाद्दीर्घः । ऋक्सामे । वाङ्मनसे ॥

**अधिकरणैतावत्वे च । २ । ४ । १५ ॥**

द्रव्यस्य संख्यावगमे एकवदेवेति नियमो न स्यात् ॥ दश दन्तोष्ठाः ॥

**विभाषा समीपे । २ । ४ । १६ ॥**

अधिकरणैतावत्वस्य सामीप्येन परिच्छेदे समाहार एवेत्येवंरूपो नियमो वा स्यात् ॥ उपदशं दन्तोष्ठम् । उपदशा दन्तोष्ठाः ॥

**स नपुंसकम् । २ । ४ । १७ ॥**

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् ॥ परवल्लिङ्गापवादः । पञ्चगवम् । दन्तोष्ठम् ॥ अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः ॥ * ॥ पञ्चमूली ॥ आबन्तो वा ॥ * ॥ पञ्चखट्वी । पञ्चखट्वम् ॥ अनो नलोपश्च वा च द्विगुः स्त्रियाम् ॥ * ॥ पञ्चतक्षम् । पञ्चतक्षी । पात्राद्यन्तस्य न ॥ * ॥ पञ्चपात्रम् । त्रिभुवनम् । चतुर्युगम् । पुण्यसुदिनाभ्यामन्हः क्लीबतेष्टा ॥ * ॥ पुण्याहम् । सुदिनाहम् । सुदिनशब्दः प्रशस्तवाची । पथः सङ्ख्याव्ययादेः ॥ * ॥ सङ्ख्याव्ययरूपादेः परः कृतसमासान्तः पथशब्दः क्लीबमित्यर्थः ॥ त्रयाणां पन्थास्त्रिपथम् । विरूपः पन्था विपथम् । कृतसमासान्तग्रहणान्नेह । सुपन्थाः । सामान्ये नपुंसकम् ॥ * ॥ मृदु पचति । प्रातः कमनीयम् ॥

**अव्ययीभावश्च । २ । ४ । १८ ॥**

अयं नपुंसकं स्यात् ॥ अधिगोपम् ।

**तत्पुरुषोऽनञ्कर्मधारयः । २ । ४ । १९ ॥**

अधिकारोऽयम् ॥

**संज्ञायां कन्थोशीनरेषु । २ । ४ । २० ॥**

कन्थान्तस्तत्पुरुषः क्लीबं स्यात्सा चेदुशीनरदेशोत्पन्नाया: कन्थायाः संज्ञा ॥ सुशमस्यापत्यानि सौशमयस्तेषां कन्था सौशमिकन्थम् । संज्ञायां किम् । वीरणकन्था । उशीनरेषु किम् । दाक्षिकन्था ॥

**उपज्ञोपक्रमं तदाद्याचिख्यासायाम् । २ । ४ । २१ ॥**

उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात् तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यं चेदाख्यातुमिष्यते ॥ पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः । नन्दोपक्रमं द्रोणः ॥

**छाया बाहुल्ये । २ । ४ । २२ ॥**

छायान्तस्तत्पुरुषो नपुंसकं स्यात् पूर्वपदार्थबाहुल्ये ॥ इक्षूणां छाया इक्षुच्छायम् । विभाषासेनेति विकल्पस्यापवादः । इक्षुच्छायानिषादिन्य इति तु आ समन्तान्निषादिन्य इत्याङ्प्रश्लेषो बोध्यः ॥

**सभा राजाऽमनुष्यपूर्वा । २ । ४ । २३ ॥**

राजपर्यायपूर्वो ऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात् ॥ इनसभम् । ईश्वरसभम् । पर्यायस्यैवेष्यते ॥ * ॥ नेह । राजसभा । चन्द्रगुप्तसभा । अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह । रक्षःसभम् । पिशाचसभम् ।

**अशाला च । २ । ४ । २४ ॥**

संघातार्थी या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात् ॥ स्त्रीसभम् । स्त्रीसंघात इत्यर्थः । अशाला किम् । धर्मसभा । धर्मशालेत्यर्थः ॥

**विभाषा सेनासुराच्छायाशालानिशानाम्। २।४।२५॥**

एतदन्तस्तत्पुरुषः क्लीबं वा स्यात्। ब्राह्मणसेनम्। ब्राह्मणसेना। यवसुरम्। यवसुरा। कुड्यच्छायम्। कुड्यच्छाया। गोशालम्। गोशाला। श्वनिशम्। श्वनिशा। तत्पुरुषोऽनञ्कर्मधारय इत्युक्तेनेह। दृढसेनो राजा। असेना। परमसेना॥

**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः। २।४।२६॥**

एतयोः परपदस्येव लिङ्गं स्यात्॥ कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। अर्द्धपिप्पली॥ द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः॥ * ॥ पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नजीविकः। अलं कुमार्यै अलङ्कुमारिः। अत एव ज्ञापकात्समासः। निष्कौशाम्बिः॥

**पूर्ववदश्ववडवौ। २।४।२७॥**

द्विवचनमतन्त्रम्। अश्ववडवौ। अश्ववडवान्। अश्ववडवैः॥

**हेमन्तशिशिरावहोरात्रे च च्छन्दसि। २।४।२८॥**

पूर्ववत्॥ हेमन्तश्च शिशिरश्च हेमन्तशिशिरौ। अहोरात्रे।

**रात्राह्नाहाः पुंसि। २।४।२९॥**

एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव॥ अनन्तरत्वात्परवल्लिङ्गतापवादोऽप्ययं परत्वात्समाहारनपुंसकतां बाधते। अहोरात्रः। रात्रेः पूर्वो भागः पूर्वरात्रः। पूर्वाह्णः। द्व्यहः॥ सङ्ख्यापूर्वं रात्रं क्लीबम्॥ * ॥ द्विरात्रम्। त्रिरात्रम्। गणरात्रम्॥ अनुवाकादयः पुंसीति वक्तव्यम्॥ * ॥ अनुवाकः। शंयुवाकः। सूक्तवाकः॥

**अपथं नपुंसकम्। २।४।३०॥**

तत्पुरुष इत्येव ॥ अन्यत्र तु अपथो देशः । कृतसमासान्तनिर्देशान्नेह । अपन्थाः ॥

## अर्द्धर्चाः पुंसि च । २ । ४ । ३१ ॥

अर्द्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः ॥ अर्द्धर्चः । अर्द्धर्चम् । ध्वजः । ध्वजम् । एवं तीर्थशरीरमण्डपदेहअङ्कुशशकलइत्यादि ॥

## इदमो ऽन्वादेशे ऽशनुदात्तस्तृतीयादौ । २ । ४ । ३२ ॥

अन्वादेशविषयस्य इदमोऽनुदात्तोऽशादेशः स्यात्तृतीयादौ ॥ किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । आभ्यां छात्राभ्यां रात्रिरधीता । अथो आभ्यामहरप्यधीतम् । अनुवचनं साकच्कार्थम् ॥

## एतदस्त्रतसोस्त्रतसौ चानुदात्तौ । २ । ४ । ३३ ॥

अन्वादेशविषये एतदोऽश् स्यात्स चानुदात्तस्त्रतसोः परतस्तौ चानुदात्तौ स्तः ॥ एतस्मिन्ग्रामे सुखं वसामः । अथो ऽत्राधीमहे । अतो न गन्तास्मः । सर्वानुदात्तं भवति । एतदोऽपि त्यशादेशे लब्धे पुनर्वचनमनुदात्तार्थमिति काशिका ॥

## द्वितीयाटौस्स्वेनः । २ । ४ । ३४ ॥

द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशोऽनुदात्तः स्यादन्वादेशे । इदमो मण्डूकप्लुत्या ऽनुवृत्तिः । अनेन व्याकरणमधीतमेनं छन्दोऽध्यापय । अनेन रात्रिरधीता अथो एनेनाहरप्यधीतम् । अनयोः पवित्रं कुलमेनयोः प्रभूतम् स्वम् । एतं छात्रं छन्दोऽध्यापय अथो एनं व्याकरणमध्यापयेत्यादि ॥ नपुंसकेक-

कवचने एनद्वक्तव्यः ॥ * ॥ प्रक्षालयेदम् । परिवर्तयेनत् । प्रक्षालयेतत् । परिवर्तयेनत् ॥

## आर्द्धधातुके । २ । ४ । ३५ ॥

अधिकारोऽयम् । आ ष्यद्वच्चियार्षजित इति ।

## अदो जग्धिर्ल्यप् ति किति । २ । ४ । ३६ ॥

ल्यबिति लुप्तसप्तमीकम् । अदो जग्धिः स्याल्ल्यपि तादौ किति च ॥ इकार उच्चारणार्थो नानुबन्धस्तेन नुम्नेति काशिका । प्रजग्ध्य । विजग्ध्य । धत्वम् । झरो झरि सवर्णे । जग्धः । जग्धवान् । जग्ध्वा । जग्धौ सिद्धेऽन्तरङ्गत्वात्तिकितीति ल्यबुच्यते तज्ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् । तदाहुः । अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यप् बाधत इति । तेन हित्वदत्वआत्वेत्वदीर्घत्वशूठ्इटो ल्यपि न । विधाय । प्रदाय । प्रखन्य । प्रस्थाय । प्रक्रम्य । आपृच्छ्य । प्रदीव्य । तीति किम् । अद्यते । कितीति किम् । अत्तव्यम् । अन्नमित्यत्र अन्नाण्ण इति निपातनान्न भवतीति काशिका ॥

## लुङ्सनोर्घस्लृ । २ । ४ । ३७ ॥

अदो घस्लृ स्याल्लुङि सनि च ॥ लृदित्करणमङर्थम् । अघसत् । जिघत्सति । घस्लृभावे अच्युपसंख्यानम् ॥ * ॥ प्रात्तीति प्रघसः ॥

## घञपोश्च । २ । ४ । ३८ ॥

अदो घस्लृ स्यात् घञि अपि च ॥ घासः । प्रघसः ॥

## बहुलं छन्दसि । २ । ४ । ३९ ॥

अदो घस्लादेशः स्यात् ॥ घस्तां नूनम् । लुङि मन्त्रे घसेति च्लेर्लुक् । अडभावः । सग्धिश्च मे ॥

## लिट्यन्यतरस्याम् । २ । ४ । ४० ॥

अदो घस्लृ वा स्याल्लिटि ॥ जघास । जक्षतुः । आद । आदतुः । एतत्सामर्थ्यादेव घस्लृ अदने इत्यस्य तु यत्र लिङ्गं वचनं वा ऽस्ति तत्रैव प्रयोगः । धातुपाठे पाठः शपि परस्मैपदे लिङ्गम् । लृदित्करणमङि । अनिट्कारिकासु पाठो वलाद्यार्धधातुके । क्वरचि विशिष्योपादानम् ।

## वेञो वयिः । २ । ४ । ४१ ॥

वा स्याल्लिटि ॥ इकार उच्चारणार्थः । उवाय । ऊयतुः । ऊवतुः । स्थानिवद्भावेन ञित्वात्तङ् । ऊये । ऊवे । वयादेशाभावे । ववौ । ववतुः ॥

## हनो वध लिङि । २ । ४ । ४२ ॥

हन्तेर्वधः स्याल्लिङि ॥ वधादेशोऽदन्तः । आर्द्धधातुक इति विषयसप्तमी । तेनार्द्धधातुकोपदेशे अकारान्तत्वादतो लोपः । तस्य स्थानिवद्भावादवधीदित्यादौ हलन्तलक्षणा अतो हलादेरिति च वृद्धिर्न भवतीति काशिका । वध्यात् । वध्यास्ताम् । आर्द्धधातुके किम् । विध्यादौ हन्यात् ॥

## लुङि च । २ । ४ । ४३ ॥

हन्तेर्वधः स्यात् ॥ अवधीत् । अवधिष्टाम् । योगविभाग उत्तरार्थः ॥

## आत्मनेपदेष्वन्यतरस्याम् । २ । ४ । ४४ ॥

हनो वा वधादेशो लुङि ॥ आवधिष्ट । आवधिषाताम् । आहत । आहसाताम् । हन्तेर्यङ्लुकि द्वित्वे द्विरुच्चारितस्य समुदितस्य प्रकृतिग्रहणेन ग्रहणादाशीर्लिङादौ वधादेशः । वध्यात् । अवधीत् । अवधिष्टामित्यादि । वधादेशस्य द्वित्वं न भवति स्थानिवत्त्वेनानभ्यासस्येति निषेधात् । तद्धि समानाधिकरणं धातोर्विशेषणं बहुव्रीहिबलात् । आङ्पूर्वात्तु आङो यमहन इत्यात्मनेपदम् । आवधिषाताम् । आजङ्घनिष्ट । आजङ्घनिषातामित्यादि ॥

## इणो गा लुङि । २ । ४ । ४५ ॥

इणो गादेशः स्याल्लुङि ॥ अगात् । अगाताम् । लुङीत्यनुवर्त्तमाने पुनर्लुङ्ग्रहणं आत्मनेपदेषु अन्यतरस्यामित्येवं तदभूत् इह तु अविशेषेण नित्यं भवति । अगात् । अगायि भवतेति काशिका ॥ इणवदिक इति वक्तव्यम् ॥ * ॥ अध्यगात् । अध्यगाताम् । अधियन्ति । केचित्तु आर्द्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः । तन्मते यदान । तथा च भट्टिः । समीतयो राघवयोरधीयन्निति ॥

## णौ गमिरबोधने । २ । ४ । ४६ ॥

इणो गमिः स्याण्णौ । इकार उच्चारणार्थः । गमयति । बोधने तु प्रत्याययति । इणवदिकः ॥ * ॥ अधिगमयति ॥

## सनि च । २ । ४ । ४७ ॥

इणो गमिः स्यान्न तु बोधने ॥ जिगमिषति । बोधने तु अर्थान्प्रतीषिषति ॥ इणवदिकः ॥ * ॥ अधिजिगमिषति । योगविभाग उत्तरार्थः ॥

**इङश्च । २ । ४ । ४८ ॥**

इङो गमिः स्यात्सनि । अधिजिगांसते ॥

**गाङ् लिटि । २ । ४ । ४९ ॥**

इङो गाङ् स्याल्लिटि लावस्थायां विवक्षते वा । अधिजगे । अधिजगाते । गाङ्यनुबंधग्रहणं विशेषणार्थम् । गाङ्कुटादिभ्य इत्यत्रास्यैव ग्रहणं यथा स्यात् इह माभूत् । अगासातां ग्रामौ देवदत्तेन ॥ अन्यथा घुमास्थेतीत्वप्रसङ्गः ॥

**विभाषा लुङ्लृङोः । २ । ४ । ५० ॥**

इङो गाङ् वा स्यात् । अध्यगीष्ट । अध्यगीष्यत । आदेशपक्षे गाङ्कुटेति ङित्वे घुमास्थेतीत्वम् । अध्यैष्ट । अध्यैष्यत ॥

**णौ च संश्चङोः । २ । ४ । ५१ ॥**

सन्परे चङ्परे च णौ इङो गाङ् वा स्यात् ॥ अधिजिगापयिषति । अध्यापिपयिषति । अध्यजीगपत् । अध्यापिपत् । णौ किम् । अधिजिगांसते । संश्चङोः किम् । अध्यापयति ॥

**अस्तेर्भूः । २ । ४ । ५२ ॥**

भविता । भवितव्यम् । एधामासेत्यादौ तु कृञ्चानुप्रयुज्यत इत्यनुप्रयोगसामर्थ्यान्न भवति ॥

**ब्रुवो वचिः । २ । ४ । ५३ ॥**

वक्ता । वक्तव्यम् ।

**चक्षिङः ख्याञ् । २ । ४ । ५४ ॥**

ख्शादिरयमादेशः ॥ असिद्धकाण्डे खत्वानन्तरं शस्य विभाषा यत्वं वक्तव्यम् ॥ * ॥ञकारानुबन्ध उभयपदार्थः । ख्याता ।

क्शाता । ख्यास्यति । ख्यास्यते । क्शास्यति । क्शास्यते । चर्त्वम् । चयो द्वितीया इति तु न । तस्यासिद्धत्वात् । असिद्धकाण्डे किम् । सोऽप्रख्यीयः । योपधलक्षणो वुञ् माभूत् । अख्यातः । निष्ठानत्वं माभूत् । न ख्याञ्येति तु प्रतिषेधः ख्या प्रकथन इत्यस्यैव । प्रतिपदोक्तत्वात् । अस्य तु न । शस्य यत्वेन लाक्षणिकत्वादिति कैयटः । पुंख्यानम् । रुर्विधिर्माभूत् । पर्याख्यानम् । णत्वं माभूत् । ख्या प्रकथन इत्यस्मादपि परस्य लुब्योगाऽख्यानादिति निपातनाण्णत्वाभाव इति स एव । नमः ख्याने । सस्थानत्वं माभूत् । सस्थानो जिह्वामूलीयः । एतदेव वार्तिकं भाष्यं च ख्या प्रकथने इत्यस्य सार्वधातुकमात्रविषयत्वे लिङ्गम् । सम्पूर्वस्य ख्यातेः प्रयोगो नेति न्यासकारः । वर्जने प्रतिषेधो वक्तव्यः ॥ * ॥ दुर्जनाः परिसंचक्ष्याः । वर्जनीया इत्यर्थः । असनयोश्च प्रतिषेधो वक्तव्यः ॥ * ॥ नृचक्षा रक्षाः । नृहिंसकमित्यर्थः । दीर्घश्छान्दसः । भाषायां तु नृचक्षो रक्षः । मिथुनेऽसिरित्यधिकारे चक्षेर्बहुलमित्यौणादिक असिः । तत्र शिद्वचैतदनालोच्य असग्रहणम् । विचक्षणः । बहुलं तणीति वक्तव्यम् ॥ * ॥ अन्नवधकगात्रविचक्षणाजिराद्यर्थम् । तणीति संज्ञाछन्दसोर्ग्रहणम् । सर्वप्रकरणापेक्षमेतत् । जग्ध्यभावः । घत्रुलि वधादेशः । इण औणादिके ष्ट्रनि गादेशः । ख्याञभावः । वीभावाभावश्च । विचक्षणग्रहणं पूर्ववचनद्वयस्यैतत्प्रपंचत्वबोधनाय । अजिरग्रहणं तु अजिरशिशिरेत्यौणादिकनिपातनमनपेक्ष्य कृतम् ॥

## वा लिटि । २ । ४ । ५५ ॥

चक्षिङः ख्याञादेशो वा स्याल्लिटि ॥ चख्यौ । चख्ये । प्राप्त: । तुचक्शे । चचक्षे ॥

## अजेर्व्यघञपोः । २ । ४ । ५६ ॥

अजेर्वी इत्ययमादेशः स्यादार्द्धधातुकविषये घञमपञ्च वर्जयित्वा ॥ विवाय । विव्यतुः । अत्र वकारस्य हलन्तरत्वादुपधायामिति दीर्घे प्राप्ते ऽचः परस्मिन्निति स्थानिवद्भावेनाचपरत्वम् । न च न पदान्तेति निषेधः । स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदित्युक्तेः । अघञपोरिति किम् । समाजः । उदाजः समजः । उदजः । दीर्घोच्चारणं किम् । प्रजीतः । आर्द्धधातुकविषये किम् । वेवीयते । अस्य यङ्लुङ् नास्ति । लुकापहारे विषयत्वासंभवेन वीभावस्याप्रवृत्तेः ॥ घञपोः प्रतिषेधे क्यप उपसंख्यानम् ॥ * ॥ समज्या ॥ वलादावार्धधातुके वेष्यते ॥ * ॥ प्रवेता । प्राजिता ॥

## वा यौ । २ । ४ । ५७ ॥

अजेर्वी वा स्यात् यौ ॥ प्रवयणम् । प्राजनम् ।

## ण्यक्षत्रियार्षञितो यूनि लुगणिञोः । २ । ४ । ५८ ॥

ण्यप्रत्ययान्तात्क्षत्रियगोत्रप्रत्ययान्तादार्षप्रत्ययान्तात् ञितश्च परयोर्युवाभिधायिनोरणिञोर्लुक् स्यात् ॥ कौरव्यः पिता । कौरव्यः पुत्रः । कुर्वादिण्यन्तात् युवार्थकस्येञो लुक् । श्वाफल्कः पिता । श्वाफल्कः पुत्रः । ऋष्यंधकेत्यणन्तात् युवार्थकस्येञो लुक् । वासिष्ठः पिता । वासिष्ठः पुत्रः । ऋष्यणन्तात् युवार्थकस्येञो लुक् । वैदः पिता । वैदः पुत्रः । विदाद्यञन्तात् युवार्थकस्येञो लुक् । तैकायनिः पिता । तैकायनिः पुत्रः । तिकादिफिञन्तात् युवार्थकस्याणो लुक् । एभ्यः किम् । कौहडः पिता । कौहडिः पुत्रः । शिवाद्यणन्तात् यूनि इञ् । यूनि किम् । विरथ्यस्य छात्रः वामरथः । कुर्वादिण्यन्ताद्वामरथस्य कण्वप्रख्याता ।

एवर्जमित्युक्तेः कण्वादिभ्यो गोत्रे इति शैषिकोऽण् । अणिञोः किम् । दाक्षेरपत्यं युवा दाक्षायणः । पणनं पणः । घञर्थे कविधानमिति कः । सोऽस्यास्तीति पणी । तस्य गोत्रापत्यं पाणिनः । गाथिविदथी- गीति प्रकृतिभावाट्टिलोपो न । ततो यूनि इञ् । पाणिनिः । अत्र न लुक् । आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात् । अत्र ह्यौत्सर्गिक एवाण् । यश्च ह्यौत्सर्गिकस्येञा बाधः प्राप्तस्तस्यैव तद्बाधनार्थे ऋष्यण्प्रवृत्तेः । यद्वा पाणिनशब्दो यौगिको न तु रूढः । लुग्विधौ तु रूढस्यैव ग्रहणम् । एतच्च दाक्षीपुत्रस्य पाणिनेर्भगवतः पाणिनेः सिद्धमिति भाष्यवार्तिकप्रयोगादुन्नीतमिति बोध्यम् ॥ अब्रा- ह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम् ॥ * ॥ भाण्डिजङ्घिः पिता । भाण्डिजङ्घिः पुत्रः । इञन्तात्फको लुक् ॥

### पैलादिभ्यश्च । २ । ४ । ५९ ॥

एभ्यो युवप्रत्ययस्य लुक् स्यात् ॥ पीलाया वेत्यण् । तस्मादणो द्व्यचः इति फिञ् तस्य लुक् । पैलः पिता पुत्रश्च ॥ तद्राजाच्चाणः ॥ * ॥ द्व्यञ्मगधेत्यणन्तादाङ्गशब्दादणो द्व्यचः इति फिञो लुक् । आङ्गः पिता पुत्रश्च ॥

### इञः प्राचाम् । २ । ४ । ६० ॥

गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुक् स्यात्तच्चेद्गोत्रं प्राचां भवति ॥ पन्नागारस्यापत्यं अत इञ् यञिञोश्चेति फक् । पान्नागारिः पिता पुत्रश्च । प्राचां किम् । दाक्षिः पिता । दाक्षायणः पुत्रः ।

### न तौल्वलिभ्यः । २ । ४ । ६१ ॥

तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुक् न स्यात् ॥ पूर्वेण प्राप्तः । तुल्वलस्तत इञि फक् । तौल्वलिः पिता । तौल्वलायनः पुत्रः ॥

### तद्राजस्य बहुषु तेनैवास्त्रियाम् । २ । ४ । ६२ ॥

ते तद्राजाः ञ्यादयस्तद्राजा इति च वक्ष्यति । बहुष्वर्थेषु तद्राजसंज्ञकस्य लुक् स्यात्तदर्थकृते बहुत्वे न तु स्त्रियाम् ॥ अङ्गाः । वङ्गाः । लोहितध्वजा इत्यादि । कथं तर्हि कौरव्याः पशवः, तस्यामेव रघोः पांड्याः, इति च । कौरव्ये पांड्ये च साधवः तमाचक्षाणा इति वा समाधेयम् । रघूणामन्वयं वक्ष्ये, निरुद्ध्यमाना यदुभिः कथञ्चिदिति तु रघुयदुशब्दयोस्तदपत्ये लक्षणयेत्याहुः । तद्राजस्य किम् । औपगवाः । बहुषु किम् । आङ्गः । लोहितध्वज्यः । तेनैव किम् । प्रियो वाङ्गो येषां ते प्रियवाङ्गाः । अस्त्रियां किम् । आङ्ग्यः स्त्रियः ॥

### यस्कादिभ्यो गोत्रे । २ । ४ । ६३ ॥

एभ्यो विहितस्यापत्यप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे न तु स्त्रियाम् ॥ अपत्याधिकारादन्यत्र लौकिकं गोत्रम् । यस्काः । शिवाद्यणो लुक् । बहुषु किम् । यास्कः । तेनैव किम् । प्रिययास्काः । अस्त्रियां किम् । यास्क्यः स्त्रियः । गोत्रे किम् । यास्काश्छात्राः । शैषिकोऽण् । विहितविशेषणान्नेह । यास्कायनयः । शिवाद्यणन्ताद्यून्यणो इञ्च इति फिञ् ॥

### यञञोश्च । २ । ४ । ६४ ॥

गोत्रे यद्यञन्तमञन्तञ्च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम् । गर्गाः । वत्साः । गर्गादियञो लुक् । विदाः । उर्वाः । विदाद्यञो लुक् । बहुषु किम् । गार्ग्यः । वैदः । तेनैव किम् । प्रियगार्ग्याः । प्रियवैदाः । अस्त्रियां किम् । गार्ग्यः

स्त्रियः। गोत्रे किम्। द्वैप्याः। औत्साश्छात्राः। लौकिकगोत्रत्वाभावात्प्रौत्रा दौहित्रा इत्यत्र न लुक्। तद्धि प्रवराध्यायप्रसिद्धम्॥ यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम्॥ * ॥ गार्ग्यस्य गार्ग्ययोर्वा कुलं गर्गकुलं गार्ग्यकुलं वा। वैदस्य वैदयोर्वा कुलं विदकुलं वैदकुलं वा। यञादीनां किम्। आङ्गकुलम्। इतः प्रभृति ये प्रत्यया बहुषु लुग्भाजस्ते यञादयः। आदिशब्दस्य व्यवस्थावाचित्वात्। एकद्वयोः किम्। गर्गाणां कुलं गर्गकुलमित्येव। तत्पुरुषे किम्। गार्ग्यस्य समीपं उपगार्ग्यम्। षष्ठ्याः किम्। परमगार्ग्यः॥

**अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च। २। ४। ६५॥**

एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् बहुषु तेनैवास्त्रियाम्॥ अत्रयः। इतश्चानिञ इति ढको लुक्। भृगवः। कुत्साः। वसिष्ठाः। गोतमाः। अङ्गिरसः। ऋष्यणो लुक्॥

**बह्वच इञः प्राच्यभरतेषु। २। ४। ६६॥**

बह्वचः परो य इञ् प्राच्यगोत्रे भरतगोत्रे च वर्तमानस्तस्य लुक् स्यात् बहुषु॥ पन्नागाराः। युधिष्ठिराः। अतइञ्बाह्वादीञो लुक्। बह्वचः किम्। वैकयः। पौष्पयः। इञः किम्। नाकुलाः। ऋष्यादण्। प्रेत्यादि किम्। वालकयः। बाह्वादीञ्। भरताः प्राच्या एव। तेषां पुनर्ग्रहणं ज्ञापनार्थं अन्यत्र प्राग्ग्रहणे भरतानामग्रहणमिति। तेन इञः प्राचामिति भरतानां युवप्रत्ययस्य लुक् न। आर्जुनिः पिता। आर्जुनायनः पुत्रः। बाह्वादीञः फक्॥

**न गोपवनादिभ्यः। २। ४। ६७॥**

गोत्रप्रत्ययस्य लुक् न स्यात्॥ बिदाद्यन्तर्गणोऽयम्। यञञोश्चेति प्राप्तः प्रतिषिध्यते। गौपवनाः। शैशुबिन्दवाः॥

## तिककितवादिभ्यो द्वन्द्वे । २ । ४ । ६८ ॥

एभ्यो गोत्रप्रत्ययस्य बहुषु लुक् स्यात् द्वन्द्वे ॥ तैकायनयश्च कैतवायनयश्च तिकादिभ्यः फिञ् तस्य लुक् । तिककितवाः ॥

## उपकादिभ्यो ऽन्यतरस्यामद्वन्द्वे । २ । ४ । ६९ ॥

एभ्यो गोत्रप्रत्ययस्य बहुषु लुग्वा स्यात् द्वन्द्वे चाद्वन्द्वे च । अद्वन्द्वग्रहणं द्वन्द्वनिवृत्त्यर्थम् । उपकाः । लमकाः । नडादित्वात्फको लुक् । औपकायनाः । लामकायनाः । द्वन्द्वे तु तिककितवादिषु पाठान्नित्यम् । भ्राष्टककापिष्ठलाः । भ्राष्टकिकापिष्ठलयः । भ्राष्टकाः । कपिष्ठलाः । भ्राष्टकयः । कापिष्ठलयः ॥

## आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् । २ । ४ । ७० ॥

एतयोरवयवस्य गोत्रप्रत्ययस्याणो यञश्च बहुषु लुक् स्यादवशिष्टप्रकृतिभागस्य यथासंख्यमगस्ति कुण्डिनच् एतावादेशौ स्तः ॥ चित्वं स्वरार्थम् । अगस्तयः । कुण्डिनाः । अगस्त्यशब्दादृष्यण् । अगस्तिप्रकृतिकगर्गादियञन्ते तु यञञोश्चेत्येव सिद्धम् । लुग्विधानेनागस्तीनां छात्रा इत्यर्थविवक्षायां गोत्रे लुगचीति लुकि प्रतिषिद्धे तत्सन्नियोगशिष्टादेशनिवृत्तौ वृद्धत्वाच्छे आगस्तीया इत्यादिवृद्धिसिद्धिः । कौण्डिन्यस्य त्वणैव भवितव्यम् । कण्वादिभ्यो गोत्रे इति तत्र विशेषो नास्तीति कौण्डिनाश्छात्राः ॥

## सुपो धातुप्रातिपदिकयोः । २ । ४ । ७१ ॥

एतयोरवयवस्य सुपो लुक् स्यात् ॥ पुत्रीयति । राजपुरुषः । सुपः किम् । पुत्रीयतीत्यत्र क्यचोऽपि माभूत् । धातुप्रातिपादिकयोः किम् । वृक्षः ॥

## अदिप्रभृतिभ्यः शपः। २। ४। ७२॥

लुक् स्यात्॥ अत्ति॥

## बहुलं छन्दसि। २। ४। ७३॥

शपो लुक्। वृत्रं हनति वृत्रहा। अहिः शयते। प्राप्तोऽपि न भवति। त्राध्वन्नो देवाः। अप्राप्तोऽपि भवति।

## यङोऽचि च। २। ४। ७४॥

यङोऽच्प्रत्यये लुक् स्याच्चकारात्तं विनाऽपि बहुलं लुक्। लोलुवः। पोपुवः। लोलवीति। योयवीति। अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति। ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वमभ्यासकार्यम्। धातुत्वाल्लडादयः। शेषात्कर्तरीति परस्मैपदम्। अनुदात्तङित इति तु न। ङित्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः। यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत्। अत एव सुदृषत्प्रासाद इत्यत्रात्वसन्तस्येति दीर्घो न। येऽपि स्पर्द्धशीङादयोऽनुदात्तङितस्तेभ्योऽपि न। अनुबन्धनिर्देशात्। तत्र तु श्तिपाशपेति नषेधात्। अत एव श्यन्नादयोऽपि न। गणेन निर्देशात्। किन्तु शबेव। चर्करीतञ्चेत्यदादौ पाठाच्छपो लुक्॥

## जुहोत्यादिभ्यः श्लुः। २। ४। ७५॥

शबनुवर्तते। शपः श्लुः स्यात्॥ लुकि प्रकृतेऽपि श्लाविति द्विर्वचनार्थं श्लुः। जुहोति। बिभर्त्ति॥

## बहुलं छन्दसि। २। ४। ७६॥

शपः श्लुः॥ दाति प्रियाणि। प्राप्तोऽपि न भवति। पूर्णां विवष्टि। अप्राप्तोऽपि भवति॥

**गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । २ । ४ । ७७ ॥**

लुगनुवर्तते । एभ्यः सिचो लुक् स्यात्परस्मैपदेषु ॥ अगात् । अस्थात् । अदात् । अधात् । अपात् । अभूत् । गापाविहेणादेश-पिबती गृह्येते । गातीति श्तिपा विकरणशून्यस्य निर्देशात् । पिब-तेरलुग्विकरणत्वात्प्रतिपदोक्तत्वाच्च । पातेः पै ओवै शोषणे इत्यस्य च न ग्रहणम् । एकस्य लुग्विकरणत्वादपरस्य लाक्षणिकत्वात् । तेनेह न । अगासीन्नटः । अपासीन्नृपः । परस्मैपदेषु किम् । अगा-सातां ग्रामौ देवदत्तेन ॥

**विभाषा घ्राधेट्शाच्छासः । २ । ४ । ७८ ॥**

एभ्यः सिचो लुग्वा स्यात्परस्मैपदेषु ॥ अघ्रात् । अघ्रासीत् । अधात् । अधासीत् । अशात् । अशासीत् । अच्छात् । अच्छासीत् असात् । असासीत् । स्यतेरेव ग्रहणं श्यन्विकरणाभ्यां शाच्छाभ्यां साह-चर्यात् न तु सै जै षै क्षये इत्यस्य । तेनेह न । असासीत् । परस्मै-पदेषु किम् । अघ्रासातां सुमनसौ देवदत्तेन ॥

**तनादिभ्यस्तथासोः । २ । ४ । ७९ ॥**

तनादेः सिचो वा लुक् स्यात् तथासोः ॥ अतत । अत-निष्ट । अतथाः । अतनिष्ठाः । थासा साहचर्यादेकवचनं तशब्दो गृह्यते । तेनेह न । यूयमतानिष्ट ॥

**मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिज-**
**निभ्यो लेः । २ । ४ । ८० ॥**

एभ्यो लेर्लुक् स्यान्मन्त्रे । अक्षन्नमीमदन्त । घस्लादेशस्य गमहनेत्युपधालोपे शासिवसीति षः । माह्वर्मित्रस्य । प्रणङ् मर्त्यस्य ।

नशेर्वेति कुत्वम् । सुरुचो वेन आवः । मान आधक् । आदित्याकारान्तग्रहणम् । प्रा पूरणे । आप्रा द्यावापृथिवी । परावर्गं भारभृद्यथा । अक्रन्नुषासः । त्वेरयम् जागृवांसो अनुग्मन् । मन्त्रग्रहणं ब्राह्मणस्याप्युपलक्षणम् । अक्षत वा अस्य दन्ताः । विभाषानुवृत्तेर्नेह । न ता अगृभ्णान्नजनिष्ट ॥

## आमः । २ । ४ । ८१ ॥

आमः परस्य लुक् स्यात् ॥ एधाञ्चक्रे ॥

## अव्ययादाप्सुपः । २ । ४ । ८२ ॥

अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् ॥ तत्र शालायाम् । अथ । विहितविशेषणान्नेह । अत्युच्चैसौ । अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति तथापि न गौणे । आब्ग्रहणं व्यर्थमलिङ्गत्वात् ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

इति श्रुतिर्लिङ्गकारकसंख्याभावपरा ॥

## नाव्ययीभावादतोऽम्त्वपञ्चम्याः । २ । ४ । ८३ ॥

अदन्तादव्ययीभावात्सुपो न लुक् तस्य पञ्चमीं विनाऽमादेशश्च ॥ उपकुम्भं तिष्ठति । उपकुम्भं पश्य । अत इति किम् । अधिहरि । अपञ्चम्याः किम् । उपकुम्भादानय ॥

## तृतीयासप्तम्योर्बहुलम् । २ । ४ । ८४ ॥

अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् ॥ उपकुम्भेन कृतम् । उपकुम्भं कृतम् । उपकुम्भे निधेहि । उपकुम्भं निधेहि । बहुलग्रहणात्सुमद्रमुन्मत्तगङ्गमित्यादौ सप्तम्या नित्यमम्भावः ॥

**लुटः प्रथमस्य डारौरसः । २ । ४ । ८५ ॥**

डा रौ रस् एते क्रमात्स्युः ॥ डित्वसामर्थ्यादभस्यापि टेर्लोपः । कर्ता । कर्तारौ । कर्तारः । प्रथमस्य किम् । कर्तासि । कर्ताहे ।

इत्योरम्भट्टविरचितायां व्याकरणदीपिकायां पाणिनिसूत्रवृत्तौ

द्वितीयाध्यायस्य चतुर्थः पादोऽध्यायश्च

द्वितीयः समाप्तः ॥



श्रीगणेशाय नमः ॥

# अथ तृतीयाध्यायस्य प्रथमः पादः ।

## प्रत्ययः । ३ । १ । १ ॥

आ पञ्चमपरिसमाप्तेरधिकारोऽयम् ।

## परश्च । ३ । १ । २ ॥

अयमपि तथा ॥

## आद्युदात्तश्च । ३ । १ । ३ ॥

प्रत्यय आद्युदात्तः स्यात् ॥ अग्निः । कर्तव्यम् ॥

## अनुदात्तौ सुप्पितौ । ३ । १ । ४ ॥

पूर्वस्यापवादः ॥ यज्ञस्य । न यो युच्छति । शप्तिपोरनुदात्तत्वे स्वरितप्रचयौ ॥

## गुप्तिज्किद्भ्यः सन् । ३ । १ । ५ ॥

## मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य । ३ । १ । ६ ॥

गुप गोपने । तिज निशाने । कित निवासे रोगापनयने च । मान पूजायाम् । बध बन्धने । दान खण्डने । शान तेजने । भ्वादिषु पठितेभ्य एतेभ्यः सूत्रद्वयोक्तेभ्यः सन्स्यान्मानादीनामभ्यासस्येकारस्य दीर्घश्च ॥ गुपेर्निन्दायाम् । तिज क्षमायाम् । कितेर्व्याधिप्रतीकारे । निग्रहेऽपनयने नाशने संशये च । मानेर्जिज्ञासायाम् । बधेश्चित्तविकारे । दानेरार्जवे । शानेर्निशाने । सनाद्यन्ता इति धातुत्वम् । सन्यङोरिति द्वित्वम् । अभ्यासकार्यम् । गुपिप्र-

भृतयः क्विद्भिन्ना निन्दाद्यर्थका एवानुदात्तेतो दानशानौ चार्जवनिशानार्थावेव स्वरितेतौ । एते नित्यसन्नन्ताः । अर्थान्तरे त्वननुबन्धकाश्चुरादयः । अतो ऽनुबन्धस्य केवले ऽचरितार्थत्वात्सन्नन्तादात्मनेपदम् । धातोरित्यविहितत्वात्सनो ऽत्र नार्धधातुकत्वम् । तेनेड्गुणौ न । जुगुप्सते । जुगुप्साञ्चक्रे । तितिक्षते । चिकित्सति । संशये प्रायेण विपूर्वः । विचिकित्सा तु संशये इत्यमरः । अस्यानुदात्तेत्वमाश्रित्य विचिकित्सते इत्यादुदाजहार कश्चित् । मीमांसते । भष्भावः । चर्त्वम् । बीभत्सते । दीदांसति । दीदांसते । शीशांसति । शीशांसते । निन्दाद्यर्थेभ्यो ऽन्यत्र गोपयति । तेजयति । केतयति । मानयति । बाधयति । दानयति । शानयति ॥

**धातोः कर्मणः समानकर्तृकादिच्छायां वा । ३ । १ । ७ ॥**

इषिकर्मण इषिणैककर्तृकाद्धातोरिच्छायां सन्प्रत्ययो वा स्यात् ॥ धातोर्विधेरिह सन आर्धधातुकत्वम् । इट् । द्वित्वम् । सन्यतः । पठितुमिच्छति पिपठिषति । यङ् । सन् । णयन्तात्सन् । बोभूयिषयिषति । कर्मणः किम् । गमनेनेच्छतीति करणान्माभूत् । समानकर्तृकात्किम् । शिष्याः पठन्त्वितीच्छति गुरुः । इच्छायां किम् । कर्तुं जानाति । वाग्रहणात्पक्षे वाक्यमपि ॥ आशङ्कायां सन्वक्तव्यः ॥ * ॥ श्वा मुमूर्षति । कूलं पिपतिषति ॥

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ॥

सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥

शैषिकः सरूपो न । तेन शालीये भव इति वाक्यमेव ॥ न तु छान्ताच्छः । सरूपः किम् । आहिच्छत्रे भव आहिच्छत्रीयः । अणन्ताच्छः । तथा मत्वर्थात्सरूपः स न । दण्डवानस्यास्तीतीह

मतुबन्तान्मतुब्न । विद्रूपस्तु स्यादेव । दण्डिमती शाला । सन्नन्तान्न सनिष्यते इत्यत्रापि सद्रूप इत्यनुषज्यते । अर्थद्वारा सादृश्यन्तस्यार्थः । तेन इच्छासन्नन्तादिच्छासन्न । स्वार्थसन्नन्तात्तु स्यादेव । जुगुप्सिषते । मीमांसिषते ॥

## सुप आत्मनः क्यच् । ३ । १ । ८ ॥

इषिकर्मण एषितृसम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच्प्रत्ययो वा स्यात् ॥ धात्ववयवत्वात्सुपो लुक् । क्यचि चेतीत्वम् । आत्मनः पुत्रमिच्छति पुत्रीयति । वान्तो यि प्रत्यये । गव्यति । नाव्यति । लोपः शाकल्यस्येति तु न । नः क्ये इति नियमेनापदान्तत्वात् । प्रत्ययोत्तरपदयोश्च । त्वद्यति । मद्यति । एकार्थयोरित्येव । युष्मद्यति । अदस्यति । वाच्यति । अकृत्सार्वेति दीर्घः । कवीयति । समिध्यति । सुब्ग्रहणं किम् । वाक्यान्माभूत् । महान्तं पुत्रमिच्छति । आत्मनः किम् । राज्ञः पुत्रमिच्छति । ककारो नः क्ये इति सामान्यग्रहणार्थः । चकारस्तदविघातार्थः ॥ मान्तप्रकृतिकादव्ययाच्च क्यच् न ॥ * ॥ किमिच्छति । इदमिच्छति । स्वरिच्छति ॥ छन्दसि परेच्छायामपीति वक्तव्यम् ॥ * ॥ मा त्वा वृका अघायवः ॥

## काम्यच्च । ३ । १ । ९ ॥

उक्तविषये काम्यच् स्यात् ॥ पुत्रमात्मन इच्छति पुत्रकाम्यति । पुत्रकाम्याञ्चकार । पुत्रकाम्यिता । यशस्काम्यति । सर्पिष्काम्यति । मान्ताव्ययेभ्योऽप्ययं स्यादेव । किङ्काम्यति । स्वःकाम्यति । कस्येत्संज्ञा न । फलाभावात् । चित्त्वं चिन्त्यप्रयोजनम् । धातुस्वरेण सिद्धेः ॥

## उपमानादाचारे । ३ । १ । १० ॥

उपमानात्कर्मणः सुबन्तादाचारे ऽर्थे क्यच् स्यात् ॥ पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति द्विजम् ॥ अधिकरणाच्चेति वक्तव्यम् ॥ * ॥ प्रासादीयति कुट्यां भिक्षुः । कुटीयति प्रासादे ॥

## कर्तुः क्यङ् सलोपश्च । ३ । १ । ११ ॥

उपमानात्कर्तुः सुबन्तादाचारे क्यङ् वा स्यात्सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात् ॥ क्यङ् वेत्युक्तेः पक्षे वाक्यम् । सान्तस्य लोपस्तु क्यङ्सन्नियोगशिष्टः स च व्यवस्थितः ।

ओजसोऽप्सरसो नित्यमितरेषां विभाषया ।

कृष्ण इवाचरति कृष्णायते ॥ ओजः शब्दो वृत्तिविषये तद्वति । ओजायते । अप्सरायते । यशायते । यशस्यते । विद्वायते । विद्वस्यते । त्वद्यते । मद्यते । अनेकार्थत्वे तु युष्मद्यते । अस्मद्यते ॥ आचारे ऽवगल्भक्लीबहोडेभ्यः क्विब्वा ॥ * ॥ वाग्रहणात्क्यङपि । अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वञ्चाच्प्रत्ययस्य प्रतिज्ञायते । तेन तङ् । अवगल्भते । क्लीबते । होडते । भूतपूर्वादप्यनेकाच आम् एतद्वार्तिकारम्भसामर्थ्यात् । न चावगल्भते इत्यादिसिद्धिस्तत्फलम् । केवलानामेवाचारे वृत्तिसम्भवात् । धातूनामनेकार्थत्वात् । अवगल्भाञ्चक्रे । क्लीबाञ्चक्रे । होडाञ्चक्रे । वार्तिके ऽवेत्युपसर्गविशिष्टपाठात्केवलादुपसर्गान्तरविशिष्टाच्च क्यङेवेति माधवादयः । तङ् नेति तूचितम् ॥ सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः ॥ * ॥ पूर्ववार्तिकन्तु अनुबन्धासङ्गार्थम् । तच्च क्विबनूद्यते । प्रातिपदिकग्रहणादिह सुप इति न सम्बध्यते । तेन पदकार्यं न । कृष्ण इवाचरति कृष्णति । अतोगुणे इति शपा सह

पररूपम् । अ इवाचरति अति । अतः । अन्ति । प्रत्ययग्रहणमपनीय अनेकाच इत्युक्तेर्नाम् । औ । अतुः । उः । द्वित्वम् । अतो गुणे । अत आदेरिति दीर्घः । णल औ वृद्धिः । अतुसादिषु तु आतो लोप इटि चेत्यालोपः । मालेवाचरति । मालाति । लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तवत्वाद्वा क्विप् । मालाञ्चकार । लङि । अमालात् । अत्र हल्ङ्याब्भ्य इति लोपो न । ङीसाहचर्यादापोऽपि सेरेव लोपविधानात् । इट्सकौ । अमालासीत् । कविरिव कवयति । आशीर्लिङि कवीयात् । सिचि वृद्धिरित्यत्र धातोरित्यनुवर्त्य धातुरेव यो धातुरिति व्याख्यानान्नामधातोर्न वृद्धिरिति कैयटादयः । अकवयीत् । माधवस्तु नामधातोरपि वृद्धिमिच्छति । अकवायीत् । विरिव वयति । विवाय । विव्यतुः । अवयीत् । अवायीत् । श्रीरिव श्रयति । शिश्राय । शिश्रियतुः । पितेव पितरति । आशिषि लिङ् । पित्रियात् । भूरिव भवति । अत्र गातिस्थेति भुवो वुगिति भवतेर इति च न भवति । अभिव्यक्तत्वेन धातुपाठस्थस्यैव तत्र ग्रहणात् । अभावीत् । बुभाव । द्रुरिव द्रवति । णिश्रीति चङ् न । अद्रावीत् । अनुनासिकस्य क्वीति दीर्घः । इदामिवाचरति । इदामति । राजेवाचरति राजानति । पन्था इवाचरति पथीनति । ऋभुक्षीणति । द्यौरिव देवतीति माधवः । अत्र ऊठि द्यवतीत्युचितम् । क इव कति । चकाविति हरदत्तः । माधवस्तु यस्य हलः लोपाविति वचनाराणलि वृद्धिं बाधित्वा अतो लोपात् चक इति रूपमाह । स्व इव सस्वौ । सस्व । यत्तु स्वामास स्वाञ्चकारेति तद नाकरमेव ॥

**भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः । ३ । १ । १२ ॥**

अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्यात् हलन्तानामेषां लोपश्च ॥ अभृशो भृशो भवति भृशायते । अच्वेरिति पर्युदासबलादभूततद्भाव इति लब्धम् । तेनेह न । क्व दिवा भृशा भवन्ति ॥ ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः । सुमनस् अस्य सलोपः । सुमनायते । चुरादौ संग्राम युद्धे इति पठ्यते तत्र संग्रामेति प्रातिपदिकं तस्मात्तत्करोतीति णिच् सिद्धः । तत्सन्नियोगेनानुबन्ध आसज्यते । युद्धे योऽयं ग्रामशब्द इत्युक्तेऽपि सामर्थ्यात्संग्रामशब्दे लब्धे विशिष्टपाठो ज्ञापयति उपसर्गसमानाकारं पूर्वपदं धातुसञ्ज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियत इति । तेन मनस्शब्दात्प्रागट् । समनायत । उन्मनायते । उदमनायत । एवञ्चावागल्भत अवागल्भिष्टेत्यादावप्यवेत्यस्य पृथक्करणं बोध्यम् । ज्ञापकञ्च सजातीयविषयकम् । तेन यत्रोपसर्गसदृशं रूपं सकलं श्रूयते नन्वादेशेनापहृतं तत्रैव पृथक्कृतिः । एवञ्च आ ऊढः ओढः स इवाचर्य ओढायित्वा । अत्र उन्मनाय्य अवगल्भ्येतिवन्न ल्यप् । ज्ञापकस्य विशेषविषयत्वे पाष्ठं वार्तिकं तद्भाष्यञ्च प्रमाणम् । तथा-हि ॥ उस्योमाङ्क्ष्वाटः प्रतिषेधः ॥ * ॥ उसि ओमाङोश्च परयो-राटः पररूपं नेत्यर्थः । उस्रामैच्छत् औस्रीयत् । ओङ्कारीयत् । औढीयत् । आटश्चेति चशब्देन पुनर्वृद्धिविधानादिदं सिद्धमिति पाष्ठे स्थितम् ।

## लोहितादिडाज्भ्यः क्यष् । ३ । १ । १३ ॥

लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात् ॥ लोहिता-यति । लोहितायते । अत्राच्वेरित्यनुवृत्याऽभूततद्भावविषयत्वं लब्ध-म् । तच्च लोहितशब्दस्यैव विशेषणं न तु डाचो ऽसम्भवात् ।

नाप्यादिशब्दग्राह्याणां तस्य प्रत्याख्यानात् । तथा च वार्तिकम् । लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणीति । न चैवं काम्यच इव क्यषोऽपि ककारः श्रूयेत उच्चारणसामर्थ्यादिति वाच्यम् । तस्यापि भाष्ये प्रत्याख्यानात् । पटपटायति । पटपटायते । कृभ्वस्तियोगं विनापीह डाच् । डाजन्तात्क्यषो विधानसामर्थ्यात् । यत्तु

लोहितश्यामदुःखानि हर्षगर्वसुखानि च ।

मूर्छानिद्राकृपाधूमाः करुणा नित्यचर्मणी ॥

इति पठित्वा श्यामादिभ्योऽपि क्यषि पदद्वयमुदाहरन्ति तद्भाष्यवार्तिकविरुद्धम् । तस्मात्तेभ्यः क्यङेव । श्यामायते । दुःखादयो वृत्तिविषये तद्वति वर्तन्ते । लिङ्गविशिष्टपरिभाषया लोहिनीशब्दादपि क्यष् । लोहिनीयति । लोहिनीयते ॥

## कष्टाय क्रमणे । ३ । १ । १४ ॥

चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् ॥ कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः ॥ सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् ॥ * ॥ कण्वं पापम् । सत्रादयो वृत्तिविषये पापार्थास्तेभ्यो द्वितीयान्तेभ्यश्चिकीर्षायां क्यङ् । पापं चिकीर्षतीत्यस्वपदविग्रहः । सत्रायते । कक्षायते इत्यादि ॥

## कर्मणो रोमन्थतपोभ्यां वर्तिचरोः । ३ । १ । १५ ॥

रोमन्थतपोभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् स्यात् ॥ रोमन्थं वर्तयति रोमन्थायते ॥ हनुचलने इति वक्तव्यम् ॥ * ॥ चर्वितस्याकृष्य पुनश्चर्वणे इत्यर्थः । नेह । कीटो रोमन्थं वर्तयति । अपानप्रदेशान्निःसृतं द्रव्यमिह रोमन्थः । तदश्नातीत्यर्थ इति

कैयटः । वर्तुलं करोतीत्यर्थ इति न्यासकारहरदत्तौ ॥ तपसः परस्मैपदञ्च ॥ * ॥ तपश्चरति तपस्यति ॥

**बाष्पोष्मभ्यामुद्वमने । ३ । १ । १६ ॥**

आभ्यां कर्मभ्यां क्यङ् स्यात् ॥ बाष्पमुद्वमति । बाष्पायते । ऊष्मायते ॥ फेनाच्चेति वक्तव्यम् ॥ * ॥ फेनायते ॥

**शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे । ३ । १ । १७ ॥**

एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् ॥ शब्दं करोति शब्दायते । पक्षे तत्करोतीति णिजपीष्यत इति न्यासकारः । शब्दयति ॥ सुदिनदुर्दिननीहारेभ्यश्च ॥ * ॥ सुदिनायते ॥ अटाट्टाशीकाकोटापोटासोटापृष्ठाप्लुष्वाग्रहणं कर्तव्यम् ॥ * ॥ अटायते । अट्टायते । शीकायते । कोटायते । पोटायते । सोटायते । पृष्ठायते । प्लुष्वायते ॥

**सुखादिभ्यः कर्तृवेदनायाम् । ३ । १ । १८ ॥**

सुखादिभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्यात् वेदनाकर्त्तुरेव चेत्सुखादीनि स्युः ॥ सुखं वेदयते सुखायते । दुःखायते । कर्तृग्रहणं किम् । परस्य सुखं वेदयते ॥

**नमोवरिवश्चित्रङः क्यच् । ३ । १ । १९ ॥**

करणे इत्यनुवृत्तेः क्रियाविशेषे पूजायां परिचर्यायामाश्चर्ये च । नमस्यति देवान् । पूजयतीत्यर्थः । वरिवस्यति गुरून् । शुश्रूषत इत्यर्थः । चित्रीयते । विस्मयत इत्यर्थः । विस्मापयत इत्यन्ये ॥

**पुच्छभाण्डचीवराण्णिङ् । ३ । १ । २० ॥**

पुच्छादुदसने व्यसने पर्यसने च ॥ * ॥ विविधं विरुद्धं चोत्क्षेपणं व्यसनम् । उत्पुच्छयते । विपुच्छयते ॥ भाण्डात्समाच-

यने ॥ * ॥ सम्भाण्डयते । भाण्डानि समाचिनोति । राशीकरोतीत्यर्थः । समबभाण्डत ॥ चीवरादर्जने परिधाने च ॥ * ॥ सञ्चीवरयते भिक्षुः । चीवराण्यर्जयति परिधत्ते वेत्यर्थः ॥

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् । ३ । १ । २१ ॥

कृञर्थे ॥ मुण्डं करोति मुण्डयति । मिश्रयति । श्लक्ष्णयति । लवणयति । व्रताद्भोजनतन्निवृत्त्योः ॥ * ॥ पयः शूद्रान्नं वा व्रतयति ॥ वस्त्रात्समाच्छादने ॥ * ॥ सम्वस्त्रयति ॥ हल्यादिभ्यो ग्रहणे ॥ * ॥ हलिकल्योरदन्तत्वं निपात्यते । हलिं कलिं वा गृह्णाति हलयति । कलयति । महद्धलं हलिः । परत्वाद्वृद्धौ सत्यामपीष्ठवद्भावेनागेव लुप्यते । अतः सन्वद्भावदीर्घौ न । अजहलत् । अचकलत् । कृतं गृह्णाति । कृतयति । तूस्तानि विहन्ति तूस्तयति । तूस्तं केश इत्येके । जटीभूताः केशा इत्यन्ये । पापमित्यपरे । तत्करोतीत्येव सिद्धे केशाद्विद् ग्रहणं सापेक्षेभ्योऽपि णिजर्थम् । मुण्डयति माणवकम् । मिश्रयत्यन्नम् । श्लक्ष्णयति वस्त्रम् । लवणयति व्यञ्जनमिति । हलकलयोरत्वार्थम् । केषाञ्चित्तु प्रपञ्चार्थम् । मुण्डादयः सत्यापेत्यत्रैव पठितुं युक्ताः ॥

## धातोरेकाचो हलादेः क्रियासमभिहारे यङ् । ३ । १ । २२ ॥

पौनः पुन्यं भृशार्थश्च क्रियासमभिहारस्तस्मिन्द्योत्ये यङ् स्यात् ॥ गुणो यङ्लुकोरित्यभ्यासस्य गुणः । सनाद्यन्ता इति धातुत्वाल्लडादयः । ङिदन्तत्वादात्मनेपदम् । पुनः पुनरतिशयेन वा भवति बोभूयते । बोभूयाञ्चक्रे । बोभूयिता । बोभूयिष्यते । बोभूय-

ताम् । बेभूयिषीष्ट । अबेभूयिष्ट । अबेभूयिष्यत । बेभिद्यते । यस्य- हलः । आदेः परस्येति यलोपः । अतो लोपः । तस्य स्थानिवत्त्वा न्नोपधागुणः । बेभिदाञ्चक्रे । बेभिदिता । धातोः किम् । आर्द्धधा- तुकत्वं यथा स्यात् । तेन ब्रुवो वचिरित्यादि । एकाचः किम् । जागर्ति । हलादेः किम् । भृशमीक्षते । भृशं शोभते रोचत इत्यत्र यङ् नेति भाष्यम् । पैनः पुन्ये तु स्यादेव । शोशुभ्यते । रोरुच्यते ॥ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः ॥ * ॥ आद्यास्त्रयश्चुरादावदन्ताः । सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते । अनेकाच्त्वेनाषोपदेशत्वात् षत्वं न । यस्य हलः । आदेः परस्येति यलोपः । अतो लोपः । सोसूचाञ्चक्रे । सोसूचिता । सोसूत्रिता । दीर्घोऽकित इत्यभ्यासस्य दीर्घः । अटाट्यते । यङि चेति गुणः । अरार्यते । अरारिता । अशाश्यते । अशाशिता । ऊर्णोनूयते । ऊर्णो- तेर्न वक्तव्यः ।

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥

तत्र यङि भावातिदेशः । आमिटोस्त्वभावातिदेशः । तयो- र्नोतेरभावात् । इडुपग्रह इट्प्रतिषेधः । विभाषागुण इति पञ्चमी । फलस्य चात्र हेतुत्वम् । यथाऽध्ययनेन वसतीति । यङुदाहृतः ॥ ऊर्णुनाव । ऊर्णुतः । ऊर्णुतवानिति शिष्टोदाहरणानि ॥

## नित्यं कौटिल्ये गतौ । ३ । १ । २३ ॥

गत्यर्थात्कौटिल्ये एव यङ् स्यान्नतु क्रियासमभिहारे ॥ कुटिलं व्रजति वाव्रज्यते ॥

## लुपसदचरजपजभदहदशगृभ्यो भावगर्हा-याम् । ३ । १ । २४ ॥

एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् ॥ गर्हितं लुम्पति लोलुप्यते । सासद्यते । चञ्चूर्यते । जञ्जप्यते । जञ्जभ्यते । दन्दह्यते । दन्दश्यते । जेगिल्यते ॥

## सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचव-र्मवर्णचूर्णचुरादिभ्यो णिच् । ३ । १ । २५ ॥

एभ्यो णिच् स्यात् ॥ चूर्णान्तेभ्यस्तत्करोतीत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । सत्यस्यत्वापुगर्थम् । सत्यं करोत्याचष्टे वा सत्यापयति ॥ अर्थवेदयोरप्यापुग्वक्तव्यः ॥ * ॥ अर्थापयति । वेदापयति । पाशं विमुञ्चति । विपाशयति । रूपं पश्यति रूपयति । वीणयोपगायति उपवीणयति । तूलेनानुकुष्णाति अनुतूलयति । तृणाग्रं तूलेनानुघट्टयतीत्यर्थः । श्लोकैरुपस्तौति उपश्लोकयति । सेनयाऽभियाति अभिषेणयति । उपसर्गात्सुनोतीति षः । अभ्यषेणयत् । प्राक्सितादिति षः । लोमान्यनुमार्ष्टि अनुलोमयति । त्वच संवरणे घः । त्वचं गृह्णाति त्वचयति । वर्मणा सन्नह्यति वर्मयति । वर्णं गृह्णाति वर्णयति । चूर्णैरवध्वंसते ऽवचूर्णयति । चुरादिभ्यस्तु स्वार्थे चोरयति । चिन्तयति ॥

## हेतुमति च । ३ । १ । २६ ॥

प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् ॥ भवन्तं प्रेरयति भावयति । पाचयति । ण्यन्तार्णिच् । पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णिलोपः । चोरयति । पाचयति । यङ् । णिच् । सन्नन्तार्णिच् । बोभूययिषयति । निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ

शुद्धेन तुल्योऽर्थः । तेन "प्रार्थयन्ति शयनोत्थितं प्रिया" इत्यादि सिद्धम् । एवं सकर्मकेषु सर्वेषूह्यम् ॥ तत्करोतीत्युपसंख्यानम् ॥ * ॥ करोतीति धात्वर्थोपलक्षणं स एव च णिजर्थः । लडर्थस्त्वविवक्षितः । पटुं करोत्याचष्टे वा पटयति । परत्वाद्वृद्धौ सत्यां टेरिति सूत्रे णाविष्ठवत्प्रातिपदिकस्येति वक्ष्यमाणवार्तिकेन टिलोपः । अपीपटत् । णौचङीत्यत्र भाष्ये तु वृद्धेर्लोपो बलीयानिति स्थितम् । अपपटत् ॥ आख्यानात्कृतस्तदाचष्ट इति णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ॥ * ॥ आख्यानात्कृदन्ताण्णिज्वक्तव्यस्तदाचष्ट इत्यस्मिन्नर्थे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीत्यर्थः । कंसवधमाचष्टे कंसं घातयति । बलिबन्धमाचष्टे बलिं बन्धयति । राजागमनमाचष्टे । राजानमागमयति । नन्वत्राङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता ततश्चाट्द्वित्वयोर्दोषः । किञ्च कुत्वतत्वे न स्याताम् । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । सत्यम् । प्रकृतिवच्चेति चकारो भिन्नक्रमः । कारकञ्च चात्कार्यञ्च । हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावनन्तर्भूतं द्वितीयाद्यन्तं यादृशञ्च कार्यं कुत्वतत्वादि तदिहापीत्यर्थः । कंसमजीघतत् । आख्यानशब्दाच्च प्रतिषेधो वक्तव्यः ॥ * ॥ आख्यानमाचष्टे इति वाक्यमेव ॥ दृश्यर्थायाञ्च प्रवृत्तौ णिज्वक्तव्यः ॥ कृदन्तात्तदाचष्टे इत्येतस्मिन्नर्थे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । दृश्यर्थेति इक् कृष्यादिभ्य इति दृशिः साधुः । मृगरमणमाचष्टे मृगान् रमयति । यदाऽरण्यस्थो रममाणान् मृगान् प्रतिपद्य व्याचष्टे एतस्मिन्नवकाशे एवंविधा मृगा रमन्त इति तदा प्रतिपाद्य दर्शनार्था प्रवृत्तिर्भवति । दृश्यर्थायामिति किम् । यदा हि ग्रामे मृगरमणमाचष्टे तदा मृगाणामसम्भवाद्दर्शनार्थप्रवृत्त्यभावान्मृगरमण-

माचष्टे इत्येव यथा स्यात् । एतच्च मृगरमणादिविषयमेव । राजागमनादिषु तु दृश्यर्थप्रवृत्त्यभावेऽपि णिच् भवति ॥ आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम् ॥ * ॥ कृदन्ताण्णिज्वक्तव्यस्तदाचष्टे इत्येतस्मिन्नर्थे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । कालात्यन्तसंयोगे गम्यमाने इत्यर्थः । आरात्रिविवासमाचष्टे रात्रिं विवासयति । यावद्रात्रेर्विवासो ऽतिक्रमणं तावत्कथाः कथयतीत्यर्थः । रात्रिरूपकालेनात्यन्तसंयोगः । कथाश्चाख्याने कर्म । आरात्रिविवासशब्देन तावत्पर्यन्तकथाः लक्ष्यन्ते । वसेरकर्मकतया गतिबुद्ध्यादिति रात्रेः कर्मत्वं हेतुमण्णिचि । तद्वद्रात्रिं विवासयतीत्यत्रापि ॥ चित्रीकरणे प्राप्तावर्थे णिज्वक्तव्यः ॥ * ॥ कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सम्भावयते सूर्यमुद्गमयति । सम्भावयते इति भूप्राप्तावात्मनेपदीत्यस्य रूपम् । प्राप्नोतीत्यर्थः ॥ नक्षत्रयोगे ज्ञि ॥ * ॥ नक्षत्रयोगे जानात्यर्थे कृदन्ताण्णिज्वक्तव्यः कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । पुष्ययोगं जानाति पुष्येण योजयति । मघाभिर्योजयति ॥

## कण्ड्वादिभ्यो यक् । ३ । १ । २७ ॥

वेति निवृत्तम् । एभ्यो नित्यं यक् स्यात्स्वार्थे ॥ धातुभ्यः किम् । प्रातिपदिकेभ्यो माभूत् । द्विधा हि कण्ड्वादयो धातवः प्रातिपदिकानि च । कण्डूञ् गात्रविघर्षणे । कण्डूयति । कण्डूयते । मन्तु अपराधे । रोष इत्येके । मन्तूयति । चान्द्रस्तु जितमाह । मन्तूयते । वल्गु पूजामाधुर्ययोः । वल्गूयति । असु उपतापे । असू असुञ् इत्येके । अस्यति । असूयति । असूयते । लेट् लोट् धौर्त्ये पूर्वभागे स्वप्ने च ।

दिकः ॥ न वत्सेभ्यो हितोऽवत्सीयः । न सन्तापाय प्रभवति असान्तापिकः । नञः किम् । गर्दभरथमर्हति गार्दभरथिकः । विगार्दभरथिकः । गुणप्रतिषेधे किम् । गार्दभरथिकादन्योऽगार्दभरथिकः । गुणो हि तद्धितार्थे प्रवृत्तिनिमित्त सम्पादितत्वाद्युच्यते । तत्प्रतिषेधो यथोच्यते तथायं विधिः । कर्णवेष्टकाभ्यां न सम्पादि मुखमिति । सम्पेति किम् । पाणिनीयमधीते पाणिनीयः । अपाणिनीयः । तद्धितः किम् । वोढुमर्हो वोढा न वोढा अवोढा ॥

## ययतोश्चातदर्थे । ६ । २ । १५६ ॥

ययतौ यौ तद्धितौ तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयात् परस्यान्त उदात्तः । पाशानां समूहः पाश्या । न पाश्या अपाश्या । अदन्त्यम् । अतदर्थे किम् । अपाद्यम् । तद्धितं किम् । अदेयम् । गुणप्रतिषेधे किम् । दन्त्यादन्यदन्त्यम् । तदनुबन्धकग्रहणे नातदनुबन्धकस्येति नेह । अवामदेव्यम् ॥

## अच्कावशक्तौ । ६ । २ । १५७ ॥

अजन्तं कान्तं च नञः परमन्तोदात्तमशक्तौ गम्यायाम् । अपचः । पक्तुं न शक्तः । अविलिखः । अशक्तौ किम् । अपचो दीक्षितः । गुणप्रतिषेध इत्येव । अन्योऽयं पचादपचः ॥

## आक्रोशे च । ६ । २ । १५८ ॥

नञः परावच्कावन्तोदात्तावाक्रोशे ॥ अपचो जाल्मः । पक्तुं न शक्नोतीत्येवमाक्रोश्यते । अविक्षिपः ॥

## संज्ञायाम् । ६ । २ । १५९ ॥

नञः परमन्तोदात्तं संज्ञायामाक्रोशे । अदेवदत्तः ॥

## कृत्योकेष्णुच्चार्वादयश्च । ६ । २ । १६० ॥

नञः परे ऽन्तोदात्ताः स्युः । अकर्तव्यः । उक । अनागामुकः । इष्णुच् । अनलङ्करिष्णुः । इष्णुच्ग्रहणे खिष्णुचो ह्यनुबन्धकस्यापि ग्रहणम् । इकारादेर्विधानसामर्थ्यात् । अनाढ्यम्भविष्णुः । चार्वादि । अचारुः । असाधुः ॥ राजाह्नोश्छन्दसि ॥ * ॥ अराजा । अनहः । भाषायां नञः स्वर एव ॥

## विभाषा तृन्नन्नतीक्ष्णशुचिषु । ६ । २ । १६१ ॥

तृन् । अकर्ता २ । अन्न । अनन्नम् । अतीक्ष्णम् । अशुचि । पक्षे ऽव्ययस्वरः ॥

## बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने । ६ । २ । १६२ ॥

एभ्यो ऽनयोरन्त उदात्तः ॥ इदं प्रथमं यस्य स इदंप्रथमः । एतद्द्वितीयः । तत्पञ्चमः । बहुव्रीहौ किम् । अनेन प्रथम इदंप्रथमः । तृतीयेति योगविभागात् समासः । इदमेतत्तद्भ्यः किम् । यत्प्रथमः । प्रथमपूरणयोः किम् । तानि बहून्यस्य तद्बहुः । क्रियागणने किम् । अयं प्रथमो येषान्ते इदंप्रथमाः । द्रव्यगणनमिदम् । गणने किम् । अयं प्रथम एषान्ते इदंप्रथमाः । इदंप्रधाना इत्यर्थः । उत्तरपदस्य कार्यित्वात् कपि पूर्वमन्तोदात्तम् । इदंप्रथमकाः । बहुव्रीहावित्यधिकारो बनं समास इत्यतः प्राक् ॥

## संख्यायाः स्तनः । ६ । २ । १६३ ॥

बहुव्रीहावन्तोदात्तः । द्विस्तना । चतुःस्तना । संख्यायाः किम् । दर्शनीयस्तना । स्तनः किम् । द्विशिराः ॥

**विभाषा छन्दसि । ६ । २ १६४ ॥**

द्विस्तनां करोति ॥

**संज्ञायां मित्राजिनयोः । ६ । २ । १६५ ॥**

देवमित्रः । कृष्णाजिनम् । संज्ञायां किम् । प्रियमित्रः । ऋषिप्रतिषेधो मित्रे ॥ * ॥ विश्वामित्र ऋषिः ॥

**व्यवायिनोऽन्तरम् । ६ । २ । १६६ ॥**

व्यवधानवाचकात् परमन्तरमन्तोदात्तम् । वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः । व्यवायिनः किम् । आत्मान्तरः । स्वभावोऽन्यो यस्येत्यर्थः ।

**मुखं स्वाङ्गम् । ६ । २ । १६७ ॥**

गौरमुखः ॥ स्वाङ्गं किम् । दीर्घमुखा शाला ।

**नाव्ययदिक्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः । ६ । २ । १६८ ॥**

उच्चैर्मुख । उपाग्निमुख इत्यादावव्ययीभावपूर्वपदकोऽयं निषेधः केषां चिन्मते प्रवर्तते । केषां चिन्न नेत्यव्ययीभावश्चेत्यत्र भाष्यकैयटयोः स्पष्टम् । प्राङ्मुखः । गोमुखः । महामुखः । स्थूलमुखः । मुष्टिमुखः । पृथुमुखः । वत्समुखः । पूर्वपदप्रकृतिस्वरोऽत्र । गोमुष्टिवत्सपूर्वपदस्योपमानलक्षणोऽपि विकल्पोऽनेन बाध्यते ।

**निष्ठोपमानादन्यतरस्याम् । ६ । २ । १६९ ॥**

निष्ठान्तादुपमानवाचिनश्च परं मुखं स्वाङ्गं वाऽन्तोदात्तं बहुव्रीहौ ॥ प्रक्षालितमुखः । पक्षे निष्ठोपसर्गेति पूर्वपदान्तोदात्तत्वम् । पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरोऽपि भवति । उपमानम् । सिंहमुखः ॥

**जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः। ६। २। १७०॥**

सारङ्गजग्धः। मासजातः। सुखजातः। दुःखजातः। सुखादयः सुखादिभ्यः कर्तृवेदनायामित्यत्रत्याः। जात्यादिभ्यः किम्। पुत्रजातः। अनाच्छादनात् किम्। वस्त्रच्छन्नः। अकृतेति किम्। कुण्डकृतः। कुण्डमितः। कुण्डप्रतिपन्नः। अस्माज्ज्ञापकान्निष्ठान्तस्य परनिपातः॥

**वा जाते। ६। २। १७१॥**

जातिकालसुखादिभ्यः परो जातशब्दो वाऽन्तोदात्तः। दन्तजातः। मासजातः॥

**नञ्सुभ्याम्। ६ २। १७२॥**

बहुव्रीहावुत्तरपदमन्तोदात्तम्। अव्रीहिः। सुमाषः॥

**कपि पूर्वम् ६। २। १७३॥**

नञ्सुभ्यां पूर्वमुदात्तं कपि परे॥ अब्रह्मबन्धूकः। सुकुमारीकः।

**ह्रस्वान्तेऽन्त्यात् पूर्वम्। ६। २। १७४॥**

ह्रस्वान्ते उत्तरपदे समासे चान्त्यात् पूर्वमुदात्तं कपि नञ्सुभ्यां बहुव्रीहौ॥ अव्रीहिकः। सुमाषकः। पूर्वमित्यनुवर्तमाने पूर्वग्रहणं प्रकृतिभेदेन नियमार्थं ह्रस्वान्तेऽन्त्यादेव पूर्वं नञ्सुभ्यां परमुदात्तं न कपि पूर्वमिति। अज्ञकः। सुज्ञकः। अत्र नञ्सुभ्यामिति कबन्तस्यैवान्तोदात्तत्वम्। तद्धि समासस्यान्तोदात्तत्वमिष्यते। समासान्ता वा उत्तरपदावयवा भवन्तीति। अनृचो बह्वृच इत्यत्रापि

कृते समासान्ते तेनान्तोदात्तत्वं भवति । अत एव कपि पूर्वमिति सङ्गच्छते ॥

**बहोर्नञ्वदुत्तरपदभूम्नि ६ । २ । १७५ ॥**

उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य पदस्य नञः परस्येव स्वरः स्यात् । बहुव्रीहिः । बहुकुमारीकः । बहुव्रीहिकः । नञ् वद्वचनं विदेशस्थस्यापि नञो जरमरेत्यस्यातिदेशेन प्रवृत्त्यर्थम् । बहुजरः । बहुमरः । बहुमित्रः । बहुमृतः । उत्तरपदेति किम् । बहुषु मानोऽस्य स बहुमानः ।

**न गुणादयोऽवयवाः । ६ । २ । १७६ ॥**

अवयववाचिनो बहोः परे गुणादयो न नञ्वत्स्वरका बहुव्रीहौ ॥ बहुगुणा रज्जुः । बह्वक्षरं पदम् । बह्वध्यायः । पूर्वपदप्रकृतिस्वर एव भवति । गुणादिराकृतिगणः । अवयवाः किम् । बहुगुणो द्विजः । अध्ययनश्रुतसदाचारादयो गुणाः ॥

**उपसर्गात् स्वाङ्गं ध्रुवमपर्शु । ६ । २ । १७७ ॥**

प्रपृष्ठः । प्रललाटः । प्रमुख इत्यत्र मुखं स्वाङ्गमित्यस्य नाव्ययेति निषेधं परत्वाद्बाधित्वेदं भवति । ध्रुवमेकरूपम् । उपसर्गात् । किम् । प्रदर्शनीयपृष्ठः । स्वाङ्गं किम् । प्रशाखो वृक्षः । ध्रुवं किम् । उद्बाहुः । अपर्शु किम् । विपर्शुः ॥

**वनं समासे । ६ २ । १७८ ॥**

समासमात्रे उपसर्गादुत्तरपदं वनमन्तोदात्तम् ॥ तस्येदिमे प्रवणे । प्रनिरन्त इति णत्वम् । समासग्रहणं बहुव्रीह्यधिकारनिवृत्त्यर्थम् । उपसर्गात् किम् । शरवणो देशः ॥

अन्तः । ६ । २ । १७९ ॥

अस्मात् परं वनमन्तोदात्तम् । अन्तर्वणो देशः । अनुपसर्गार्थमिदम् ॥

अन्तश्च । ६ । २ । । १८० ॥

उपसर्गादन्तशब्दोऽन्तोदात्तः । प्रान्तः । पर्यन्तः । समन्तः ॥

न निविभ्याम् ॥ ६ । २ । ८१ ॥

न्यन्तः । व्यन्तः । पूर्वपदप्रकृतिस्वरे यणि च कृते उदात्तस्वरितयोर्यण इति स्वरितः ॥

परेरभितोभावि मण्डलम् ॥ ६ । २ । १८२ ॥

परेः परमभित उभयतो भावो यस्यास्ति तत् कूलादि मण्डलं चान्तोदात्तम् । परिकूलम् । परिमण्डलम् । बहुव्रीहिः प्रादिसमासोऽव्ययीभावो वा । अव्ययीभावपक्षे कूलतीरेति परिप्रत्युपेति वा प्राप्तम् ॥

प्रादस्वाङ्गं संज्ञायाम् ॥ ६ । २ । १८३ ॥

प्रगृहम् । अस्वाङ्गं किम् । प्रपदम् । संज्ञायां किम् । प्रशाखो वृक्षः ॥

निरुदकादीनि च । ६ २ । १८४ ।

अन्तोदात्तानि । निरुदकम् । निरुपलम् । निरुदकादिराकृतिगणः ॥

अभेर्मुखम् । ६ । २ । १८५ ।

अभिमुखम् । योगविभाग उत्तरार्थः ॥

स्फिगपूतवीणाऽञ्जोऽध्वकुक्षिसीरनामनाम च । ६ । २ । १८६ ।

अपादिमान्यन्तोदात्तानि । अपस्फिगम् । अपपूतम् । अपवीणम् । अञ्जस् । अपाञ्जः । अध्वन् । अपाध्वा । उपसर्गादध्वन इत्यस्याभावे इदम् । एतदेव च ज्ञापकं समासान्तानित्यत्वे । अपकुक्षि । सीरनाम । अपसीरम् । अपहलम् । अपनाम । स्फिगपूतकुक्षिग्रहणमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थञ्च ॥

अधेरुपरिस्थम् । ६ । २ । १८७ ।

अध्यारूढो दन्तोऽधिदन्तः । दन्तस्योपरिजातो दन्तः । उपरिस्थं किम् । अधिकरणम् ॥

अनोरप्रधानकनीयसी । ६ । २ । १८८ ।

अनोः परमप्रधानवाचि कनीयश्चान्तोदात्तम् । अनुगतो ज्येष्ठमनुज्येष्ठः । पूर्वपदार्थप्रधानः प्रादिसमासः । अनुगतः कनीयाननुकनीयान् । उत्तरपदार्थप्रधानः । प्रधानार्थञ्च कनीयोग्रहणम् । अप्रेति किम् । अनुगतो ज्येष्ठोऽनुज्येष्ठः ॥

पुरुषश्चान्वादिष्टः । ६ । २ । १८९ ।

अनोः परोऽन्वादिष्टवाची पुरुषोऽन्तोदात्तः । अन्वादिष्टः पुरुषोऽनुपुरुषः । अन्वादिष्टः किम् । अनुगतः पुरुषोऽनुपुरुषः ॥

अतेरकृत्पदे । ६ । २ । १९० ।

अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तः । अत्यङ्कुशो नागः । अतिपदा गायत्री । अकृत्पदे किम् । शोभनः कारकोऽतिकारकः ॥

अतेर्धातुलोप इति वाच्यम् ॥ * ॥ इह मा भूत् । शोभनो गार्ग्योऽतिगार्ग्यः । इह च स्यात् । अतिक्रान्तः कारकमतिकारकः ।

**नेरनिधाने । ६ । २ । १९१ ।**

निधानमप्रकाशता ततोऽन्यदनिधानं प्रकाशमित्यर्थः । निमूलम् । न्यक्षम् । अनिधाने किम् । निहितो दण्डो निदण्डः ॥

**प्रतेरंश्वादयस्तत्पुरुषे । ६ । २ । १९२ ।**

प्रतेः परेंऽश्वादयो ऽन्तोदात्ताः ॥ प्रतिगतोंऽशुः प्रत्यंशुः । प्रतिजनः । प्रतिराजा । समासान्तस्यानित्यत्वान्न टच् ॥

**उपाद् द्व्यजजिनमगौरादयः । ६ । २ । १९३ ।**

उपात् परं द्व्यच्कमजिनं चान्तोदात्तं तत्पुरुषे गौरादीन् वर्जयित्वा ॥ उपदेवः । उपेन्द्रः । उपाजिनम् । अगौरादय. किम् । उपगौरः । उपतैषः । तत्पुरुषे किम् । उपगतः सोमोऽस्य स उपसोमः ।

**सोरवक्षेपणे । ६ । २ । १९४ ।**

सुप्रत्यवसितः ॥ सुरत्र पूजायामेव वाक्यार्थस्त्वत्र निन्दा । असूयया तथाऽभिधानात् । सोः किम् । कुब्राह्मणः । अवक्षेपणे किम् । सुवृषणम् ॥

**विभाषोत्पुच्छे । ६ । २ १९५ ।**

तत्पुरुषे ॥ उत्क्रान्तः पुच्छादुत्पुच्छः २ । यदा तु पुच्छमुदस्यति उत्पुच्छयते ग्स्च् उत्पुच्छः । तदा थाथादिस्वरेण नित्यमन्तस्योदात्तत्वे प्राप्ते विकल्पोऽयम् । सेयमुभयत्र विभाषा । तत्पुरुषे किम् । उदस्तं पुच्छं येन स उत्पुच्छः ॥

## द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ । ६ । २ । १९६ ॥

आभ्यां परेष्वेतेष्वन्तोदात्तो वा ॥ द्विपाच्चतुष्पाच्च रथाय । त्रिपादूर्ध्वः । द्विदन् । त्रिदन् । द्विमूर्धानं सप्तरश्मिम् । मूर्द्धन्नित्यकृतसमासान्त एव मूर्द्धशब्दः । तस्यैतत्प्रयोजनमसत्यपि समासान्ते अन्तोदात्तत्वं यथा स्यात् । एतदेव ज्ञापकमनित्यः समासान्तो भवतीति । तदापि च समासान्तः क्रियते तदाऽप्यस्य स्वरस्य बहुव्रीहिकार्यत्वात् समासान्तस्य तदेकदेशत्वाच्चैतत्सूत्रविहितं समासान्तोदात्तत्वं पक्षे भवत्येव । अत्र हि सूत्रे समासस्यैव कार्यित्वमुत्तरपदावयवाः समासान्ता वेति सिद्धान्तः । द्विमूर्द्धः । त्रिमूर्द्धः । द्वित्रिभ्यां किम् । कल्याणमूर्द्धा । बहुव्रीहौ किम् । द्वयोर्मूर्द्धा द्विमूर्द्धा ॥

## सक्थं चाऽक्रान्तात् । ६ । २ । १९७ ॥

कृतसमासान्तः सक्थशब्दोऽन्तोदात्तो वा बहुव्रीहौ क्रशब्दान्तात् परश्चेन्न भवति ॥ गौरसक्थः । श्लक्ष्णसक्थः । अक्रान्तात् किम् । चक्रसक्थः । समासान्तस्य षचश्चित्वान्नित्यमेवान्तोदात्तत्वं भवति ॥

## परादिश्छन्दसि बहुलम् । ६ । २ । १९८ ।

छन्दसि परस्य सक्थशब्दस्यादिरुदात्तो वा ॥ अञ्जसक्थमालभेत । अत्र वार्तिकम् ॥ परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते । पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं यत इति ॥ * ॥ तुविजाता उरुक्षया । उरूणां बहूनां क्षयावित्यर्थः । क्षयशब्दः क्षयो निवास इत्याद्युदात्तः समासस्येत्यन्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वं प्राप्तं तत्थाथादिस्वरेण बाधितमतो बाहुलकेनोत्तरपदाद्युदात्तत्वमिति वेदभाष्ये स्थितम् । परान्तः ।

नि येन मुष्टिहत्यया । मुष्ट्या हननं मुष्टिहत्या । हनस्तचेति क्यप् । कृदुत्तरपदप्रकृतिस्वरोऽत्र प्राप्तः । पूर्वान्तः । विश्वायुर्धेहि । विश्वमायुर्यस्मिन् धने इति बहुव्रीहिः । विश्वशब्दः क्वन्नन्तत्वादाद्युदात्तः । तस्य पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं प्राप्तम् । पूर्वाद्युदाहरणं आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानमिति पूर्वोक्तं द्रष्टव्यम् ॥ अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम् ॥ * ॥ त्रिचक्रेण त्रिबन्धुरेण त्रिवृतारथेन त्रिचक्रेणेत्यादौ बहुव्रीहिस्वरे प्राप्तेऽन्तोदात्तत्वं विधीयते एतदपि परान्तस्यैवोदाहरणम् । एवं पूर्वपदान्तोदात्तत्वप्रकरणे मरुद्वृधादीनां छन्दसीत्यपि पूर्वान्तोदाहरणम् ।

इत्योरम्भट्टेन श्रीधोण्डभट्टविश्वरूपात्मजेन वैजनाथभट्ट-
विश्वरूपापरनामधेयेन विरचितायां व्याकरणदीपिका-
समाख्यायां पाणिनिसूत्रवृत्तौ षष्ठस्याध्यायस्य
द्वितीयः पादः समाप्तः ॥



## अथ षष्ठाध्यायस्य तृतीयः पादः ।

### अलुगुत्तरपदे । ६ । ३ । १ ।

अलुगधिकारः प्रागानङ उत्तरपदाधिकारस्त्वा पादसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्रालुगुत्तरपदे इत्येवं तद्वेदितव्यम् । वक्ष्यति । पञ्चम्याः स्तोकादिभ्यः । स्तोकान्मुक्तः । उत्तरपदे किम् । निष्क्रान्तः स्तोकान्निस्तोकः । आनङ् ऋतो द्वन्द्वे । उत्तरपदे किम् । होतापोतृभ्याम् । पोतृशब्दस्यानङ् न भवति । इको ह्रस्वो । उत्तरपदे किम् । ग्रामणीः ॥

### पञ्चम्याः स्तोकादिभ्यः । ६ । ३ । २ ॥

एभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे ॥ स्तोकान्मुक्तः । अल्पान्मुक्तः । एवमन्तिकार्थदूरार्थकृच्छ्रेभ्यः । द्विवचनबहुवचनान्तानां स्तोकादीनां समास एव नानभिधानात् ॥ ब्राह्मणाच्छंसिन उपसंख्यानम् ॥ * ॥ ब्राह्मणे विहितानि शस्त्राण्युपचाराद् ब्राह्मणानि तानि शंसतीति ब्राह्मणाच्छंसी ऋत्विग्विशेषः । द्वितीयार्थे पञ्चम्युपसंख्यानादेव ॥

### ओजःसहोम्भस्तमसस्तृतीयायाः । ६ । ३ । ३

ओजसाकृतमित्यादि ॥ अञ्जस उपसंख्यानम् ॥ * ॥ अञ्जसाकृतम् । आर्जवेन कृतमित्यर्थः ॥ पुंसानुजो जनुषान्ध इति च ॥ * ॥ यस्याग्रजः पुमान् स पुंसानुजः । जनुषान्धो जात्यन्धः ॥

### मनसः संज्ञायाम् । ६ । ३ । ४ ।

मनसागुप्ता ॥

**आज्ञायिनि च । ६ । ३ । ५ ।**

मनस इत्येव । मनसा आज्ञातुं शीलमस्य मनसाज्ञायी ॥

**आत्मनश्च । ६ । ३ । ६ ।**

आत्मनस्तृतीयाया अलुक् ॥ पूरण इति वक्तव्यम् ॥ * ॥ पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः । आत्मनापञ्चमः । जनार्दनस्त्वात्मचतुर्थ एवेति तु बहुव्रीहिर्बोध्यः । पूरणे किम् । आत्मकृतम् ।

**वैयाकरणाख्यायां चतुर्थ्याः । ६ । ३ । ७ ।**

आत्मन इत्येव ॥ आत्मनेपदम् । आत्मनेभाषाः । तादर्थ्ये चतुर्थी । चतुर्थीति योगविभागात् समासः ॥

**परस्य च । ६ । ३ । ८ ॥**

परस्मैपदम् । परस्मैभाषाः ॥

**हलदन्तात् सप्तम्याः संज्ञायाम् । ६ । ३ । ९ ॥**

हलन्तादन्ताच्च सप्तम्या अलुक् संज्ञायाम् । त्वचिसारः । युधिष्ठिरः । अरण्येतिलकः । अत्र संज्ञायामिति सप्तमीसमासः । गविष्ठिर इत्यत्र तु गवियुधिभ्यां स्थिर इति वचनादेवालुक् । हलदन्तात् किम् । भूम्यां पशो भूमियशः । संज्ञायां किम् । अक्षशौण्डः । हृद्द्युभ्यां च ॥ * ॥ हृदिस्पृक् । दिविस्पृक् ॥

**कारनाम्नि च प्राचां हलादौ । ६ । ३ । १० ॥**

स्वामिग्राह्यो भागः कारः ॥ प्राचां देशे यत् कारनाम तत्र हलादावुत्तरपदे हलदन्तात् सप्तम्या अलुक् । मुकुटेकार्षापणम् । दृषदिमाषकः । पूर्वेण सिद्धे नियमार्थमिदम् । कारनाम्न्येव प्राचामेव

हलादावेवेति । कारनाम्नि किम् । अभ्याहितपशुः । कारादन्यस्यै-तद्द्वयस्य नाम । प्राचां किम् । यूथपशुः । हलादौ किम् । अविकटो-रणः । हलदन्तात् किम् । नद्यां दोहो नदीदोहः ॥

**मध्याद् गुरौ । ६ । ३ ११ ॥**

मध्येगुरुः । अन्ताच्च । अन्तेगुरुः ॥

**अमूर्धमस्तकात् स्वाङ्गादकामे । ६ । ३ । १२ ॥**

कण्ठेकालः । उरसिलोमा । अमूर्द्धमस्तकात् किम् । मूर्द्ध-शिखः । अकामे किम् । मुखे कामोऽस्य मुखकामः ॥

**बन्धे च विभाषा । ६ । ३ । १३ ॥**

हलदन्तात् सप्तम्या अलुक् । हस्तेबन्धः । हस्तबन्धः । चक्रेबन्धः । चक्रबन्धः । हलेति किम् । गुप्तिबन्धः ।

**तत्पुरुषे कृति बहुलम् । ६ । ३ । १४ ॥**

स्तम्बेरमः । कर्णेजपः । क्वचिन्न । कुरुचरः । विभाषा च भवति । सरसिजम् । सरोजम् ॥

**प्रावृट्शरत्कालदिवां जे । ६ । ३ । १५ ॥**

प्रावृषिजः । शरदिजः । कालेजः । दिविजः । पूर्वस्यायं प्रपञ्चः ॥

**विभाषा वर्षक्षरशरवरात् । ६ । ३ । १६ ॥**

एभ्यः सप्तम्या अलुक् जे । वर्षेजः । वर्षजः । क्षरेजः । क्षरजः । शरेजः । शरजः । वरेजः । वरजः ॥

**घकालतनेषु कालनाम्नः । ६ । ३ । १७ ॥**

सप्तम्या विभाषा अलुक् स्यात्। घ। पूर्वाह्णतरे। पूर्वाह्णेतरे। पूर्वाह्णतमे। पूर्वाह्णेतमे। काले। पूर्वाह्णेकाले। पूर्वाह्णकाले। तन। पूर्वाह्णतने। पूर्वाह्णेतने। कालनाम्नः किम्। शुक्लतरे॥

**शयवासवासिष्वकालात्। ६। ३। १८॥**

खेशयः। खशयः। ग्रामेवासः। ग्रामवासः। ग्रामेवासी। ग्रामवासी। अकालात् किम्। पूर्वाह्णशयः। हलदन्तादित्येव। भूमिशयः॥ अपो योनियन्मतुषु॥ *॥ अप्सु योनिरुत्पत्तिर्यस्य सोऽप्सुयोनिः। अप्सु भवोऽप्सव्यः। अप्सुमन्तावाज्यभागौ॥

**नेन्सिद्धबध्नातिषु च। ६। ३। १९॥**

इन्नन्तादिषु सप्तम्या अलुक्। स्थण्डिलशायी। साङ्काश्यसिद्धः। चक्रबद्धः॥

**स्थे च भाषायाम्। ६। ३। २०॥**

सप्तम्या अलुक् न स्यात्। समस्थः। भाषायां किम्। कृष्णोऽस्याखरेष्ठः॥

**षष्ठ्या आक्रोशे। ६। ३। २१॥**

चौरस्यकुलम्। आक्रोशे किम्। ब्राह्मणकुलम्॥ वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु॥ *॥ वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः॥ आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च॥ *॥ अमुष्यापत्यमामुष्यायणः। नडादित्वात् फक्। अमुष्य पुत्रस्य भावः आमुष्यपुत्रिका। मनोज्ञादित्वाद् वुञ्। एवमामुष्यकुलिका॥ देवानां प्रिय इति च मूर्खे। अन्यत्र देवप्रियः॥ शेपपुच्छलाङ्गूलेषु शुनः॥ *॥

शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः । दिवश्च दासे ॥ * ॥ दिवोदासः ॥

## पुत्रे ऽन्यतरस्याम् । ६ । ३ । २२ ॥

षष्ठ्याः पुत्रे परे ऽलुग्वा निन्दायाम् । दास्याः पुत्रः । दासीपुत्रः । निन्दायां किम् । ब्राह्मणीपुत्रः ॥

## ऋतो विद्यायोनिसम्बन्धेभ्यः । ६ । ३ । २३ ॥

विद्यासम्बन्धयोनिसम्बन्धवाचिन ऋदन्तात् षष्ठ्या अलुक् ॥ होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः ॥ विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम् ॥ * ॥ नेह । होतृधनम् । पितृगृहम् ॥

## विभाषा स्वसृपत्योः । ६ । ३ । २४ ॥

ऋदन्तात् षष्ठ्या अलुग्वा स्वसृपत्योः परयोः । मातुःष्वसा । मातुःस्वसा । पितुःष्वसा । पितुःस्वसा । मातृष्वसा । पितृष्वसा । दुहितुःपतिः । दुहितृपतिः ॥

## आनङ् ऋतो द्वन्द्वे । ६ । ३ । २५ ॥

विद्यायोनिसम्बन्धवाचिनामृदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे । होतापोतारौ । होतृपोतृनेष्टोद्गातारः । द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे तु होतापोतानेष्टोद्गातारः । मातापितरौ । ऋत इत्यनुवर्तमाने पुनरृत इत्युक्तेः सर्वावयवद्वारा द्वन्द्वविशेषणार्थो । तेन पितृपितामहादौ नानङ् । नकारोच्चारणमुरणरपर इति व्यावृत्त्यर्थम् । अत्र ऋकारस्य निर्दिश्यमानत्वेऽपि ङकारो मित्रावरुणावित्यादावन्त्यादेशत्वायोत्तरार्थः । पुत्रेऽन्यतरत्यामित्यतो मण्डूकप्लुत्या पुत्र इत्यनु-

वृनेरृदन्तस्य पुत्रे आनङित्यर्थात्पितापुत्रौ तानपुत्रावित्यादावानङ्-तदभावौ ॥

## देवताद्वन्द्वे च । ६ । ३ । २६ ॥

इहोत्तरपदे परे आनङ् । मित्रावरुणौ ॥ वायुशब्दप्रयोगे प्रतिषेधः ॥ * ॥ अग्निवायू । पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परिग्रहार्थम् । तेन ब्रह्मप्रजापती इत्यादौ नानङ् । एतद्धि नैकहविर्भागित्वेन श्रुतं नाऽपि लोके प्रसिद्धसाहचर्यम् ॥

## ईदग्नेः सोमवरुणयोः । ६ । ३ । २७ ॥

देवताद्वन्द्वे इत्येव । अग्नीषोमौ । अग्नीवरुणौ ॥

## इद्वृद्धौ । ६ । ३ । २८ ॥

वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्याद्देवताद्वन्द्वे । अग्नामरुतौ देवतेऽस्य आग्निमारुतं कर्म । अग्नीवरुणौ देवतेऽस्य आग्निवारुणम् । देवताद्वन्द्वे चेत्युभयपदवृद्धिः । अलौकिके वाक्ये आनङ्मीत्वं च बाधित्वा इः । वृद्धौ किम् । आग्नेन्द्रः । नेन्द्रस्य परस्येत्युत्तरपदवृद्धिप्रतिषेधः ॥ विष्णौ न ॥ * ॥ आग्नावैष्णवम् ॥

## दिवो द्यावा । ६ । ३ । २९ ॥

देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी । द्यावाक्षामा ॥

## दिवसश्च पृथिव्याम् । ६ । ३ । ३० ॥

दिव इत्येव । चात् द्यावा । आदेशेऽकारोच्चारणं सकारस्य रुत्वं मा भूदित्येतदर्थम् । द्यौश्च पृथिवी च दिवस्पृथिव्यौ । द्यावापृथिव्यौ । छन्दसि दृष्टानुविधिः । द्यावा चिदस्मै पृथिवी । दिवस्पृथिव्योररतिरित्यत्र पदकारा विसर्गं पठन्ति ॥

**उषासोषसः । ६ । ३ । ३१ ॥**

उषस्शब्दस्योषासादेशो देवताद्वन्द्वे । उषासासूर्यम् ॥

**मातरपितरावुदीचाम् । ६ । ३ । ३२ ॥**

उदीचां किम् । मातापितरौ ॥

**पितरामातरा च च्छन्दसि । ६ । ३ । ३३ ॥**

आमागन्ता पितरामातरा चामा सोमोऽमृतत्वाय गम्यात् । चाद्विपरीतमपि न मातरापितरानूचि दिष्टौ । छन्दसि किम् । मातापितरौ ॥

**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु । ६ । ३ । ३४ ॥**

भाषितः पुमान् यस्मिन्नर्थे तद्भाषितपुंस्क शब्दस्य प्रवृत्तिनिमित्तं तदस्यास्तीति भाषितपुंस्क शब्दस्वरूपम् । अर्शआद्यच् । भाषितपुंस्कादनूङ् ऊङोऽभावो यस्यामिति बहुव्रीहिः । निपातनात् पञ्चम्या अलुक् । षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात् पर ऊङभावो यथा तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च च परतः । गोस्त्रियोरिति ह्रस्वः । चित्रा गावो यस्येति लौकिकविग्रहे चित्रा अस् गो अस् इत्यलौकिकविग्रहे चित्रगुः । रूपवद्भार्यः । चित्रा जरती गौर्यस्येति विग्रहे अनेकोक्तेर्बहूनां बहुव्रीहिः । अत्र केचित् । चित्राजरतीगुः । जरतीचित्रागुर्वा । एवं दीर्घातन्वीजङ्घः । तन्वीदीर्घाजङ्घः । त्रिपदे बहुव्रीहौ प्रथमं न पुंवत् । उत्तरपदस्य मध्यमेन व्यवधानात् । द्वितीयमपि न पुंवत् । पूर्वपदत्वाभावात् । उत्तरपद-

शब्दो हि समासस्य चरमावयवे रूढः। पूर्वपदशब्दस्तु प्रथमावयवे इति वदन्ति। वस्तुतस्तु नेह पूर्वपदमाक्षिप्यते। आनङ् ऋत इत्यत्र यथा। तेनोपान्त्यस्य पुंवदेव। चित्राजरद्गुरित्यादि। अत एव चित्राजरत्यौ गावौ यस्येति द्वन्द्वगर्भे तु चित्राजरद्गुरिति भाष्यम्। कर्मधारयपूर्वपदे तु द्वयोरपि पुंवत्। जरच्चित्रगुः। कर्मधारयोत्तरपदे तु चित्रजरद्गवीकः। स्त्रियाः किम्। ग्रामणि कुलं दृष्टिरस्य ग्रामणि-दृष्टिः। स्त्रीवाचकशब्दस्येति किम्। स्त्रीप्रत्ययग्रहे भाषितपुंस्कादनूङ्। यस्मिन् तादृशस्य स्त्रीप्रत्ययान्तस्य पुंवदित्यर्थेन इडविडोऽपत्यं स्त्री इडविड्। जनपदशब्दादित्यञ्। अतश्चेति स्त्रियां लुक्। सा भार्या यस्य ऐडविडभार्य इत्यत्र इडविडित्यस्य स्त्रीप्रत्ययान्तत्वाभा-वेन पुंवत्त्वानापत्तेः। भाषितपुंस्कात् किम्। गङ्गाभार्यः। तुल्ये प्रवृत्ति-निमित्ते किम्। द्रोणीभार्यः। द्रोणशब्दः परिमाणवृत्तिः पुमान् सादृश्यनिबन्धनस्तु स्त्रियाम्। कथं गर्भिभार्यः प्रसूतभार्यः प्रजातभार्य इति। गर्भो व्रीहिः प्रसूतोऽयमित्यादिप्रयोगात् पुंस्त्वविशिष्टस्यापि बोधनाद्भाषितपुंस्कत्वमस्ति। गर्भसम्बन्धोऽपत्यापत्यवत्सम्बन्धश्चो-भयत्रापि तुल्यं प्रवृत्तिनिमित्तमित्यदोषः। अनूङ् किम्। वामोरूभार्यः। समानाधिकरणे किम्। कल्याण्याः माता कल्या-णीमाता। स्त्रियां किम्। कल्याणी प्रधानं यस्य स कल्याणीप्रधानः। अपूरणीप्रियादिष्विति किम्। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। अप्पूरणीप्रमाण्योरित्यप्समासान्तः। पुंव-द्भावनिषेधोऽप्प्रत्ययश्च प्रधानपूरण्यामेवेति वक्तव्यम्। रात्रिः पूरणी वाच्या चेत्युक्तोदाहरणे मुख्या। अन्यत्र तु कल्याणपञ्चमीकः पक्षः। नद्यृतश्चेति कप्समासान्तः। केऽण इति ह्रस्वो न कपीति

निषिद्धः । अत्र तिरोहितावयवभेदस्य पदस्यान्यपदार्थतया राचिं रप्रधानम् । कल्याणीप्रियः । प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा कान्ता क्षान्ता समा चपला दुहिता वामा अबला तनया एते प्रियादयः । सामान्ये नपुंसकम् । दृढं भक्ति र्यस्य स दृढभक्तिः । स्त्रीत्वविवक्षायान्तु दृढाभक्तिः ।

**तसिलादिष्वाकृत्वसुचः । ६ । ३ । ३५ ॥**

तसिलादिषु कृत्वसुजन्तेषु स्त्रियाः पुंवत् स्यात् । परिगणनं कर्तव्यम् । अव्याप्त्यतिव्याप्तिपरिहाराय । त्रतसौ । तरप्तमपौ । चरट्जातीयरौ । कल्पब्देशीयरौ । रूपप्पाशपौ । थाल् । तिल्थ्यनौ । बह्वीषु बहुच । बहुतः । दर्शनीयतरा । दर्शनीयतमा । पट्वितरा । पट्वितमेत्यादौ तु घरूपेति वक्ष्यमाणो ह्रस्वः परत्वात् पुंवद्भावं बाधते । पटुचरी । पटुजातीया । दर्शनीयकल्पा । दर्शनीय-देशीया । दर्शनीयरूपा । दर्शनीयपाशा । बहुथा । प्रशस्ता वृकी वृकतिः । अजाभ्यो हिता अजथ्या । अथ कथं दारदिका । अत्र हि दरदोऽपत्यं स्त्री द्व्यञ्मगधेत्यणोऽतश्चेति स्त्रियां लुक् । प्रागि-वात्कः । तसिलादिष्विति पुंवत्त्वं न प्राप्नोति कस्यापरिगणितत्वा-दिति चेत् सत्यम् । के ह्रस्वस्यावकाशो नर्तकिका । पुंवत्त्वावकाशो दारदिका । इहोभयं प्राप्नोति । पट्विकेति पुंवत्कर्मधारयेति सूत्र-भाष्यप्रामाण्येन कस्यापि परगणनं बोध्यम् ॥ शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः ॥ * ॥ बह्वीभ्यो देहीति बहुशः । अल्पशः ॥ त्वतलोर्गुणवचनस्य ॥ * ॥ शुक्लाया भावः शुक्लत्वम् । शुक्लता । गुणवचनस्य किम् । कर्त्र्या भावः कर्त्रीत्वम् । शरदः कृतार्थेत्यादौ तु सामान्ये नपुंसकम् ॥ * ॥ भस्याढे तद्धिते । सिद्धश्च प्रत्ययविधौ ।

हस्तिनीनां समूहो हास्तिकम् । बह्वीनां पूरणी बहुतिथी । अत्र डटि चिकीर्षिते प्रागेव पुंस्त्वम् । अन्यथा पुंवत्वापेक्षया प्रत्ययसन्नियोगशिष्टतिथुगागमस्यान्तरङ्गत्वेन पूर्वं प्रवृत्तौ ङ्यन्ते भत्वाभावात् पुंवत्वानापत्तिः । स्पष्टं चेदं बहुपूगगणसङ्घस्येति सूत्रे भाष्ये ॥ अढे किम् । रौहिणेयः । स्त्रीभ्यो ढगिति ढोऽत्र गृह्यते । अग्नेर्ढगिति ढकि तु पुंवदेव । आग्नायी देवताऽस्य स्थालीपाकस्याग्नेयः ॥ सपत्नीशब्दस्त्रिधा । शत्रुपर्यायात् सपत्नशब्दाच्छार्ङरवादित्वान् ङीन्येकः । समानः पतिर्यस्या इति विग्रहे विवाहनिबन्धनं पतिशब्दमाश्रित्य नित्यस्त्रीलिङ्गो द्वितीयः । स्वामिपर्यायपतिशब्देन भावितपुंस्कस्तृतीयः । आद्ययोः शिवाद्यण् । सपत्न्या अपत्यं सापत्नः । तृतीयात्तु लिङ्गविशिष्टपरिभाषया पत्युत्तरपदलक्षणो ण्य एव न त्वण् । शिवादौ रूढयोरेव ग्रहणात् । सापत्यः । कुण्डिन्या अपत्यं गर्गादित्वाद्यञ् कौण्डिन्यः । अत्र पुंवद्भावे सति टिलोपे च कौण्ड्य इति प्राप्नोति । आगस्त्यकौण्डिन्ययोरिति निपातनात् सिध्यति । ठक्छसोश्च । भवत्याश्छात्रा भावत्काः । भवदीयाः । एतद्वार्तिकमेकतद्धिते चेति सूत्रं च न कर्तव्यम् । सर्वनाम्नो वृत्तिमात्रे इति दक्षिणोत्तराभ्यामिति सूत्रस्थभाष्यकारेष्ट्या गतार्थत्वात् । सर्वमयः । सर्वकाम्यति । सर्विका भार्या यस्य सर्वकभार्यः । सर्वप्रिय इत्यादि । पूर्वस्यैवेदम् । भस्त्रैषाद्वेति लिङ्गात् । तेनाकचि एकशेषवृत्तौ च न । सर्विका । सर्वाः । मात्रग्रहणं क्वचित् सर्वनामत्वेन दृष्टानां संप्रति संज्ञाभावेऽपि पुंवद्भावार्थम् । तेन दक्षिणपूर्वायै इत्यत्र संज्ञाभावेऽपि पुंवद्भावः ॥

क्यङ्मानिनोश्च । ६ । ३ । ३६ ॥

एतयोः परतः पुंवत् । एनीवाचरति एतायते । श्येनीवाचरति श्येतायते । कुमारीवाचरति कुमारायते । हरिणीव हरितायते । गुर्वीव गुरूयते । सपत्नीव सपत्नायते । सपतीयते । युवतिरिव युवायते । पट्वीव पटूयते । पट्वीमृद्व्याविव पट्वीमृदूयते । स्वभिन्नां काञ्चिद्दर्शनीयां मन्यते दर्शनीयमानिनी । दर्शनीयां स्त्रियं मन्यते दर्शनीयमानी चैत्रः । भाषितपुंस्कादित्येव । सपत्नीयते ॥

## न कोपधायाः । ६ । ३ । ३७ ॥

कोपधायाः स्त्रिया न पुंवत् ॥ पाचिकाभार्यः । रसिकाभार्यः । मद्रिकायते । पाचिकायते । मद्रिकामानिनी ॥ कोपधप्रतिषेधे तद्धितवुग्रहणं कर्तव्यम् ॥ * ॥ नेह । पाका भार्या यस्य स पाकभार्यः ।

## संज्ञापूरण्योश्च । ६ । ३ । ३८ ॥

अनयोर्न पुंवत् ॥ दत्ताभार्यः । दत्तामानिनी । दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्ति । पञ्चमीभार्यः । पञ्चमीपाशा ॥

## वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे । ६ । ३ । ३९ ॥

वृद्धिशब्द आवर्तते । वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत् ॥ स्रौघ्नीभार्यः । माथुरीयते । माथुरीमानिनी । वृद्धिनिमित्तस्य किम् । मध्यमभार्यः । तद्धितस्य किम् । काण्डलावभार्यः । वृद्धिशब्देन किम् । तावद्भार्यः । रक्ते तु काषायी कन्या यस्य स काषायकन्यः । विकारे तु हैमी मुद्रिकाऽस्य हैममुद्रिकः । वृद्धिशब्देन वृद्धिं प्रति फलोपधानाभावादिह पुंवत् । वैयाकरणभार्यः । सौवश्वभार्यः । अतएव प्रवाहणस्य

परस्य वृद्धिर्न । पूर्वस्य तु वेत्यर्थके प्रवाहणस्य ढे इति सूत्रे प्रवाहणेयीभार्य इत्यत्र वृद्धिनिमित्तस्येति पुंवत्वप्रतिषेधो न प्राप्नोति । मा भूदेवं जातेरिति भविष्यतीति भाष्यं सङ्गच्छते ॥

## स्वाङ्गाच्चेतः । ६ । ३ । ४० ॥

स्वाङ्गाद्य ईकारस्तदन्ता स्त्री न पुंवत् । सुकेशीभार्यः । स्वाङ्गात् किम् । पटुभार्यः । ईतः किम् । अकेशभार्यः ॥ अमानिनीति वक्तव्यम् ॥ * ॥ सुकेशमानिनी ॥

## जातेश्च । ६ । ३ । ४१ ॥

जातेः परो यः प्रत्ययस्तदन्ता स्त्री न पुंवत् । शूद्रा भार्या यस्य शूद्राभार्यः । ब्राह्मणीभार्यः । सौत्रस्यैवाय निषेधः । तेन हस्तिनीनां समूहो हास्तिकमित्यत्र भस्याढे इति भवत्येव ॥

## पुंवत् कर्मधारयजातीयदेशीयेषु । ६ । ३ । ४२ ॥

कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कात् पर ऊङभावो यस्मिन् तथाभूतं पूर्वं पुंवत् ॥ पूरणीप्रियादिष्वप्राप्तः पुंवद्भावो विधीयते । महानवमी । कृष्णाचतुर्दशी । तथा कोपधादेः प्रतिषिद्धः पुंवद्भावः कर्मधारयादौ प्रतिप्रसूयते । पाचकस्त्री । दत्तभार्या । पञ्चमभार्या । सौघ्नभार्या । सुकेशभार्या । ब्राह्मणभार्या । एवं पाचकजातीया । पाचकदेशीयेत्यादि । कुक्कुट्यादीनामण्डादिषु ॥ * ॥ कुक्कुट्या अण्डं कुक्कुटाण्डम् । मृग्याः पदं मृगपदम् । मृगक्षीरम् । काकशावः ॥

## घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः । ६ । ३ । ४३ ॥

भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात् घरूप-कल्पप्रत्ययेषु परेषु चेलडादिषु चोत्तरपदेषु ॥ ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रेत्यादि । ब्रूञः पचाद्यचि वच्यादेशगुणयोरभावोऽपि निपात्यते । चेलादीनि वृत्तिविषये कुत्सनवाचीनि । तैः कुत्सितानि कुत्सनैरिति समासः । ङ्यः किम् । दत्तात्तरा । अनेकाचः किम् । नद्याः शेषस्यान्यतरस्यामिति वक्ष्यति । भाषितपुंस्कात् किम् । आमलकीतरा । कुवलीतरा ॥

## नद्याः शेषस्यान्यतरस्याम् । ६ । ३ । ४४ ॥

अङ्यन्तनद्याः ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात् ॥ ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा । स्त्रितरा । स्त्रीतरा । कृन्नद्या न ॥ * ॥ लक्ष्मीतरा ॥

## उगितश्च । ६ । ३ । ४५ ॥

उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात् ॥ विदुषितरा । ह्रस्वाभावे तसिलादिष्विति पुंवत् । विद्वत्तरा । वृत्यादिषु तु विदुषीतरेत्यप्युदाहृतं तन्निर्मूलम् ॥

## आन्महतः समानाधिकरणजातीययोः । ६ । ३ । ४६ ॥

महत आकारोऽन्तादेशः स्यात् समानाधिकरणे उत्तरपदे जातीये च परे ॥ महाब्राह्मणः । महादेवः । महाजातीयः । समानाधिकरणे किम् । महतः सेवा महत्सेवा । लाक्षणिकं विहाय प्रतिपदोक्तः सन्महदिति समासो ग्रहीष्यत इति चेन्महाबाहुर्न स्यात् । तस्माल्लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येति परिभाषा नेह प्रवर्तते ।

समानाधिकरणग्रहणसामर्थ्यात् । अमहान्महान्सम्पन्नो महद्भूतश्चन्द्रमा इत्यत्र तु गौणत्वान्महदर्थस्य न भवत्यात्वम् । एकादशेत्यत्र तु आदिति योगविभागादात्वम् । प्रागेकादशभ्य इति निर्देशाद्वा । महतीशब्दस्य पुंवत्कर्मधारयेति पुंवद्भावे कृते आत्वम् । महाजातीया ॥ महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च ॥ * ॥ असामानाधिकरण्यार्थमिदम् । महतो महत्या वा घासो महाघासः महाकरः । महाविशिष्टः ॥ अष्टनः कपाले हविषि ॥ * ॥ अष्टाकपालः ॥ गवि च युक्ते ॥ गोशब्दे परे युक्त इत्यर्थे गम्येऽष्टन आत्वं वक्तव्यमित्यर्थः । अष्टागवं शकटम् । अच् प्रत्यन्ववेत्यत्राजिति योगविभागाद्बहुव्रीहावप्यच् । अष्टानां गवां समाहारोऽष्टगवम् । तद्युक्तत्वाच्छकटमष्टागवमिति वा ॥

## द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः । ६ । ३ । ४७ ॥

आत् स्यात् । द्वौ च दश च द्वादश । द्व्यधिका दशेति वा । द्वाविंशतिः । अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् । द्व्यष्टनः किम् । पञ्चदश । संख्यायां किम् । द्वैमातुरः । अबहुव्रीह्यशीत्योः किम् । द्वित्राः । द्व्यशीतिः । प्राक्शताद्वक्तव्यम् ॥ * ॥ नेह । द्विशतम् । द्विसहस्रम् । अष्टशतम् । अष्टसहस्रम् ॥

## त्रेस्त्रयः । ६ । ३ । ४८ ॥

त्रिशब्दस्य त्रयस् स्यात् पूर्वविषये । त्रयोदश । त्रयोविंशतिः । बहुव्रीहौ तु त्रिदश । त्रिदशाः । सुजर्थे बहुव्रीहिः । अशीतौ तु त्र्यशीतिः । प्राक् शतादित्येव । त्रिशतम् । त्रिसहस्रम् ॥

## विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् । ६ । ३ । ४९ ॥

द्व्यष्टनोस्त्रेश्च प्रागुक्तं वा स्यात् चत्वारिंशदादौ परे । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । एवं पञ्चाशत्षष्टिसप्ततिनवतिषु ।

## हृदयस्य हृल्लेखयदण्लासेषु । ६ । ३ । ५० ॥

हृदयं लिखतीति हृल्लेखः । हृदयस्य प्रियं हृद्यम् । हृदयस्येदं हार्दम् । हृल्लासः । लेखेत्यणन्तस्य ग्रहणम् । घञि तु हृदयलेखः । लेखग्रहणमेव ज्ञापकम् । उत्तरपदाधिकारे तदन्तविधिर्नास्तीति ॥

## वा शोकष्यञ्रोगेषु । ६ । ३ । ५१ ॥

हृच्छोकः । हृदयशोकः । सौहार्द्यम् । सौहृदय्यम् । हृद्रोगः । हृदयरोगः । हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति तेन सिद्धे प्रपञ्चार्थमिदम् ॥

## पादस्य पदाज्यातिगोपहतेषु । ६ । ३ । ५२ ॥

एषूत्तरपदेषु पादस्य पद इत्यदन्त आदेशः स्यात् । पादाभ्यामजतीति पदाजिः । पदातिः । अज्यतिभ्यां पादे चेतीण् प्रत्ययः । अजेर्व्यभावो निपातनात् । पदगः । पदोपहतः ॥ पादशब्दो वृषादित्वादाद्युदात्त इति पदादेश उपदेश एवान्तोदात्तो निपात्यते । तेन पदोपहत इति तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वेनान्तोदात्ते तदेकादेशः पक्षे स्वरितः । पदाजिरित्यादौ तु कृत्स्वरेण समासस्यैवान्तोदात्तत्वम् ॥

## पद्यत्यतदर्थे । ६ । ३ । ५३ ॥

पादस्य पद् स्यादतदर्थे यति परे । पादौ विध्यन्ति पद्याः

शर्करा: । अतदर्थे किम् । पादार्थमुदकं पाद्यम् ॥ इके चरतावुपसंख्यानम् ॥ * ॥ पादाभ्यां चरति पदिकः । पर्पादित्वात् ष्ठन् ॥

**हिमकाषिहतिषु च । ६ । ३ । ५४ ॥**

पद्धिमम् । पत्काषी । पद्धतिः ॥

**ऋचः शे । ६ । ३ । ५५ ॥**

ऋचः पादस्य पत् स्याच्छे परे । गायत्रीं पच्छः शंसति । पादम्पादमित्यर्थः । ऋचः किम् । पादशः कार्षापणं ददाति ॥

**वा घोषमिश्रशब्देषु । ६ । ३ । ५६ ॥**

पादस्य पत् । पद्घोषः । पादघोषः । पन्मिश्रः । पादमिश्रः । पच्छब्दः । पादशब्दः ॥ निष्के चेति वाच्यम् ॥ * ॥ पन्निष्कः । पादनिष्कः ॥

**उदकस्योदः संज्ञायाम् । ६ । ३ । ५७ ॥**

उदमेघः ॥ उत्तरपदस्य चेति वक्तव्यम् ॥ * ॥ क्षीरोदः ॥

**पेषंवासवाहनधिषु च । ६ । ३ । ५८ ॥**

उदपेषं पिनष्टि । उदवासः । उदवाहनः । उदधिर्घटः । समुद्रे तु पूर्वेण सिद्धम् ॥

**एकहलादौ पूरयितव्येऽन्यतरस्याम् । ६ । ३ । ५९ ॥**

उदकुम्भः । उदककुम्भः । एकेति किम् । उदकस्थाली । पूरयितव्ये किम् । उदकपर्वतः ॥

**मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च । ६ । ३ । ६० ॥**

उदमन्थः । उदकमन्थः । उदौदनः । उदकौदनः । इत्यादि ॥

**इको ह्रस्वो ऽङ्यो गालवस्य । ६ । ३ । ६१ ॥**

इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे । ग्रामणिपुत्रः । ग्रामणीपुत्रः । इकः किम् । रमापतिः । अङ्य इति किम् । गौरीपतिः । गालवग्रहणं पूजार्थम् । अन्यतरस्यामित्यनुवृत्तेः ॥ इयङुवङ्भाविनामव्ययानाञ्च नेति वक्तव्यम् ॥ * ॥ श्रीमदः । भ्रूभङ्गः । शुक्लीभावः । अभ्रुकुंसादीनामिति वक्तव्यम् ॥ * ॥ भ्रुकुंसः । भ्रुकुटिः । भ्रूकुंसः । भ्रूकुटिः । अकारो ऽनेनेति विधीयत इति व्याख्यानान्तरम् । भ्रकुंसः । भ्रकुटिः । भ्रूवा कुंसो भाषणं शोभा वा यस्य स स्त्रीवेषधारी नर्तकः । भ्रुवः कुटिः कौटिल्यम् ॥

**एकतद्धिते च । ६ । ३ । ६२ ॥**

एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च ॥ एकस्या आगतमेकरूप्यम् । एकक्षीरम् ॥

**ङ्यापोः संज्ञाछन्दसोर्बहुलम् । ६ । ३ । ६३ ॥**

रेवतिपुत्रः । अजक्षीरम् ॥

**त्वे च । ६ । ३ । ६४ ॥**

त्वप्रत्यये ङ्यापोर्बहुलं ह्रस्वः संज्ञाछन्दसोः । अजत्वम् । रोहिणित्वम् । संज्ञाया असम्भवाच्छन्दस्येवोदाहरणम् ॥

**इष्टकेषीकामालानां चिततूलभारिषु । ६ । ३ । ६५ ॥**

इष्टकादीनां तदन्तानां च पूर्वपदानां चितादिषु क्रमादुत्तर-

पदेषु ह्रस्वः स्यात् ॥ इष्टकचितम्। पक्वेष्टकचितम्। इषीकतूलम्। मुञ्जेषीकतूलम्। मालभारी। उत्पलमालभारी ॥

## खित्यनव्ययस्य। ६। ३। ६६ ॥

खिदन्ते परेऽजन्तस्य पूर्वपदस्यानव्ययस्य ह्रस्वः स्यात्। खट्वम्मन्यः। कीलालपम्मन्यः। कालिम्मन्यः। हरिणिम्मन्यः। शुनिन्मन्यः। मुमा ह्रस्वो न बाध्यते अन्यथा ह्रस्वविधानमनवकाशं स्यात्। अजन्तस्य किम्। वाङ्मन्यः। कालिम्मन्या। हरिणिम्मन्येत्यादौ ह्रस्वः परत्वात् पुंवत्त्वं बाधते। अनव्ययस्य किम्। दिवामन्या रात्रिः। अनव्ययस्येत्येव ज्ञापकमिह खिदन्तग्रहणस्य ॥

## अरुर्द्विषदजन्तस्य मुम्। ६। ३। ६७ ॥

अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्ते उत्तरपदे न त्वव्ययस्य। अरुन्तुदः। मुमि कृते संयोगान्तस्य लोपः। द्विषन्तं तापयतीति द्विषन्तपः। परन्तपः। जनमेजयः। अनव्ययस्य किम्। दिवामन्या रात्रिः। अव्ययीभावस्य चेष्यते ॥ * ॥ उपकुम्भम्मन्यः ॥

## इच एकाचोऽम् प्रत्ययवच्च। ६। ३। ६८ ॥

अमित्यावर्तते। इजन्तादेकाचोऽम् स्यात् स च स्वाद्यम्वत् खिदन्ते परे। औतोऽम्शसोः। गाम्मन्यः। वाम्शसोः। स्त्रियम्मन्यः। स्त्रीम्मन्यः। ऋतो ङिसर्वनामस्थानयोः। नरम्मन्यः। अचि श्नुधातु। श्रियम्मन्यः। भुवम्मन्यः। प्रत्ययत्वमात्रातिदेशे आत्वादि न सिध्येत्। सामान्यातिदेशे विशेषानतिदेशात्। अस्यामः सुपो धात्विति लुग् न विधानसामर्थ्यात्। इचः किम्। त्वद्मन्यः।

श्रियमात्मानं मन्यते श्रिमन्यं कुलमित्यत्र तु भाष्यकारवचनात् । यथा प्रष्ठादयः शब्दाः पुंयोगात्स्त्रियां वर्तन्ते प्रष्ठी गणिकेति तथा श्रीशब्दस्य परित्यक्तस्वलिङ्गस्य क्लीबे वर्तमानस्य ह्रस्वो नपुंसक इति ह्रस्वः । मुम् तु नापवादेनामा बाधात् । स्वमोर्नपुंसकादित्यमो लुक् । अस्य तु लुको नानेन बाधो मध्येऽपवादन्यायात् ॥ नन्वेवमपि असिद्धपरिभाषया बहिरङ्गस्यामोऽन्तरङ्गो लुग् न भविष्यति । एवं तर्हि नैषा परिभाषोत्तरपदाधिकारे शक्या विज्ञातुमिहैव दोषः स्यात् द्विषन्तपः परन्तप इति संयोगान्तलोपो न स्यात् । मोऽनुस्वारश्च न स्यात् । न चैषा त्रिपाद्यां न प्रवर्तते । त्रिपाद्या असिद्धत्वादिति वाच्यम् । पूर्वस्मिन् कर्तव्ये परस्यासिद्धत्वेऽपि तत्र कृते तस्यासिद्धत्वे मानाभावेन त्रिपाद्यां कार्यकालपक्षेऽपि तदप्रवृत्तिमतस्य निर्युक्तिकत्वादिति दिक् ॥ एतेन श्रियम्मन्यमिति भवितव्यमिति भाष्ये पूर्वपक्षयुक्तिः प्रत्युक्ता । अतएव तस्मात् श्रिमन्यमित्येव भवितव्यमित्यन्ते उपसंहृतं सिद्धान्तिनेति भाष्यविचारकुशला विभावयन्तु ॥

## वाचंयमपुरन्दरौ च । ६ । ३ । ६९ ॥

वाक्पुरोरमन्तत्वं निपात्यते । वाचंयमो मौनव्रती । पुरं दारयतीति पुरन्दरः । वाचि यमो व्रते इति पूःसर्वयोर्दारिसहोरिति च खच् ॥

## कारे सत्यागदस्य । ६ । ३ । ७० ॥

मुम् स्यात् । सत्यङ्कारः । अगदङ्कारः ॥ अस्तोश्चेति वक्तव्यम् ॥ * ॥ अस्तुङ्कारः ॥ * ॥ भक्षस्य छन्दसि ॥ भक्षङ्कारः ।

छन्दसि किम् । भद्रङ्कारः । धेनोर्भव्यायाम् । धेनुम्भव्या ॥ लोकस्य पृणे ॥ * ॥ लोकम्पृणः । पृण इति मूलविभुजादित्वात् कः ॥ इत्येऽनभ्याशस्य ॥ * ॥ अनभ्याशमित्यः । दूरतः परिहर्तव्य इत्यर्थः ॥ भ्राष्ट्राग्न्योरिन्धे ॥ * ॥ भ्राष्ट्रमिन्धः । अग्निमिन्धः ॥ गिलेऽगिलस्य ॥ * ॥ तिमिङ्गिलः । अगिलस्य किम् । गिलगिलः ॥ गिलगिले च ॥ * ॥ तिमिङ्गिलगिलः ॥ उष्णभद्रयोः करणे ॥ * ॥ उष्णङ्करणम् । भद्रङ्करणम् । सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड् वा । सूतपुत्री । सूतदुहितेत्यादि । टित्वान् ङीप् । पुत्रटः स्थानिवद्भावेन दुहितृशब्दत्वेऽपि न षडिति निषेधो न । तस्य ऋन्नेभ्य इति ङीप्मात्रबाधकत्वात् । टित्वसामर्थ्याच्च शार्ङ्गरवादिष्वपि पुत्रशब्दः पठ्यते । तेन शैलपुत्री पुत्रीव हर्षं हृदये तनोतीत्यादि सङ्गच्छते ॥ नन्वत्र टित्वाण्ङीपि कृते उदात्तनिवृत्तिस्वरेणोदात्तः । ङीनन्तेन तत्पुरुषेऽपि समासस्वरेणान्तोदात्त एवेति स्वरे विशेषाभावादिदमनर्थकमिति चेत् । अत्रोच्यते । सूतादिपुंशब्देभ्यः परे ङीनन्ते तत्पुरुषे पुत्रः पुंभ्य इत्यनेन पुंशब्दात्परपुत्रशब्दान्ततत्पुरुषे पुत्रशब्दस्यादिरुदात्त इत्यर्थकेन लिङ्गविशिष्टपरिभाषया पुत्रीशब्दोकारोदात्तत्वम् । पुत्रडादेशे तु न तत्प्रवृत्तिः । सानुबन्धकत्वात् । अतस्तत्रोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वमिति दिक् ॥

## श्येनतिलस्य पाते ञे । ६ । ३ । ७१ ॥

श्येनतिलयोर्मुमागमः स्यात् ञप्रत्ययान्तपातशब्दे उत्तरपदे ॥ श्येनपातोऽस्यां वर्तते श्येनम्पाता मृगया । तिलपातोऽस्यां वर्तते तिलम्पाता स्वधा । घञः साऽस्यां क्रियेति ञ इति ञप्रत्ययः । श्येनतिलस्य किम् । दण्डपातोऽस्यां तिथौ वर्तते दाण्डपाता । ञे किम् । श्येनपातः ॥

## रात्रेः कृति विभाषा । ६ । ३ । ७२ ॥

रात्रिंचरः । रात्रिचरः । रात्रिमटः । रात्र्यटः । अखिदर्थमिदं सूत्रम् । खिति तु अरुर्द्विषदिति पूर्वविप्रतिषेधेन नित्यमेव मुम् । रात्रिम्मन्यः ॥

## नलोपो नञः । ६ । ३ । ७३ ॥

नञो नस्य लोपः स्यादुत्तरपदे । अब्राह्मणः । नञः सानुबन्धकस्य ग्रहणं किम् । कर्णपुत्रः । प्रश्नपुत्रः । पामनपुत्रः । नैकधा । अत्र नशब्देन सुप्सुपेति समासः । एवमपि स्त्रैणपुत्रे कस्मान्न भवति । प्रत्ययञित्वस्य वृद्धिस्वरयोश्चरितार्थत्वान्निपातञित्वस्यानन्यार्थत्वात्तातङ्न्यायात् ॥ नञो नलोपस्तिङि क्षेपे ॥ * ॥ अपचसि त्वं जाल्म ॥

## तस्मान्नुडचि । ६ । ३ । ७४ ॥

लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् ॥ अनश्वः । तस्मात् किम् । नञ एव मा भूत् । ननु नुक् क्रियताम् । इत्थं सति तदोः सः सावित्यत्र तौरित्युक्तावपि अनेष इत्यत्र दोषोऽपि नास्ति । न च नलोपापत्तिर्विधानसामर्थ्यादिति चेन्न । ङमुडापत्तेः । न अः अनः । तमाचष्ट इति णिजन्तात्क्विपि णिटिलोपे अन्मित्रं यस्यान्मित्र इत्यादौ नञो जरमरेति स्वरापत्तेश्चेति दिक् ॥

## नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । ६ । ३ । ७५ ॥

पादिति शत्रन्तः । वेदा इत्यसुन्नन्तः । न सत्या असत्याः । न असत्या नासत्याः । न मुञ्चतीति नमुचिः । न कुलमस्य नकुलम् । नखमस्य नखम् । न स्त्री पुमान् नपुंसकम् । स्त्रीपुंसयोः पुंसक-

आद्यो निपातनात् । न क्षरतीति नक्षत्रम् । क्षीयतेः क्षरतेर्वा क्षत्रमिति निपात्यते । न क्रामतीति नक्रः । क्रमेर्डः । नाकमस्मिन्निति नाकः ॥

## एकादिश्चैकस्य चादुक् । ६ । ३ । ७६ ॥

एकादिर्नञ् प्रकृत्या स्यादेकस्यादुगागमश्च ॥ नञो विंशत्या समासे कृते एकशब्देन सह तृतीयेति योगविभागात् समासः । अनुनासिकविकल्पः । एकेन न विंशतिः एकान्नविंशतिः । एकाद्नविंशतिः । एकोनविंशतिरित्यर्थः ॥

## नगोऽप्राणिष्वन्यतरस्याम् । ६ । ३ । ७७ ॥

नग इत्यत्र नञ् प्रकृत्या वा । नगा अगाः पर्वताः । अप्राणिषु किम् । अगो वृषलः शीतेन ।

## सहस्य सः संज्ञायाम् । ६ । ३ । ७८ ।

उत्तरपदे । सपलाशम् । संज्ञायां किम् । सहयुध्वा । निपाता आद्युदात्ता इति सहशब्द आद्युदात्तस्तस्य स्थाने जायमानः सादेश उदात्तः स्याद्वाऽनुदात्त इति विचारे स्वरितः स्यादित्युपदेशो यत्र उदात्तो निपात्यते तेन सपुत्र इत्यादौ बहुव्रीहिप्रयुक्तपूर्वपदप्रकृतिस्वरेणोदात्तः । सेष्टिसपशुबन्धमित्याद्यव्ययीभावे तु समासान्तोदात्तत्वमेव ।

## ग्रन्थान्ताधिके च । ६ । ३ । ७९ ॥

अनयोरर्थयोः सहस्य सः स्यादुत्तरपदे । समुहूर्तं ज्यौतिषमधीते । कालोत्तरपदत्वादव्ययीभावे साकाले इत्यनेन न सिद्धिः । सद्रोणा खारी ॥

### द्वितीये चानुपाख्ये। ६। ३। ८०॥

उपाख्यं प्रत्यक्षं तद्भिन्ने ऽनुमेये द्वितीये सहस्य सः स्यात्॥ सराक्षसीका निशा। राक्षसी साक्षादनुपलभ्यमाना निशयाऽनुमीयते॥

### अव्ययीभावे चाकाले। ६। ३। ८१॥

सहस्य सः स्यादव्ययीभावे न तु काले। चक्रेण युगपत् सचक्रम्। काले तु सहपूर्वाह्णम्।

### वोपसर्जनस्य। ६। ३। ८२॥

अत्रोपसर्जनस्येति मत्वर्थीयाच्प्रत्ययान्तमुत्तरपदेन सन्निधापितस्य समासस्यावयवद्वारकं विशेषणम्। सहशब्दस्य तावदसत्त्ववाचित्वाद्द्वन्द्वाभावोऽनभिधानाच्च। अन्यस्मिंस्तु समासे सर्वत्र क्वचिदवयव उपसर्जनमेवेत्युपसर्जनग्रहणसामर्थ्यात् सर्वोपसर्जनावयवः समास उपसर्जनशब्देनोच्यते। व्यधिकरणा च षष्ठी उपसर्जनस्य सर्वोपसर्जनावयवस्यार्थाद्बहुव्रीहेरवयवस्य सहस्य सः स्याद्वा उत्तरपदे। पुत्रेण सह सपुत्रः सहपुत्रो वा आगतः। अत्रोपसर्जनसर्वावयवकत्वमुपसर्जनपदेन शास्त्रीयलौकिकोभयोरपि ग्रहणाद्बोध्यम्। उक्तव्याख्यानान्नेह। सहकृत्वा। राजनि युधि कृञः। सहे चेति क्वनिप्। उपपदसमासः। सहकृत्वप्रिय इत्यत्रापि यदुत्तरपदं प्रियशब्दस्तत्परः सहशब्दो न भवतीति सादेशो न भवति॥

### प्रकृत्याऽशिषि। ६। ३। ८३॥

सहशब्दः प्रकृत्या स्यादाशिषि। स्वस्ति राज्ञे सहपुत्राय सहामात्याय॥ अगोवत्सहलेष्विति वाच्यम्॥ * ॥ सगवे। सवत्साय। सहलाय॥

**समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु । ६ । ३ । ८० ॥**

समानस्य सः स्यादुत्तरपदे न तु मूर्धादिषु ॥ अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्यः । तत्र भव इत्यर्थे सगर्भसयूथसनुताद्यन् । अमूर्द्धादिषु किम् । समानमूर्द्धा । समानप्रभृतयः । समानोदर्काः । समानस्येति योगो विभज्यते । तेन सपक्षः सधर्मा । सजातीय इत्यादि सिद्धमिति काशिका । अथवा सहशब्दो वृत्तिविषये सदृशवचनोऽस्ति । सदृशः सख्या ससखीति यथा । तेनायमस्वपदविग्रहो बहुव्रीहिः । समानः पक्षोऽस्येत्यादि ॥

**ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु । ६ । ३ । ८१ ॥**

एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात् ॥ सज्योतिः सजनपद इत्यादि ।

**चरणे ब्रह्मचारिणि । ६ । ३ । ८२ ॥**

ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने । चरणः शाखा । ब्रह्म वेदः । तदध्ययनार्थं व्रतमपि ब्रह्म । तच्चरतीति ब्रह्मचारी । समानः स सब्रह्मचारी ॥

**तीर्थे ये । ६ । ३ । ८३ ॥**

तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात् ॥ सतीर्थ्यः । एकगुरुकः । समानतीर्थे वासीति यत्प्रत्ययः । पूर्वमेव सादेशेऽप्येकदेशविकृतन्यायेन समानतीर्थशब्दत्वम् । एवञ्च सतिशिष्टत्वाद्यत्स्वर एवोदाहरणे । एतदर्थमेव विवक्षिते इति व्याख्यातम् ।

**विभाषोदरे । ६ । ३ । ८४ ॥**

यादौ प्रत्यये विवक्षिते इत्येव ॥ सोदर्यः । समानोदर्यः । समानोदरे शयित ओ चोदात्त इति यत् । साद्देशपक्षे तु सोदराद्यः ।

**दृग्दृशवतुषु । ६ । ३ । ८९ ॥**

सदृक् । सदृशः ॥ दृक्षे चेति वक्तव्यम् ॥ * ॥ सदृक्षः । त्यदादिषु दृशोऽनालोचने कञ् च । समानान्ययोश्च क्सो वक्तव्य इति कञ्क्विन्क्साः । वतुरुत्तरार्थः ॥

**इदङ्किमोरीश्की । ६ । ३ । ९० ॥**

दृग्दृशवतुषु दृक्षे च इदम ईश् किमः की स्यात् ॥ ईदृक् । ईदृशः । ईयान् । ईदृक्षः । कीदृक् । कीदृशः । कियान् । कीदृक्षः ॥

**आ सर्वनाम्नः । ६ । ३ । ९१ ॥**

सर्वनाम्न आकारान्तादेशः स्यात् दृग्दृशवतुषु दृक्षे च ॥ तादृक् । तादृशः । तावान् । तादृक्षः । दीर्घः । मन्त्वोत्वे । अमूदृक् । अमूदृशः । अमूदृक्षः ॥

**विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये । ६ । ३ । ९२**

अनयोः सर्वनाम्नश्च टेरद्र्यादेशो वप्रत्ययान्तेऽञ्चतौ परे । विश्वद्र्यङ् । देवद्र्यङ् । तद्र्यङ् । यद्र्यङ् । विश्वग्देवयोः किम् । अश्वाची । अञ्चतौ किम् । विश्वगयुक् । वप्रत्यये किम् । विष्वगञ्चनम् । वप्रत्ययग्रहणं ज्ञापयति अन्यत्र धातुग्रहणे तदादिविधिरिति । तेनायस्कारः ॥ छन्दसि स्त्रियां बहुलमिति वक्तव्यम् ॥ * ॥ देवद्रीची नयत देवयन्तः । कद्रीची । न च भवति । विश्वाची घृताची ॥

**समः समि । ६ । ३ । ९३ ॥**

वप्रत्ययान्तेऽञ्चतौ परे समः समिरादेशः स्यात् ॥ सम्यङ्। सम्यञ्चौ। सम्यञ्चः ॥

## तिरसस्तिर्यलोपे। ६। ३। ९०॥

अलोप इत्यत्र शकन्ध्वादित्वात् पररूपेणाकारः प्रश्लिष्यते ॥ अस्य अलोपो लोपाभावो यस्मिन्नञ्चतौ तस्मिन् वप्रत्ययान्ते परे तरसस्तिर्यादेशः स्यात् ॥ तिर्यङ्। तिर्यञ्चौ। तिर्यञ्चः। अलोपे किम्। तिरश्चः। तिरश्चा।

## सहस्य सध्रिः। ६। ३। ९१॥

वप्रत्ययान्तेऽञ्चतौ परे। सध्र्यङ्। सध्र्यञ्चौ। सध्रीचः। सध्रीचा। अद्रिसध्र्योरन्तोदात्तत्वं वक्तव्यम् ॥ * ॥ कृत्स्वरनिवृत्त्यर्थम्। विष्वद्र्यङ्। उदात्तस्वरितेति स्वरितोऽञ्चत्यकारो भवति ॥

## सधमादस्थयोश्छन्दसि। ६। ३। ९२

सहस्य सधादेशः स्यात्। इन्द्र त्वास्मिन्सधमादे। सोमः सधस्थम् ॥

## द्व्यन्तरुपसर्गेभ्योऽप ईत्। ६। ३। ९३॥

अप इति कृतसमासान्तस्यानुकरणम्। षष्ठ्यर्थे प्रथमा। ऋभ्योऽपस्य ईत्स्यात्। द्विर्गता आपो यस्मिन्निति द्वीपम्। अन्तरीपम्। प्रतीपम्। समीपम्। समापो देवयजनमिति तु समा आपो यस्मिन्निति बोध्यम्। कृतसमासान्तग्रहणान्नेह। स्वप्। स्वपौ। अवर्णान्ताद्वा ॥ प्रेपम्। परेपम्। प्रापम्। परापम्। उपसर्गग्रहणं प्रादुपलक्षणम्।

## ऊदनोर्देशे । ६ । ३ । ९४ ।

अनोः परस्यापस्य ऊत्स्याद्देशे । अनूपो देशः । देशे किम् अन्वीपम् । दीर्घोच्चारणमवग्रहार्थम् ।

## अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु । ६ । ३ । ९५ ॥

अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु ॥ अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यः कारकोऽन्यत्कारकः । अन्यद्रागः । अन्यस्मिन्भवोऽन्यदीयः । अन्यदुत्सुकः । अषष्ठीत्यादि किम् । अन्यस्यान्येन वाशीरन्याशीः । कारके छे च नायं निषेधः । अन्यस्य कारकोन्यत्कारकः । अन्यस्यायमन्यदीयः । गहादेराकृतिगणत्वाच्छः । द्विर्नञ्ग्रहणं स्पष्टार्थम् ॥

## अर्थे विभाषा । ६ । ३ । ९६ ॥

अन्यदर्थः । अन्यार्थः ।

## कोः कत्तत्पुरुषेऽचि । ६ । ३ । ९७ ॥

अजादावुत्तरपदे । कुत्सितोऽश्वः कदश्वः । कदन्नम् । तत्पुरुषे किम् । कूष्ट्रो राजा ॥ त्रौ च ॥ * ॥ कुत्सितास्त्रयः कत्त्रयः ।

## रथवदयोश्च । ६ । ३ । ९८ ॥

कद्रथः । कद्वदः ॥

## तृणे च जातौ । ६ । ३ । ९९ ॥

कत्तृणं नाम तृणजातिः । जातौ किम् । कुतृणानि ॥

## का पथ्यक्षयोः । ६ । ३ । १००

कापथः । काक्षः । अक्षशब्देन तत्पुरुषः । अक्षिशब्देन बहुव्रीहिर्वा ।

## ईषदर्थे । ६ । ३ । १०१ ॥

ईषज्जलं काजलम् । अजादावपि परत्वात् कादेशः । काम्लः ।

## विभाषा पुरुषे । ६ । ३ । १०२ ॥

कापुरुषः । कुपुरुषः । अप्राप्तविभाषेयम् । ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव ।

## कवं चोष्णे । ६ । ३ । १०३ ॥

उत्तरपदे कोः कवं का च वा स्यात् ॥ कवोष्णम् । कोष्णम् । कदुष्णम् ॥

## पथि च छन्दसि । ६ । ३ । १०४ ॥

पथिशब्दे उत्तरपदे कोः कव का च वा स्यात् ॥ कवोष्णम् । कोष्णम् । कदुष्णम् । पथि । कवपथः । कापथः । कुपथः ॥

## पृषोदरादीनि यथोपदिष्टम् । ६ । ३ । १०५ ॥

पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि । पृषत उदर पृषोदरम् । तलोपः । वारिवाहको बलाहकः । पूर्वपदस्य बः उत्तरपदादेश्च लत्वम् ।

भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् ।
गूढोत्मा वर्णविकृतेर्वर्णनाशात् पृषोदरम् ।

जीवनस्य मूतो जीमूतः। वनलोपः। शवानां शयनं श्मशानम्। शवस्य श्मः शयनस्य शानः। ऊर्ध्वंमुखमस्येत्युलूखलः। उर्ध्वमुखयोरुलूखलो। पिशितं शः पिशाचः। पिशितस्य आशः। आशस्य अचः। ब्रुवन्तोऽस्यां सीदन्ति बृसी। ब्रुवच्छब्दस्य बृ आदेशः। सदेरधिकरणे ड्ट्। मह्यां रौति मयूरः। रौतेरचि टिलोपो मह्या मयूः॥ एवमश्वत्थमहित्थकपित्थप्रभृतयोऽवगन्तव्याः॥ दिक्शब्देभ्यस्तीरस्य तारभावो वा॥ *॥ दक्षिणतारम्। दक्षिणतीरम्। उत्तरतारम्। उत्तरतीरम्। वाचो वादे डत्वं वल्भावश्चोत्तरपदस्येञि॥ *॥ वाचं वदति वाग्वादः तस्यापत्यं वाड्लिः। षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वञ्च धासु वेति वाच्यम्॥ *॥ षोडन्। षोडश। षोढा। षड्धा कुरु। धास्विति बहुवचनं नानाधिकरणवाचिनो धाशब्दस्य प्रतिपत्त्यर्थम्। इह मा भूत्। षड् दधातीति षड्धा। आतोऽनुपसर्गे कः स्त्रियां टाप्॥ दुरो दूभावो दाशनाशदभध्येषूत्तरपदादेः ष्टुत्वञ्च॥ *॥ दुःखेन दाश्यते नाश्यते दभ्यते दूडाशः। दूणाशः। दूडभः। खल्घञोर्दम्भेर्नलोपो निपात्यते। दुष्टं ध्यायतीति दूढ्यः। आतश्चोपसर्गे कः॥ स्वरो रोहतौ छन्दस्युत्वम्॥ *॥ एहि त्वं जाये स्वो रोहाव। लोडुत्तमद्विवचनम्॥ पीवोपवसनादीनां छन्दसि लोपः॥ *॥ पीवोपवसनानाम्। पयोपवसनानाम्। प्रियेदम्। पीवस्पयस् इत्येतयोः सलोपः। प्रिये इदमिति स्थिते इकारलोपः।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।

धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्।

आकृतिगणोऽयम्॥

**संख्याविसायपूर्वस्याह्नस्याऽहन्नन्यतरस्यां**
**ङौ। ६। ३। १०६॥**

संख्यादिपूर्वस्याह्नस्याहनादेशो वा स्याड्डौ। द्वयोरह्नोर्भवो द्व्यह्नः । द्व्यह्नि । द्व्यहनि । द्व्यह्ने । विगतमहर्व्यह्नः । व्यह्नि । व्यहनि । व्यह्ने । अह्नः सायः सायाह्नः। अतएव ज्ञापकात् समास इति द्वितीये प्रतिपादितम् । सायाह्नि । सायाहनि । सायाह्ने । सङ्ख्येत्यादि किम् । पूर्वाह्णे ।

## ढ्रलोपे पूर्वस्य दीर्घोऽणः । ६ । ३ । १०७ ॥

ढ्रलोप इति न तत्पुरुषोऽनीयरि चचारेत्यादौ च दोषात् । नापि बहुव्रीहिर्व्यधिकरणत्वात् । किन्तु णिजन्तात् कर्मण्युपपदसमासः । ढरेफौ लोपयतीति तथा तस्मिन् वर्णे अर्थाड्ढकारे रेफात्मके परे पूर्वस्याणो दीर्घः स्यात् ॥ लीढम् । मीढम् । पुना रमते । हरी-रम्यः । शम्भू राजते । अणः किम् । तृढः । वृढः । तृहू हिंसायाम् । वृहू उद्यमने । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् । अजर्घाः । लीढः ॥

## सहिवहोरोदवर्णस्य । ६ । ३ । १०८ ॥

अनयोरवर्णस्यौत् स्यात् ढलोपे । सोढा । वोढा । अवर्णस्य किम् । ऊढः । वर्णग्रहणं किम् । परत्वाद्वृद्धौ कृतायामपि यथा स्यात् । उदवोढाम् । अन्यथा तपरत्वान्न स्यात् ॥

## साढ्यै साढ्वा साढेति निगमे । ६ । ३ । १०९ ॥

सहेः क्त्वाप्रत्ययेऽस्य आद्यं द्वयं तृतीयं तृनि ओत्वाभावः पक्षे त्वाप्रत्ययस्य ध्यैभावश्च निपात्यते ॥ मरुद्भिरुग्रः पृतनासु साळ्हा । अचोर्मध्यस्थस्य डस्य ळ. ढस्य ळ्हश्च प्रातिशाख्ये विहितः । आह हि द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकारः

ल्हकारतामेति । स एव चास्य ढकारः सन्नूष्मणा सम्प्रयुक्त इति अन्याचार्यस्य द्वयोः स्वरयोर्मध्यमेत्य स डकारः प्रातिशाख्ये पूर्वोक्तरूपो लकारः सम्पद्यते इति अन्याचार्यस्य द्वयोः स्वरयोर्मध्यमेत्य स एव प्रातिशाख्ये पूर्वोक्तरूप एव ढकारः ऊष्मणा सम्प्रयुक्तः सन् ल्हकारतामेतीति चान्वयः ॥

## संहितायाम् । ६ । ३ । ११० ॥

अधिकारोऽयम् । वक्ष्यति । द्व्यचोऽतस्तिङः । विद्मा हि त्वा सत्पतिं शूरगोनाम् । संहितायां किम् । पदपाठे मा भूत् ।

## कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य । ६ । ३ । १११ ॥

कर्णशब्दे परे लक्षणवाचकस्य दीर्घः । द्विगुणाकर्णः । दात्राकर्णः । यत्पशूनां स्वामिविशेषसम्बन्धे ज्ञानार्थं दात्राकारादि क्रियते तदिह लक्षणम् । तेन लम्बकर्णो न । लक्षणस्य किम् । शोभनकर्णः । अविष्टादीनां किम् । विष्टकर्णः । अष्टकर्णः पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ॥

## नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ । ६ । ३ । ११२ ॥

क्विबन्तेष्वेषु पूर्वपदस्य दीर्घः । उपानत् । नीवृत् । प्रावृट् । मर्मावित् । नीरुक् । अभीरुक् । ऋतीषट् । सहेः पृतनर्ताभ्यां चेत्यत्र सहेरिति योगविभागादनुक्तसमुच्चयार्थाच्चकाराद्वा षत्वमिति न्यासकारः । पूर्वपदादिति षत्वमिति हरदत्तः । परीतत् । क्वाविति किम् । परिणहनम् । विभाषा पुरुष इत्यतो मण्डूकप्लुत्या विभाषाऽनुवर्तते । सा च व्यवस्थिता । तेन गतिकारकयोरेव । नेह । पटुरुक् । तिग्मरुक् ॥

## वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् । ६ । ३ । ११३ ॥

कोटरादीनां वने परे किंशुलकादीनां गिरौ परे दीर्घः स्यात् सञ्ज्ञायाम् । कोटरावणम् । सारिकावणम् । सिध्रकावणम् । मिश्रकावणम् । पुरगावणम् । वनं पुरगेति णत्वविधौ कोटरान्ताः पञ्चात्र कोटरादयो बोध्याः । किंशुलकागिरिः । अञ्जनागिरिः । किंशुलक अञ्जन भञ्जन लोहित कुक्कुट किंशुलकादिः । कोटेति किम् । असिपत्रवनम् । कृष्णागिरिः ।

## वले । ६ । ३ । ११४ ॥

वलप्रत्यये परे दीर्घः स्यात् संज्ञायाम् । कृषीवलः । दन्तावलः । सञ्ज्ञायां किम् । भ्रातृवलः । पुत्रवलः । शत्रुवलः । रजः कृषीत्यत्रान्येभ्योऽपि दृश्यत इति वलच् ॥

## मतौ बह्वचोऽनजिरादीनाम् । ६ । ३ । ११५ ॥

अमरावती । वारणावती । अनजिरादीनां किम् अजिरवती । राजहंसवती । बह्वचः किम् । व्रीहिमती । सञ्ज्ञायामित्येव । नेह । वलयवती ।

## शरादीनां च । ६ । ३ । ११६ ॥

संज्ञायामित्येव । शरावती । पद्मावती । शर पद्म धूम वंश अहि कपि मणि मुनि शुचि शरादयः ।

## इको वहे ऽपीलोः । ६ । ३ । ११७ ॥

इगन्तस्य दीर्घः स्यात् वहे ॥ ऋषीवहम् । कपीवहम् । इकः

किम् । पिण्डवहम् । अपीलोः किम् । पीलुवहम् ॥ अपील्वादीना-मिति वक्तव्यम् ॥ * ॥ दारुवहम् ।

**उपसर्गस्य घञ्यमनुष्ये बहुलम् । ६ । ३ । ११८ ॥**

उपसर्गस्य बहुलं दीर्घः स्यात् घञन्ते परे न तु मनुष्ये ॥ परिपाकः । परीपाकः । अपामार्गः । न च भवति । प्रसवः । प्रसरः । प्रवादः । साद्कारयोः कृत्रिमे । प्रासादः । प्राकारः । नेह प्रसादः । प्रकारः ॥ प्रतिवेशादीनां वा ॥ * ॥ प्रतिवेशः । प्रतीवेशः । प्रतिकारः । प्रतीकारः । अमनुष्ये किम् । निषादः ॥

**इकः काशे । ६ । ३ । ११९ ॥**

इगन्तस्योपसर्गस्य दीर्घः । वीकाशः । नीकाशः । इकः किम् । प्रकाशः । पचाद्यजन्तः काशशब्दोऽयम् । यद्वाऽत्र घञीत्यनु-वृत्त्या इगन्तस्यैव काशे इति नियमार्थमिदम् ॥

**दस्ति । ६ । ३ । १२० ॥**

इगन्तोपसर्गस्य दीर्घः स्याद्दादेशो यस्तकारस्तदादावुत्तर-पदे । तरि चेति चर्त्वमाश्रयात् निर्दत्तम् । नीतम् । वीतम् । दः किम् । वितीर्णम् । ति किम् । सुदत्तम् । इकः किम् । प्रत्तम् ॥

**अष्टनः संज्ञायाम् । ६ । ३ । १२१ ॥**

अष्टापदम् । अष्टावक्रः । संज्ञायां किम् । अष्टपुत्रः ॥

**छन्दसि च । ६ । ३ । १२२ ॥**

अष्टनो दीर्घः स्यादुत्तरपदे । अष्टापदी ।

**चितेः कपि । ६ । ३ । १२३ ॥**

एकचितीकः । द्विचितीकः ।

## विश्वस्य वसुराटोः । ६ । ३ । १२४ ॥

विश्वशब्दस्य दीर्घः स्याद्वसौ राट्शब्दे च परे ॥ विश्वं वसु यस्य स विश्वावसुः । राडिति पदान्तोपलक्षणार्थम् । चर्त्वं-मविवक्षितम् । विश्वाराट् । विश्वाराड् । विश्वराजौ । विश्वराजः । विश्वाराड्भ्यामित्यादि ॥

## नरे संज्ञायाम् । ६ । ३ । १२५ ॥

विश्वस्य दीर्घः । विश्वा नरो यस्य वैश्वानरिः पुत्रः । संज्ञायां किम् । विश्वे नरा अस्य विश्वनरो राजा ।

## मित्रे चर्षौ । ६ । ३ । १२६ ॥

विश्वामित्रो नाम ऋषिः । ऋषौ किम् । विश्वमित्रो माणवकः ॥

## मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ । ६ । ३ । १२७ ॥

दीर्घः स्यात् ॥ सोमावतीम् । अश्वावतीम् । इन्द्रियावान् मदिन्तमः । विश्वकर्मणा विश्वदेव्यावता ॥

## ओषधेश्च विभक्तावप्रथमायाम् । ६ । ३ । १२८ ॥

दीर्घः स्यान्मन्त्रे । यदोषधीभ्यः । अदधात्योषधीषु । विभक्तौ किम् । ओषधिपते । अप्रथमायां किम् । स्थिरे यमस्योषधिः ॥

## ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् । ६ । ३ । १२९ ॥

दीर्घः स्यात् । आतून इन्द्र । नूमर्तः । उतवा घा स्यात् । मक्षू गोमन्तमीमहे । भरता जातवेदसम् । नहिति थादेशस्य ङित्त्वपक्षे ग्रहणम् । तेनेह न । शृणोत ग्रावाणः । नप्तनप्तनथना-श्चेति तबादेशः । कूमना: । अत्राते भद्रा । यत्रा नश्चक्रा । उरुष्या णः ।

उरुष्येति कण्ड्वादियगन्तो रक्षणार्थकः । लोटः सेर्हिस्तस्य लुक् । न इत्यस्य नश्च धातुस्थोरुषुभ्य इति णत्वम् ।

## इकः सुञि । ६ । ३ । १३० ॥

सुञिति निपातो गृह्यते । इगन्तस्य सुञि दीर्घः स्यादृचि ॥ अभीषुणः सखीनाम् । सुञ इति षः ।

## द्व्यचोऽतस्तिङः । ६ । ३ । १३१ ॥

द्व्यचस्तिङन्तस्याकारान्तस्य दीर्घो मन्त्रे । विद्मा हि चक्र जरसम् । द्व्यचः किम् । अश्वा भवथ वाजिनः । अतः किम् । आदेवान् वक्षि यक्षि च ।

## निपातस्य च । ६ । ३ । १३२ ॥

दीर्घो मन्त्रे । एवा हि ते ।

## अन्येषामपि दृश्यते । ६ । ३ । १३३ ॥

दीर्घः । स शिष्टप्रयोगादनुगन्तव्यः । केशाकेशि । दण्डादण्डि । मुष्टीमुष्टि । बाहूबाहवि । तुराषाट् ॥ शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु ॥ * ॥ श्वादन्त इत्यादि । यत्र न विहितं दीर्घत्वं दृश्यते च प्रयोगे तदनेन कर्तव्यम् । पुरुषः । पूरुषः । नरकः । नारक इति ॥

## चौ । ६ । ३ । १३४ ॥

लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः स्यात् । अत्र इत्यल्लोपस्य विषये अन्तरङ्गावप्येकादेशयणादेशौ न प्रवर्तेते । अकृतव्यूहा इति परिभाषया । प्राचः । प्राचा । प्रतीचः । प्रतीचा ।

सम्प्रसारणस्य । ६ । ३ । १३९ ॥

दीर्घः स्यादुत्तरपदे । कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । कुमुदगन्धेरपत्यं स्त्रीत्यर्थेऽणोऽणिञोरिति ष्यङि यङश्चाप् । पूर्वान्तवत्त्वेन ष्यङन्तत्वात् सम्प्रसारणे पूर्वत्वे चाल्विधावपि दीर्घविधिसामर्थ्यात् स्थानिवत्त्वेन संप्रसारणत्वाद्दीर्घः । व्यवस्थितविभाषया इको ह्रस्व इति ह्रस्वो न । हल इत्यनेन तु नात्र दीर्घः सम्प्रसारणपूर्वस्य हलः सम्प्रसारणनिमित्तनिरूपिताङ्गावयवत्वाभावात् । प्रत्यासत्त्या तादृशाङ्गावयवस्यैव तत्र ग्रहणात् । अत एव निहतमित्यादौ न दीर्घः ॥

इत्योरम्भट्टेन विरचितायां व्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ षष्ठस्याध्यायस्य तृतीयः पादः समाप्तः ॥



# षष्ठाध्यायस्य चतुर्थः पादः ।

## अङ्गस्य । ६ । ४ । १ ॥

आ सप्तमाध्यायपरिसमाप्तेरयमधिकारो यदित ऊर्ध्वं वक्ष्यामोऽङ्गस्येत्येवं तद्वेदितव्यम् । वक्ष्यति । हलः । हूतः । जीनः । अङ्गस्य किम् । निरुतम् । दुरुतम् । नामि । अग्नीनाम् । अङ्गस्य किम् । पामनां पश्य । लुङ्लङ्लृङ्क्ष्वडुदात्तः । अकार्षीत् । अङ्गस्य किम् । प्राकरोत् । अङ्गस्येति सम्बन्धसामान्ये षष्ठी यथायोगं विशेषेष्ववतिष्ठते । अथवा प्रातिपदिकार्थमात्रमविवक्षितविभक्त्यर्थमधिक्रियते । तदुत्तरत्र यथायोगं विपरिणम्यतेऽतोऽकारान्तादङ्गाद्भिस ऐसित्यादि सङ्गच्छते ॥

## हलः । ६ । ४ । २ ॥

अङ्गावयवाद्धलः परं यत् सम्प्रसारणं तदन्ताङ्गस्य दीर्घः स्यात् । हूतः । जीनः । अङ्गावयवात् किम् । निरुतम् । तदन्ताङ्गस्य किम् । विद्धः । तृतीये द्वितीयतृतीयेति निपातनाद्दीर्घः । अङ्गस्येति द्विरावर्तनीयम् । तत्रैकं हलो विशेषणमपरं सम्प्रसारणस्य विशेष्यम् ॥

## नामि । ६ । ४ । ३ ॥

नामि परेऽजन्ताङ्गस्य दीर्घः स्यात् । अग्नीनाम् । रामाणाम् । सुपि चेति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते । सन्निपातपरिभाषाविरोधात् । नामीत्यनेन त्वारम्भसामर्थ्यात् परिभाषा बाध्यते ॥

च्छन्दसीत्येवास्तु । न चाग्नीनामित्यादौ नित्यत्वात् पूर्वं दीर्घे कृते नुट् न स्यात् । वचनसामर्थ्यात् । न च नृणामित्यत्र नृचेति धाता धातॄणामित्यादिमन्त्रे छन्दस्युभयथेति च विकल्पेन दीर्घाभावे चारितार्थ्यम् । यदि छन्दसि ऋकारान्तभिन्नस्य नामि दीर्घाभावो न दृश्यते तदा ऋन्नद्याप इत्येव सिद्धेरिति चेन्न । नोपधाया इत्युत्तरार्थत्वात् । तेन चर्मणामिति दीर्घाभावः सिद्ध इति दिक् ।

## न तिसृचतसृ । ६ । ४ । ४ ॥

एतयोर्नामि दीर्घो न स्यात् ॥ तिसृणाम् । चतसृणाम् ।

## छन्दस्युभयथा । ६ । ४ । ५ ॥

नामि दीर्घो वा । धातॄणाम् । धातृणाम् । बह्वृचाः । तैत्तिरीयास्तु ह्रस्वमेव पठन्ति ।

## नृ च । ६ । ४ ६ ॥

नृ इत्येतस्य नामि वा दीर्घः स्यात् । नृणाम् । नॄणाम् ।

## नोपधायाः । ६ । ४ । ७ ॥

नान्तस्योपधाया दीर्घः स्यान्नामि । नलोपः । पञ्चानाम् । परमपञ्चानाम् । सप्तानाम् । अष्टानाम् । नः किम् । चतुर्णाम् । उपधायाः किम् । पञ्चानामित्यादौ पकारात्कारस्य मा भूत् । नामः प्रत्ययत्वेनाङ्गविशेषणत्वात् ॥

## सर्वनामस्थाने चासम्बुद्धौ । ६ । ४ । ८ ॥

नान्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे ॥ राजा । राजानौ । राजानः । राजानम् । राजानौ । सामानि

तिष्ठन्ति । सामानि पश्य । सर्वनामस्थाने किम् । राजनि । असम्बुद्धौ किम् । हे राजन् ॥

**वा षपूर्वस्य निगमे । ६ । ४ । ९ ॥**

नान्ताङ्गावयवस्य षपूर्वस्याच उपधाया वा दीर्घोऽसम्बुद्धौ सर्वनामस्थाने ॥ ऋभुक्षणम् । ऋभुक्षाणम् । निगमे किम् । तक्षा । तक्षाणौ ॥

**सान्तमहतः संयोगस्य । ६ । ४ । १० ॥**

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे ॥ श्रेयान् । श्रेयांसौ । श्रेयांसः । श्रेयांसम् । श्रेयांसौ । श्रेयांसि । यशांसि । शिरांसि । महान् । महान्तौ । महान्तः । महान्तम् । महान्तौ । महान्ति । उपधाग्रहणं पूर्वत्वमात्रोपलक्षणम् । पारिभाषिककार्यस्येहासम्भवात् । सर्वनामस्थाने इति च सान्तसंयोगविशेषणम् । तेन हंसशिरांसीत्यादौ न दोषः । सान्तसंयोगोऽपि प्रातिपदिकस्यैव न तु धातोर्महच्छब्दसाहचर्यात् । सुष्ठु हिनस्तीति सुहिन् । सुहिंसौ ॥

**अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् । ६ । ४ । ११ ॥**

अप्शब्दो नित्यं बहुवचनान्तः । आपः । नित्यात् परादपि नुमः प्राग्दीर्घः । प्रतिपदोक्तत्वात् । स्वाम्पि । निरवकाशत्व प्रतिपदोक्तत्वमिति पक्षे तु प्रकृते तद्विरहान्नुमेव । स्वम्पि । तृन् । कर्ता कर्तारौ कटस्य । स्वसारौ । नप्तारौ । नेष्टारौ । त्वष्टारौ । क्षत्तारौ । होतारौ । पोतारौ । प्रशास्तारौ । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे निय-

मार्थम् । तेन पितृभ्रातृप्रभृतीनां न । उद्गातृशब्दस्य तु भवत्येव । समर्थसूत्रे उद्गातार इति भाष्यप्रयोगात् ॥

इन्हन्पूषार्यम्णां शौ । ६ । ४ । १२ ॥

एषां शावेवोपधाया दीर्घो नान्यत्र ॥ दण्डीनि । वाग्मीनि । बहुवृत्रहाणि । बहुपूषाणि । बह्वर्यमाणि । अन्यत्र दण्डिनौ । वृत्रहणौ । पूषणौ । अर्यमणौ । उपधादीर्घमात्रापेक्षया नियमविज्ञानात् वृत्रहायते वृत्रहणीत्यत्राकृत्सार्वेत्यनुनासिकस्य क्वीत्यनयोर्भावाभावौ सिद्धौ ॥

सौ च । ६ । ४ । १३ ॥

इन्नादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सौ परे ॥ दण्डी । वृत्रहा । पूषा । अर्यमा । असम्बुद्धौ किम् । हे दण्डिन् । वृत्रहन् । पूषन् । अर्यमन् । योगविभाग उत्तरार्थः ।

अत्वसन्तस्य चाधातोः । ६ । ४ । १४ ॥

अत्वन्तस्योपधाया दीर्घः स्याद्धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे ॥ परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घस्ततो नुम् ॥ धीमान् । कृतवान् । भातेर्डवतुः । डित्वसामर्थ्यादभस्यापि टेर्लोपः । भवान् । शत्रन्तस्य त्वत्वन्तत्वाभावान्न दीर्घः भवतीति भवन् । धातोरप्यत्वन्तस्य दीर्घः । गोमन्तमिच्छति गोमानिवाचरति वा क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् । उगिदचामिति सूत्रे अधातोरित्यस्याधातुभूतपूर्वस्यापि नुमर्थत्वस्य वक्ष्यमाणत्वान्नुम् । गोमान् । वेधाः । चन्द्रमाः । सुपयाः । सुयशाः । सुस्रोताः । अधातोः किम् । सुष्ठु वस्ते सुवः । पिण्डं ग्रसते इति पिण्डग्रः । ग्रसु ग्लसु अदने । असम्बुद्धौ किम् । हे धीमन् । गोमन् । वेधः ।

अनुनासिकस्य क्विझलोः क्ङिति । ६ । ४ । १५ ॥

अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति ॥ प्रशान् । प्रतान् । शान्तः । शंशान्तः । तन्तान्तः । यङ्लुगन्तानम् । अनुनासिकस्य किम् । ओदनपक् । पक्वः । पङ्क्तिः । क्विझलोः किम् । गम्यते । रम्यते । क्ङिति किम् । गन्ता । रन्ता ।

अज्झनगमां सनि । ६ । ४ । १६ ॥

इह सनीत्येव दीर्घश्रुत्योपस्थितेनाच इत्यनेनाङ्गस्य विशेषणादजन्ताङ्गस्य दीर्घस्ततो हनिगम्योरिति सिद्धेऽज्ग्रहणमतिरिच्यमानं प्रवृत्तिभेदेन गमेर्विशेषणम् । अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि । चिचीषति । तुष्टूषति । चिकीर्षति । जिहीर्षति । जिघांसति । सनि चेतीणादेशो गमिरिवङ्दिगितीगादेशस्य । कर्मणि लङ् । गमेरिट् परस्मैपदेष्वित्युक्तेर्नेट् । जिगांस्यते । अधिजिगांस्यते । इङश्चेतीङादेशस्य । अधिजिगांसते । अजादेशस्येत्युक्तेर्गच्छतेर्न दीर्घः । जिगंस्यते । स्जिगंसते ॥ झलादौ किम् । इणिगादेशगमेर्जिगमिषति । अधिजिगमिषति ॥

तनोतेर्विभाषा । ६ । ४ । १७ ॥

अस्योपधाया दीर्घो वा स्यात् झलादौ सनि ॥ तितांसति । तितंसति । तितनिषति ॥

क्रमश्च क्त्वि । ६ । ४ । १८ ॥

क्रम उपधाया वा दीर्घः स्याज्झलादौ क्त्वि परे ॥ क्रान्त्वा । क्रन्त्वा । क्रमित्वा ॥

च्छ्वोः शूडनुनासिके च । ६ । ४ । १९ ॥

सतकारस्य छस्य वस्य च क्रमात् श ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति ॥ विश्नः । प्रश्नः । स्योनः । सिवेरौणादिको नः । पृच्छतीति प्राट् । अक्षद्यूः । पृष्टः । पाप्रष्टः । द्यूतः । स्यूतः । स्त्रिव भूतप्रादुर्भावे क्र्यादिः । भूतप्रादुर्भावोऽनिक्रान्तोत्पत्तिः । वान्तोऽयमित्येके । स्त्रोनानि । सतकारस्य किम् । अन्तरङ्गत्वात् पूर्वं तुकि कृते विशिष्टस्य यथा स्यात् । पुतं छादयतीति पुच्छम् । कर्मण्यण् । पृषोदरादित्वाद्धातूपपदयोष्टिलोपः । पुच्छमुदस्यतीति णिङ् । ततः क्विप् । सतक्कारस्य छस्य षकारे कृते वल्-लक्षत्वे चोत्पुडिति च यथा स्यात् । केवलस्य छस्य षकारे कृते तस्य च संयोगान्तत्वाल्लोपे उत्पुदिति मा भूत् ॥ तथा वाञ्छतेर-प्रत्यये वान् वाञ्छाविति यथा स्यात् वान् वांशाविति मा भूत् । क्ङिति किम् । द्युभ्याम् । ननु च भोः किमर्थं क्ङितीत्यनुवर्त्तयसि । न हि द्युभ्यामित्यत्र परत्वादूठि कृते पुनः प्रसङ्गविज्ञानादेकदेशविकृतस्यानन्यत्वाद्दिव उदिति तपरत्वान्मात्राकालो भविष्यति । इत्थं सति प्रश्नादिसूत्रे छग्रहणं न कर्त्तव्यमिति । लाघवञ्चैतत्कृतयस्यैव यत्वेन सिद्धेः । इन्तैतावन्तमेव तु विशेषमिह प्रतिपादयन् भगवान् यकारवकारान्तानामूठ्भाविनां यङ्लुग् नास्तीत्यत्रैव सूत्रे भाष्ये ध्वनितवान् । कैयटोऽपि स्पष्टीकृतवान्न चेदं ध्वनयिष्यद्दिवेर्यङ्लुकि देद्योति देदेतीत्यूठो भावाभावाभ्यां मन्ये नूनं महान्विशेषोऽभविष्यत् ॥ इदं च च्छ्वोरिति यदोठ् तद्विषयकम् । ज्वरेत्यूठ्भाविनोः स्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यम् । माधवादिसम्मतञ्च । मव्य बन्धने । अयं यान्त ऊठ्भावी । तेवृ देवृ देवने इत्यादयो वान्ताः ॥

## ज्वरत्वरस्रिव्यविमवामुपधायाश्च । ६ । ४ । २० ॥

ज्वरादीनामुपधावकारयोरूठ् स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये ॥ अत्र क्ङितीति नानुवर्तते । अवतेस्तुनि ओतुरिति दर्शनात् । अनुनासिकग्रहणञ्चानुवर्तते । अवतेर्मन्प्रत्यये तस्य टिलोपे ओमिति दर्शनात् । जूः । जुरौ । जूर्तिः । तूः । तुरौ । तूर्तिः । स्रूः । स्रुवौ । स्रूतिः । ऊः । उवौ । ऊतिः । मव बन्धने । मूः । मुवौ । मूतिः । यङ्लुकि ईडभावे उठि पिति गुणः । मामोति । मामूतः ।

## राल्लोपः । ६ । ४ । २१ ॥

रेफात् परयोश्छ्वोर्लोपः स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये परे ॥ मुर्छा । मूः । मुरौ । मूर्तिः । मोमोर्ति । मोमूर्तः । त्वर हिंसायाम् । तूः । तुरौ । तूर्तिः । तोतोर्ति । तोतूर्तः । तोर्थोर्ति । दोधोर्ति । वलि लोपेन सिद्धे वलोपविधानमूठो बाधनार्थम् ॥

## असिद्धवदत्राभात् । ६ । ४ । २२ ॥

असिद्धवदित्ययमधिकारो वेदितव्यः । यदित ऊर्ध्वमनुक्रमिष्यामः आ अध्यायपरिसमाप्तेस्तदसिद्धवद्भवतीत्येवं वेदितव्यम् । आभादिति विषयनिर्देशः । भसंशब्दनमभिव्याप्य यदुच्यते तत्र कर्तव्ये अत्रग्रहणं समानाश्रयत्वप्रतिपत्त्यर्थम् । तत्रेदच भवति यथान्यदाभाच्छास्त्रीयं विधीयते तदाश्रयमेवासिद्धवद्भवतीत्यर्थः । व्याश्रयन्तु नासिद्धवद्भवतीत्यर्थः । एधि । शाधि । अचेत्वशाभावयोः कृतयोर्झलक्षणं धित्वं न प्राप्नोति तयोरसिद्धत्वाद्भवति । आगहि । बहुलं छन्दसीति शपो लुक् । जहि । अनुनासिकलोपे जभावे च कृतेऽतोहेरिति लुक् प्राप्नोति । असिद्धत्वान्न भवति । आभात् किम् । अभाजि । रागः । अत

उपधाया इति वृद्धौ कर्तव्यायां नलोपो नासिद्धो भवति । अत्रग्रहणं किम् । पपुषः । चिच्युषः । लुलुवुषः । वसोः संप्रसारणमाल्लोपे यणि उवङि च कर्तव्ये नासिद्धम् । आल्लोपादीनि हि वसौ वस्वन्तस्य विभक्तौ सम्प्रसारणमिति समानाश्रयत्वाभावात् । समानाश्रयत्वं च तत्प्रयोगे प्राप्तासिद्धत्वाश्रयशास्त्रीयशब्दरूपनिमित्तसमुदायापेक्षयाऽन्यूनानतिरि- क्ताश्रयकत्वम् । तत्र पपुष इत्यादौ न्यूनः । चाखायितेत्यादावधिकः । तत्र यङ्निमित्ते ये विभाषेत्यात्वं तन्निमित्ते यस्य हल इति लोपे नासिद्धम् । अतिरिक्तमपि पूर्वविध्युपात्ततावच्छेदकरूपेणाश्रितं चेत्तदपि समानाश्रय- मेव अत एव चिणो लुक् चिणो लुक्यसिद्ध इति संगच्छते । स्त्री इयती- त्यत्र यस्येति लोपापेक्षया स्त्रिया इतीयङि अधिकस्य स्त्रीशब्दस्या- पेक्षणाद् व्याश्रयत्वमिति दिक् । नन्वेवमपि सम्प्रसारणस्य बहिर- ङ्गासिद्धत्वं कस्मान्न भवति । आभाच्छास्त्रीयान्तरङ्गपरिभाषायां प्रवर्तमानायां संप्रसारणादीनामनेनैवासिद्धत्वादेव । नन्वेवं विप्रतिषेधोऽपि न स्यात् । तथा च शातः शातयानित्यत्रा- नुनासिकलोपापेक्षया जनसनेत्यात्वं विप्रतिषेधेनेति सिद्धान्तो भज्येतेति चेन्न । विप्रतिषेधेन हि व्यवस्थायां क्रियमाणायामसि- द्धत्वं न भवति । घुमास्थेत्यत्र हल्ग्रहणाज्ज्ञापकात् । तद्धि गोद इत्यादौ परत्वादीत्वं मा भूदित्यर्थम् । यदि चात्र विप्रतिषेधो न स्याद्धल्ग्रहणाभावे सत्यपीत्वे तस्यासिद्धत्वाल्लोपेन सिद्धे तद्व्यर्थ- मेव । न च पुनरीत्वं पुनर्लोप इति चक्रकेणाव्यवस्थापत्त्या शास्त्रस्य व्यवस्थाकारित्वेन लोपेनावस्थानमित्यस्य वक्तुं शक्यत्वेऽपि विनिगम- नाविरहादीत्वेनैवावस्थानमिति कुतो नेत्यापत्तिवारणार्थं हलादावीत्वं यथा स्यादजादौ मा भूदिति व्यवस्थार्थं हल्ग्रहणं चरितार्थमिति

वाच्यम् । अविशेषेणैवेत्वं विधाय तस्याजादावाल्लोपस्यापवादस्य विधानेनैवेष्टसिद्धेः । तथाहि आतो लोप इटि च ततः घुमास्थागापाजहातिसां लोपो भवति इटि च अजादौ क्ङितीति । किमर्थं पुनरिदं ईत्वं वक्ष्यति तद्बाधनार्थम् । ततः ईत् ईच्च भवति घ्वादीनाम् । अत्र क्ङितीत्यपेक्ष्यते । ततः एर्लिङि वाऽन्यस्य संयोगादेः । न ल्यपि । मयतेरिदन्यतरस्याम् । ततः यति यति च इद्भवतीति ॥ वस्तुतस्त्वेकस्यासिद्धत्वे सिद्धेन सह तुल्यबलत्वाभावाद्युक्तो विप्रतिषेधाभावः । द्वयोरपि परस्परमसिद्धत्वं तु तुल्यबलत्वाच्चतेः कुतो न विप्रतिषेधः । परस्परदृष्ट्या परस्परमसिद्धत्वेन पर्यायप्रसङ्गे नियमार्थं शास्त्रप्रवृत्तेर्दुर्वारत्वाच्च । न च कार्यकालपक्षे विप्रतिषेध इति परिभाषाया आभीयत्वेन तद्दृष्ट्योभयोरप्यसिद्धत्वाद्विप्रतिषेधानुपपत्तिः । द्वयोः शास्त्रयोः समानाश्रयत्वे तदाश्रयाश्रयकस्यापि समानाश्रयत्वमिति वाच्यम् । विप्रतिषेधे इत्यस्या यथोद्देशत्वस्यैव सत्वात् । कार्यकालपक्षेऽपि स्वदेशत्यागाभावेनाभीयत्वाभावाच्च । आभीयत्वे तु तदुपस्थितिसामर्थ्यादेवासिद्धत्वबाधाच्चेति दिक् । तस्मात् सर्वथा भवतीह विप्रतिषेध इति स्थितम् ॥

नन्वस्याधिकारत्वेऽनुदात्तोपदेशेत्यस्योपस्थाने सत्ययमर्थो भवति एषामनुनासिकस्य लोपः स्याज्झलादौ क्ङिति परे । स चासिद्धो भवति । अत्र झलादौ क्ङित्येव निमित्ते सति यदाभीयं प्राप्नोति तस्मिन् कर्तव्ये इति । एवञ्च यत्र यदोपस्थानं तत एवारभ्य यदाभीयं तस्मिन्नेव कर्तव्येऽसिद्धत्वं स्यान्न तु ततः पूर्वस्मिन्नपि । ततश्च घ्वसोरित्येत्वं पूर्वस्मिन्धित्वे कर्तव्ये नासिद्धं स्यादिति चेत् । भवेदयं दोषः शब्दाधिकारे । अयं त्वर्थाधिकारः । अतश्चेह श्नान्नलोप इति

अथधिर्निर्णीतः । स एव प्रतिरूपमुपतिष्ठते । अत्रापि शास्त्रासिद्धत्व-मेव । तेनैधि शाधीत्यत्र स्थानिना झलन्तत्वबुद्धेरनिवर्तितत्वात्तन्नि-बन्धनं धित्वं सिध्यति । इदं पुनरिहावधेयम् । आस् सामिति स्थिते परत्वादल्लोपे तस्याभीयत्वेनासिद्धत्वात् पुनः प्रसङ्गविज्ञानेनाटि लक्ष्य-भेदाल्लक्ष्ये लक्षणस्येति न्यायाप्राप्तेः प्राप्तस्याटो लोपस्य वारणाय श्नसोरल्लोप इति तपरकरणादनित्यमिदं सूत्रम् । आटोऽसिद्धत्वेनैव लोपाप्राप्तेः । तेन देभतुरित्यत्र दम्भेर्नलोपस्यासिद्धत्वेऽप्येत्वाभ्यासलोपौ सिद्धाविति दम्भेरेत्वाभ्यासलोपौ वक्तव्याविति न कर्तव्यमित्यत एके-तिषु भाष्यकृतः ॥ वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ॥ * ॥ बभूव । बभूवतुः । बभूवुः । दिदीये । दिदीयाते । दिदीयिरे ॥

## श्नान्नलोपः । ६ । ४ । २३ ॥

श्नमः परस्य नस्य लोपः स्यात् । अनक्ति । भनक्ति । हिनस्ति । सणकारग्रहणं किम् । यज्ञानां यत्नानामित्यत्र नामीति दीर्घापेक्षया परत्वान्नलोपो मा भूत् ॥

## अनिदितां हल उपधायाः क्ङिति । ६ । ४ । २४ ॥

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात् किति ङिति । स्रस्यते । ध्वस्यते । सनीस्रस्यते । दनीध्वस्यते । अनिदितां किम् । नन्द्यते । नानन्द्यते । हलः किम् । नीयते । नेनीयते । उपधायाः किम् । नह्यते । नानह्यते । क्ङितीति किम् । स्रंसिता । ध्वंसिता ॥ लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम् ॥ * ॥ विलगितः । कृच्छ्रप्राप्तिरत्रोपतापो न तु रोगः । विकपितः । शरीरविकारोऽत्र व्याधिर्न तु स्थौल्यादि । उभयत्राप्यकर्मक-

स्यात् कर्त्तरि क्तः । आद्यः कृच्छ्रं प्राप्तः । परो व्याधितः । उपेति किम् । विलङ्घितः । विकम्पितः । रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः । * । मृगरमणमाखेटः । रजयति मृगान् । लोपे वृद्धौ च जनीजृष्क्नसु-रञ्जोऽमन्ताश्चेति मित्वाद् ह्रस्वः । मृगेति किम् । रञ्जयति पक्षिणः । रमणादन्यत्र तु रञ्जयति मृगान् तृणदानेन । घिनुणन्तो रागी त्यजर-जेति निपातनात् सिद्धः । रजकः । क्वुन् शिल्पिसंज्ञयोरित्युणादि-क्वुन्नन्तः । न तु शिल्पिनि ष्वुन्नन्तः । रजकीति पुंयोगे ङीष् । क्रियासम्बन्धमात्रविवक्षायामपुंयोगे तु रजिकेत्येव । रजनं रञ्जेः क्युन्नन्तम् । स च बाहुलकाट्टित् । तेन रजनी सिद्धा । रजस्तु युरञ्जिभ्याङ्किदित्यसुन्नन्तम् ॥

## दंशसञ्जस्वञ्जां शपि । ६ । ४ । २५ ॥

## रञ्जेश्च । ६ । ४ । २६ ॥

एषां शपि नलोपः स्यात् ॥ दंश दशने । दशनम् । दंष्ट्राख्या-पारः । पृषोदरादित्वादनुनासिकलोपः । अत एव निपातनादित्येके तेनामप्यत्रैव तात्पर्यम् । अर्थानदेशस्याधुनिकत्वात् । दशति सजति । स्वजते । रजति । रजते ॥

## घञि च भावकरणयोः । ६ । ४ । २७ ॥

रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम् । रजत्य-स्मिन् रङ्गः ॥

## स्यदो जवे । ६ । ४ । २८ ॥

स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । स्यदो वेगः । अन्यत्र स्यन्दः ॥

**अवोदैधौद्मप्रश्रथहिमश्रथाः। ६। ४। २९॥**

अवोदः। अवक्लेदनम्। उन्देरवपूर्वस्य घञि नलोपो निपात्यते। एधः। इन्धनम्। इन्धेर्घञि नलोपो गुणश्च। ओद्मः। उन्दनम्। उन्देरौणादिके मप्रत्यये नलोपो गुणश्च। प्रपूर्वस्य हिमपूर्वस्य च श्रन्थेर्घञि नलोपो वृद्ध्यभावश्च॥

**नाञ्चेः पूजायाम्। ६। ४। ३०॥**

पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात्। अञ्चिता अस्य गुरवः। अञ्चितमिव शिरो वहति। पूजायां किम्। उदक्तमुदकं कूपात्। उद्धृतमित्यर्थः॥

**क्त्वि स्कन्दिस्यन्दोः। ६। ४। ३१॥**

एतयोर्नलोपो न स्यात् क्त्वि परे। स्कन्त्वा। स्यन्त्वा अवस्कन्द्य। स्यन्दित्वेनीट्पक्षे न क्त्वा सेडित्येव सिद्धम्॥

**जान्तनशां विभाषा। ६। ४। ३२॥**

जान्तानां नशेश्च नलोपो वा स्यात् क्त्वि परे। भङ्क्त्वा। भक्त्वा। रङ्क्त्वा। रक्त्वा। मस्जिनशोरिति नुम्। तस्य पक्षे लोपः। मक्त्वा मंक्त्वा। नष्ट्वा। नंष्ट्वा। अक्त्वा। अंक्त्वा। केचिदिह झलादावित्ति वदन्ति। नेह। अञ्जित्वा। अनिदितामित्यतः क्ङितीत्यनुवर्त्य किति क्त्वीति व्याख्येयम्। सेट् क्त्वा च न किदिति तद्व्याख्यातारः। अत्र मूलं मृग्यम्॥

**भञ्जेश्च चिणि। ६। ४। ३३॥**

नलोपो वा स्यात्। अभाजि। अभञ्जि॥

**शास इदङ्हलोः। ६। ४। ३४॥**

शास उपधाया इत् स्यादङि हलादौ क्ङिति च । सर्तिशा-स्तीत्यङ् । अशिषत् । अशिषताम् । शिष्टः । शिष्टवान् । मित्राणि शास्ति मित्रशीः । क्विप् चेति क्विप् । तौ शिष्टः । आवां शिष्वः । वयं शिष्मः । अङ्हलोः किम् । शासति । शशासतुः । क्ङिति किम् । शास्ति । शास्मि । शासु अनुशिष्टावित्यस्यैव ग्रहणमङ्साहचर्यात् । तेनेह न । आशास्ते । आशास्यमानः । किन्तु अङ्विधौ परस्मैपद-कमन्येनात्मनेपदप्रक्रियायां मा समरत मा समरेतामित्याद्युदाहर-णां मते आशास्तेरप्यङ्विधौ ग्रहणं कस्मान्न अस्त्येवेति चेत् । आङः शासु इच्छायामित्यत्र कुतो नाङुदाहृतः । तस्मान्नास्तीति सत्यम् । तत्कस्मान्नेति तु विभाव्यताम् । आशासः क्वावुपसंख्यानम् ॥ * ॥ आशीः ॥

शा हौ । ६ । ४ । ३५ ॥

शास्तेः शादेशः स्याद्धौ परे । शाधि ॥

हन्तेर्जः । ६ । ४ ३६ ॥

हौ परे । जहि । श्तिपा निर्देशान्नेह । जङ्घहि ॥

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक-लोपो झलि क्ङिति । ६ । ४ । ३७ ॥

अनुनासिकेति लुप्तषष्ठीकं वनतीतरेषां विशेषणम् । अनु-नासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे । यमि रमि नमि गमि हनि मन्यतयोऽनुदात्तोपदेशाः । तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु मनु वनु तनोत्यादयः ॥ यतः । यतवान् । यत्वा । यतिः । एवं रतः अहतः इत्यादि । वनतेः वतिः क्तिन्येतत् । क्तिचि

तु न क्तिचीति प्रतिषेधेन भाव्यम् । अन्यत्र तु क्तलादौ इटा भवित-व्यमिति वृत्तिः । तनोत्यादीनाम् । ततः । ततवान् । तत्वा । ततिः । सनोतेरात्वं वक्ष्यति । एवं क्षुत इत्यादि । ङिति खल्वपि । तौ हतः । अतत । अतथाः । तनादिभ्यस्तथासोरिति सिचो वा लुक् । अक्षत अक्षथा इत्यादि । अनुदात्तेत्यादि किम् । शान्तः । क्षान्तः । अनुनासिकेति किम् । पक्वः । झलि किम् । यम्यते । क्ङिति किम् । यन्ता । उपदेशग्रहणं किम् । इह च यथा स्यात् । गतिः । रतिः । इह च मा भूत् । शान्तः । शान्तवान् ॥

वा ल्यपि । ६ । ४ । ३८ ॥

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो वा स्याल्-ल्यपि । व्यवस्थितविभाषेयम् । तेन मान्तानिटां वा नान्तानिटां व-नादीनाञ्च नित्यम् । प्रयत्य । प्रयम्य । प्ररत्य । प्ररम्य । प्रणत्य । प्रणम्य । आगत्य । आगम्य । आहत्य । अवमत्य । प्रवत्य । प्रतत्य ॥

न क्तिचि दीर्घश्च । ६ । ४ । ३९ ॥

अनिटां वनतितनोत्यादीनां दीर्घानुनासिकलोपौ न स्तः क्तिचि परे ॥ यन्तिः । रन्तिः । वन्तिः । तन्तिः ॥

गमः क्वौ । ६ । ४ । ४० ॥

अनुनासिकलोपः स्यात् ॥ अङ्गगत् ॥ गमादीनामिति वक्त-व्यम् ॥ * ॥ परीतत् । संयत् । सुनत् ॥ ऊङ् च गमादीनामिति वक्तव्यमनुनासिकलोपश्च ॥ * ॥ अग्रेगूः । परेभूः । ङित्करणमन-र्थकमन्त्यादेशेन सिद्धेः ॥

विड्वनोरनुनासिकस्यात् । ६ । ४ । ४१ ॥

विड्वनोः परयोरनुनासिकस्यात् स्यात् ॥ अब्जाः ॥ गोजाः । विजायते इति विजावा । ओण् । अवावा । अन्येभ्योऽपि दृश्यन्त इति वनिप् ॥

**जनसनखनां सञ्झलोः । ६ । ४ । ४२ ॥**

एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च परे। जातः । जातवान् । जन जनने जुहोत्यादिः । तौ जजातः । सिषासति । सातः । सातवान् । असात । असाथाः । खातः । खातवान् । चङ्खातः । झलादौ किम् । जिजनिषते । सिसनिषति । चिखनिषति ॥

**ये विभाषा । ६ । ४ । ४३ ॥**

जनसनखनामात्वं वा स्याद्यादौ क्ङिति परे ॥ जायते । जन्यते । जाजायते । जञ्जन्यते । जजायात् । जजन्यात् । जायात् । जन्यात् । सायते । सन्यते । सासायते । संसन्यते । सायात् । सन्यात् । खायते । खन्यते । चाखायते । चङ्खन्यते । खायात् । खन्यात् । चङ्खायात् । चङ्खन्यात् ॥

**तनोतेर्यकि । ६ । ४ । ४४ ॥**

आकारोन्तादेशो वा स्यात् । तायते । तन्यते । यकि किम् । तन्तन्यते ॥

**सनः क्तिचि लोपश्चास्यान्यतरस्याम् । ६ । ४ । ४५ ॥**

सनोतेः क्तिचि आत्वं वा स्याल्लोपश्च वा । सातिः । सतिः सन्तिः । न क्तिचीति दीर्घनिषेधः । वन षण सम्भक्तावित्यस्य तु सान्तिरित्येव ॥

## आर्द्धधातुके। ६। ४। ४६॥

अधिकारोऽयं न ल्यपीति यावत्। वक्ष्यति। णेरनिटि। पाच्यते। आर्द्धधातुके किम्। पाचयति॥

## भ्रस्जो रोपधयो रमन्यतरस्याम्। ६। ४। ४७॥

भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके॥ मित्वादन्त्यादचः परः। स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः। बभर्ज। बभ्रज्ज। बभर्जिथ। बभ्रज्जिथ। भ्रष्टा। भर्ष्टा। भ्रष्टव्यम्। भर्ष्टव्यम्। भर्जनम्। भ्रज्जनम्। क्ङिति रमागमं बाधित्वा नित्यत्वात् संप्रसारणम्। भृष्टः। भृष्टवान्। भृज्ज्यात्। भृज्ज्यास्ताम्। उपदेश इति वर्त्तते। तेनेह न। बरीभृज्ज्यते॥

## अतो लोपः। ६। ४। ४८॥

आर्द्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य लोपः स्यादार्द्धधातुके परे॥ गोपायिता। चिकीर्षिता। तपरकरणं किम्। याता। वाता। आर्द्धधातुके किम्। वृक्षत्वम्। उपदेशे किम्। अक्कृगत्। अयवयप्रभृतिभ्यः क्विपि वलि लोपे अत् वत्। कथं धिनुतः। कृणुतः। धिन्विकृण्व्योरचेति सौत्रक्रमेण पूर्वमकारादेशः पश्चादुप्रत्यय इति सिद्धान्तात्॥ वृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषेधेन॥ * ॥ चिकीर्षकः। चिकीर्ष्यते॥

## यस्य हलः। ६। ४। ४९॥

यस्येति संघातग्रहणम्॥ हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके। आदेः परस्य। अतो लोपः। तस्य स्थानिवत्त्वाल्लघूपधगुणो न। बेभिदिता। चेच्छिदिता। संघातग्रहणं किम्।

ईर्ष्यिता । नम्यिता । इह त्वनर्थकत्वान्न । पुत्रकाम्यिता । सन्निपातपरिभाषयेह न । गव्यिता । नाव्यिता । हलः किम् । लोलूयिता ॥

## क्यस्य विभाषा । ६ । ४ । ५० ॥

हलः परयो क्यच्क्यङोर्लोपो वा स्यादार्धधातुके ॥ आदेः परस्य । समिधिता । समिध्यिता ॥

## णेरनिटि । ६ । ४ । ५१ ॥

अनिडादावार्धधातुके परे णेर्लोपः स्यात् ॥ गयल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति वार्तिकम् ॥*॥ णिलोपस्य तु पाचयतेः पाक्तिरित्यादि क्तिजन्तमवकाश इति भावः । वस्तुतस्तु अनिटीति वचनसामर्थ्यादार्धधातुकमात्रमस्य विषयः । तथा चेयङादेरपवाद एवायम् । इयङ् । अततक्षत् । यण् । आटिटत् । गुणः । कारणा । वृद्धिः । कारकः । दीर्घः । कार्यते । ज्ञीप्सति । अत्र सनीवन्तर्धेतीडभावे अज्झनेति दीर्घः परत्वाण्णिलोपेन बाध्यते ॥ अनिटि किम् । कारयिता ॥

## निष्ठायां सेटि । ६ । ४ । ५२ ॥

णेर्लोपः स्यात् । कारितः । कारितवान् । सेटि किम् । इटि कृते णिलोपो यथा स्यान्न तु पूर्वम् । अन्यथैकाच इति निषेधादिण् न स्यात् । न च संज्ञपितः पशुरित्यत्र सनीवन्तर्धेति वेट्कत्वेन यस्य विभाषेतीट्प्रतिषेधाण्णिलोपाभावार्थं तदिति वाच्यम् । पूर्वेण दुर्वारत्वात् । यस्य विभाषेत्यत्रैकाच इत्यनुवृत्तेरिट्प्रतिषेधाभावाच्च । अत एव दरिद्रितः सिद्धः ॥

## जनिता मन्त्रे । ६ । ४ । ५३ ॥

इडादौ तृचि णिलोपो निपात्यते । यो नः पिता जनिता ॥

## शमिता यज्ञे। ६। ४। ५४॥

शमयितेत्यर्थः॥

## अयामन्ताल्वाय्येत्न्विष्णुषु। ६। ४। ५५॥

आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात्॥ णिलोपापवादः। कारयाञ्चकार। अन्त। गण्डयन्तः। तृविशिभ्यां झच् इत्यतोऽनुवर्तमाने तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्चेत्यौणादिको झच्। झोऽन्तः। गडेर्घटादित्वान्मित्वे ह्रस्वः। मण्डयन्तः। आलु। स्पृहयालुः। स्पृहिगृहीत्यादिना आलुच्। आय्य। स्पृहयाय्यः। श्रुदक्षिस्पृहिगृहिभ्य आय्य इत्यौणादिकः। इत्नु। स्तनयित्नुः। स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् इत्यौणादिकः। इष्णु। पारयिष्णवः। णेश्छन्दसीति इष्णुच्।

## ल्यपि लघुपूर्वात्। ६। ४। ५६॥

लघुपूर्वात् परस्य णेरयादेशः स्याल्ल्यपि। विगणय्य। प्रणमय्य। प्रबेभिदय्य। लघुपूर्वात् किम्। सम्प्रधार्य।

## विभाषाऽऽपः। ६। ४। ५७॥

आप्नोतेर्णेरयादेशो वा स्याल्ल्यपि। प्रापय्य। प्राप्य। इङादेशस्य लाक्षणिकत्वान्न। अध्याप्य।

## युप्लुवोर्दीर्घश्छन्दसि। ६। ४। ५८॥

ल्यपीत्यनुवर्तते। वियूय। विप्लूय। छन्दसि किम्। वियुत्य। आप्लुत्य।

## क्षियः। ६। ४। ५९॥

क्षियो ल्यपि दीर्घः स्यात्। प्रक्षीय।

### निष्ठायामण्यदर्थे । ६ । ४ । ६० ॥

ण्यदर्थो भावकर्मणी ततोऽन्यत्र निष्ठायां क्षियो दीर्घः ॥ क्षियो दीर्घादिति नत्वम् । प्रक्षीणः सः । आदिकर्मणि क्तः कर्तरि । क्षीणवान् । भावकर्मणोस्तु क्षितः कामो मया ।

### वा ऽऽक्रोशदैन्ययोः । ६ । ४ । ६१ ॥

क्षियो निष्ठायां दीर्घो वा स्यादाक्रोशे दैन्ये च ॥ क्षीणायुर्भव । क्षितायुर्भव । क्षीणोऽयं तपस्वी क्षितो वा ॥

### स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झन-ग्रहदृशां वा चिण्वदिट् च । ६ । ४ । ६२ ॥

उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात् स्यादिषु परेषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च ॥ अयमिट् चिण्वद्भावसन्नियोगशिष्टत्वात्तदभावे न । इहार्द्धधातुक इत्यधिकृत सीयुटो विशेषणं नेतरेषामव्यभिचारात् । कानि पुनरस्य योगस्य प्रयोजनानि ।

वृद्धिश्चिण्वद्युक् च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति ।

इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती ॥

चिण्वद्भावाद्वृद्धिः । भाविष्यते । भविष्यते । अभाविष्यत । अभविष्यत । अन्वभाविषाताम् । अन्वभविषाताम् । भाविषीष्ट । भविषीष्ट । भाविता । भविता । चिण्वदिट आभीयत्वेनासिद्धत्वाण्णिलोपः । भाविष्यते । पक्षे भावयिष्यते । अभाविष्यत । अभावयिष्यत । अभाविषाताम् । अभावयिषाताम् । भाविषीष्ट ।

भावयिषीष्ट। भाविता। भावयिता। सन्नन्ताद्यङन्ताच्चाविशेषः। यङ्लुगन्तात्तु बोभाविष्यते। बोभविष्यते इत्यादि। स्ताविष्यते। स्तोष्यते। अस्ताविषाताम्। अस्तोषातामित्यादि। परत्वान्नित्यत्वाच्च गुणे रपरे च कृतेऽजन्तत्वाभावेऽप्युपदेशग्रहणाच्चिण्वदिट्। आरिष्यते। स्मारिष्यते। कारिष्यते। अरिष्यते। स्मरिष्यते। करिष्यते इत्यादि। गिरतेर्लुङि ध्वमि चतुरधिकं शतम्। तथाहि। चिण्वदिटो दीर्घो न। प्रकृतस्य वलादिलक्षणस्यैवेटो वृतो वेत्यनेन दीर्घविधानात्। अगारिध्वम्। द्वितीये त्विटि वृतो वेति वा दीर्घः। अगरीध्वम्। अगरिध्वम्। एषां त्रयाणां लत्वं ढत्वं द्वित्वत्रयञ्चेति पञ्च वैकल्पिकानि। इत्थं षण्णवतिः। लिङ्सिचोरिति विकल्पादिडभावे उश्चेति कित्वमित्वं रपरत्वं हलि चेति दीर्घः। इणः षीध्वमिति नित्यं ढत्वं अगीर्ढ्वम्। ढवमानां द्वित्वविकल्पेऽष्टौ। उक्तषण्णवत्या सह सङ्कलने उक्ता सङ्ख्येति।

> इट् दीर्घश्चिण्वदिट् लत्वं ढत्वं द्वित्वचिकं तथा।
> इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम्॥

चिण्वद्भावाद्युक्। दायिष्यते। धायिष्यते। ग्लायिष्यते। दास्यते। धास्यते। ग्लास्यते। अदायिषाताम्। अधायिषाताम्। अग्लायिषाताम्। अदिषाताम्। अधिषाताम्। अग्लासाताम्। एवं दायिषीष्ट। दासीष्ट। दायिता। दातेत्यादि। चिण्वद्भावाद्वा दीर्घः। हेतुमण्ण्यन्तात् शाम्यतेः कर्मणि स्यडादयः। शामिष्यते। शमिष्यते। शमयिष्यते। अशामिष्यत। अशमिष्यत। अशमयिष्यत। अशामिषाताम्। अशमिषाताम्। अशमयिषाताम्। शामिषीष्ट। शमिषीष्ट।

शमयिषीष्ट । शमिता । शमिता । शमयिता । ण्यन्ताणिच्यप्येवम् ।
न च णिलोपस्य स्थानिवत्त्वं दीर्घविधौ तन्निषेधात् । पूर्वत्रासिद्धे न
स्थानिवदित्यवगन्तव्यं द्विर्वचनसवर्णानुस्वारदीर्घजश्चर्ग्रहणं प्रत्या-
ख्यातृणां भाष्यकाराणां मते तु णाविति जातिपरो निर्देशः ।
यङन्ताण्णिच्च शंशामिष्यते । शंशमिष्यते । शंशमयिष्यते इत्यादि ।
यङ्लुगन्ताण्णिच्यप्येवम् । भाष्यमते तु यङन्ताच्चिण्वदिटि दीर्घो
नास्तीति विशेषः । अथ हनादयः स्यादिषूदाह्रियन्ते । चिण्वद्भावा-
द्धो हन्तेरिति कुत्वम् । अचिण्णलोरित्युक्तेर्हनस्तो न । घानिष्यते ।
हनिष्यते । अघानिष्यत । अहनिष्यत । अघानिषाताम् । अहसाताम् ।
पक्षे आत्मनेपदेष्वन्यतरस्यामिति वधादेशः । अवधिषाताम्
आशीर्लिङि वधादेशस्यापवादश्चिण्वद्भावः । आर्द्धधातुके सीयुट
इति विशेषविहितत्वात् । घानिषीष्ट । पक्षे वधिषीष्ट । घानिता ।
हन्ता । न च स्यादिषु चिण्वदित्यतिदेशाद्वधादेशः स्यादिति
वाच्यम् । अङ्गस्येत्यधिकाराद्दाङ्गस्यैवातिदेशात् । अत एव । एष्यते ।
आयिष्यते । अध्येष्यते । अध्यायिष्यते इत्यादौ इणिङादेशा अपि
न भवन्ति । चिण्वदिटो न दीर्घत्वम् । प्रकृतस्य वलादिलक्षणस्यै-
वेटो ग्रहो लिटीत्यनेन दीर्घविधानात् । ग्राहिष्यते । ग्रहीष्यते ।
अग्राहिष्यत । अग्रहीष्यत । अग्राहिषाताम् । अग्रहीषाताम् ।
ग्राहिषीष्ट । ग्रहीषीष्ट । ग्राहिता । ग्रहीता । दर्शिष्यते । द्रक्ष्यते ।
अदर्शिष्यत । अद्रक्ष्यत । अदर्शिषाताम् । सिचः कित्त्वा-
दम् । अदृक्षाताम् । दर्शिषीष्ट । दृक्षीष्ट । दर्शिता । द्रष्टा ।
स्यादिषु किम् । चेतव्यम् । आर्द्धधातुके किम् । प्रस्नुयीत । कर्म-
कर्त्तरीदम् । तत्र न दुहस्नुनमामिति यकः प्रतिषेधः । क्रियेत

ह्रियेतेत्यत्र यक्सत्त्वेपि तदन्तस्यैव च मा भूत् । सति तु वृद्धियुक्तौ स्याताम् । अतो लोपो वा स्यादिति सर्वथा रूपासिद्धिः । भावकर्मणोः किम् । चेष्यति । दास्यति । अचम्हनग्रहदृशां किम् । पठिष्यते ।

## दीङो युडचि क्ङिति । ६ । ४ । ६३ ॥

दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात् । दिदीये । अचि किम् । देदीयते । क्ङिति किम् । उपदानम् ।

## आतो लोप इटि च । ६ । ४ । ६४ ॥

अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् । पपतुः । पपुः । प्रदा । प्रधा । पपिथ । तस्थिथ । अजाद्योः किम् । ग्लायते । दासीय । आर्द्धधातुकयोः किम् । यान्ति । यान्ति । व्यत्यरे । व्यत्यले ॥

## ईद्यति । ६ । ४ । ६५ ॥

यति परे आत ईत् स्यात् । गुणः । देयम् । ग्लेयम् ॥

## घुमास्थागापाजहातिसां हलि । ६ । ४ । ६६ ॥

एषामात ईत् स्याद्धलादौ क्ङित्यार्द्धधातुके ॥ दीयते । धीयते । देदीयते । देधीयते । मीयते । मेमीयते । स्थीयते । तेष्ठीयते । गीयते । जेगीयते । अध्यगीष्ट । अध्यगीष्यत । गाङ्कुटादिसूत्रे इङादेशस्यैव गाङो ग्रहणात् नेह । गाङ् गतौ । अगास्त । पा पाने । पीयते । पेपीयते । पै ओवै शोषणे इत्यस्य च नेह ग्रहणम् । यङस्य लुग्विकरणत्वादपरस्य लाक्षणिकत्वात् । हीयते । जेहीयते । जहातीति

भृजामिदितीत्वरहितनिर्देशेन ओहाङो न । अवसीयते । अवसेषी-यते । स्यतेरेव ग्रहणम् । व्याख्यानात् । तन्त्रान्तरे स्यतीति श्यना निर्देशाच्च । न तु सै जै षै क्षये इत्यस्य । हलि किम् । ददतुः । क्ङिति किम् । दाता ।

## एर्लिङि । ६ । ४ । ६७ ॥

घुसंज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके क्ङिति लिङि ॥ देयात् । धेयात् । मेयात् । स्थेयात् । गेयात् । पेयात् । हेयात् । अवसेयात् । क्ङिति किम् । दासीष्ट । जहातीति श्तिपा निर्देशान्नेह । आशिषि जाहायात् ।

## वान्यस्य संयोगादेः । ६ । ४ । ६८ ॥

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्ध-धातुके क्ङिति लिङि ॥ ग्लायात् । ग्लेयात् । अन्यस्य किम् । स्थेयात् । संयोगादेः किम् । यायात् । क्ङिति किम् । ग्लासीष्ट ।

## न ल्यपि । ६ । ४ । ६९ ॥

ल्यपि परे घुमास्थादेरात ईत्वं न ॥ प्रदाय । प्रधाय । प्रमाय । प्रगाय । प्रपाय । प्रहाय । अवसाय । मीनातिमिनोतीत्यात्वे कृते प्रमाय । निमाय । उपदाय ।

## मयतेरिदन्यतरस्याम् । ६ । ४ । ७० ॥

मेङ इकारोऽन्तादेशः स्याद्वा ल्यपि । अपमित्य । अपमाय वा याचते । याचित्वा अपमयते इत्यर्थः । उदीचां माङो व्यतीहारे इत्यपूर्वकालेऽपि विकल्पेन क्त्वा ॥

## लुङ्लङ्लृङ्क्ष्वडुदात्तः । ६ । ४ । ७१ ॥

एषु परेष्वङ्गस्याडागमः स्यात् स चोदात्तः ॥ अभूत् । अभवत् । अभविष्यत् ।

## आडजादीनाम् । ६ । ४ । ७२ ॥

अजादीनामाट् स्याल्लुङादिषु स चोदात्तः ॥ अटोऽपवादः । आटश्चेति वृद्धिः । ऐधिष्ट । ऐक्षत । ऐक्षिष्यत । कथमैज्यत । औप्यत । औह्यत । औयत इत्यादि । लङि कृते लावस्थायामेवाडागमोऽनन्तरङ्गत्वाल्लादेशः । तत्र कृते विकरणो नित्यत्वादडागमं बाधते । शब्दान्तरप्राप्तेरडागमस्यानित्यत्वम् । कृते हि विकरणे विकरणान्तस्याङ्गस्य तेन भवितव्यमकृते तु धातुमात्रस्य शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति न तु शब्दान्तरादिति विकरणो नानित्यः । विकरणे कृते सम्प्रसारणमडागमान्नित्यत्वादेव भवति । सम्प्रसारणे कृते त्वजादाङ्गम्भवतीत्याडजादीनामित्याडागमः । यद्वा उपजनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते इति न्यायेन पूर्वमड् न प्रवर्तते । सम्प्रसारणोत्तरमाडागमस्योपजनिष्यमाणनिमित्तत्वात् । अपवादोऽपि यद्यन्यत्रेति न्यायस्य तु नात्र विषयः । अडप्राप्तियोग्यविषये आटश्चारिताभ्याभावादितोऽप्यधिकं ग्रन्थगौरवभयादनुक्तं स्वयमूहनीयं सुबुद्धिभिः । अत्राजादीनामप्यटैव सिद्धिप्रकारस्तु भाष्यकैयटाभ्यामवगन्तव्यः ।

## छन्दस्यपि दृश्यते । ६ । ४ । ७३ ॥

अनजादीनामित्यर्थः । आनट् । आवः । मन्त्रे घसह्वरेति लेर्लुक् । आयुनक् । युजेर्लङ् ।

न माङ्योगे । ६ । ४ । ७४ ॥

अडाटौ न स्तः । मा भवान्भूत् । मा भवानीहिष्ट ।

बहुलं छन्दस्यमाङ्योगेऽपि । ६ । ४ । ७५ ॥

जनिष्ठा उग्रः सहसे माय: । क्षेचे पखीजान्यवाप्सु: ॥

इरयो रे । ६ । ४ । ७६ ॥

बहुलमित्यनुवर्तते । प्रथमं दध्र आपः । रेभावस्याभीयत्वे-नासिद्धत्वादातो लोपः । अत्र रेशब्दस्येटि कृते पुनरपि रेभावस्त-दर्थं सूत्रे द्विवचनान्तं निर्दिष्टमिरयोरिति । न च भवति । कर्माणि चक्रिरे ।

अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । ६ । ४ । ७७ ॥

श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्येतस्य चाङ्गस्ये-यङुवङौ स्तोऽजादौ प्रत्यये परे ॥ ङिच्चेत्यन्तादेशः । आन्तरतम्या-दिरियङ् ओरुवङ् । आप्नुवन्ति । राध्नुवन्ति । चिक्षियतुः । चिक्षियुः । लुलुवतुः । लुलुवुः । नियौ । नियः । लुवौ । लुवः । भ्रुवौ । भ्रुवः ॥ अमेर्डूप्रत्ययान्तोऽयं न तूङ् च गमादीनामित्यूङन्तः । तथा चाति धातुत्वादेव सिद्धः । अचि किम् । आप्नुयात् । श्न्वादीनां किम् । लक्ष्म्यौ । य्वोः किम् । चक्रतुः । चयनं चायको लवनं लावक इत्यादौ तु परत्वाद्गुणवृद्धी भवतः ॥ तन्वादीनां छन्दसि बहुलम् ॥ * ॥ तन्वं पुषेम तनुवं पुषेम । त्रियम्बकम् । त्र्यम्बकम् । स्वर्गं लोकम् । सुवर्गं लोकम् ।

अभ्यासस्यासवर्णे । ६ । ४ । ७८ ॥

अभ्यासस्येवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि ॥ इयाय ।

इयेष । उवोष । उवोख । इयर्ति । असवर्णे किम् । ईषतुः । अचि किम् । इयाज ।

## स्त्रियाः । ६ । ४ । ७९ ॥

स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्यये परे ॥ स्त्रियौ । स्त्रियः । स्त्रिया । स्त्रियै । स्त्रियाः २ । स्त्रियोः २ । परत्वान्नुट् । स्त्रीणाम् । स्त्रियाम् ।

## वाम्शसोः । ६ । ४ । ८० ॥

अमि शसि च परे स्त्रिया इयङ् वा स्यात् । स्त्रियम् । स्त्रीम् । स्त्रियः । स्त्रीः ।

गुणनाभावौ त्वनुङ्भिः परत्वात् पुंसि बाध्यते ।
क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् ॥
आस्योकारे च नित्यं स्यादम्शसोस्तु विभाषया ।
इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने ॥

अतिस्त्रियौ २ । अतिस्त्रयः । अतिस्त्रियम् । अतिस्त्रिम् । अतिस्त्रियः । अतिस्त्रीन् । अतिस्त्रिणा । अतिस्त्रये । अतिस्त्रेः २ । अतिस्त्रियोः २ । अतिस्त्रीणाम् । अतिस्त्रौ । क्लीबे तु नुम् । अतिस्त्रिणी २ । अतिस्त्रीणि २ । अतिस्त्रिणा । अतिस्त्रिणे । अतिस्त्रिणः २ । अतिस्त्रिणोः २ । अतिस्त्रिणि । ङेप्रभृतावजादौ वक्ष्यमाणपुंवद्भावविकल्पात् पक्षे प्राग्वद्रूपम् । स्त्रियां तु प्रायेण पुंवत् । शसि । अतिस्त्रीः । अतिस्त्रियः । टायामतिस्त्रिया । ङिति ह्रस्वश्चेति ह्रस्वान्तत्वप्रयुक्तो विकल्पः । अस्त्रीति तु इयङुवङ्स्थानावित्यस्यैव पर्युदासस्तत्सम्बद्धस्यैवानुवृत्तेर्दीर्घस्यायं निषेधो न तु ह्रस्वस्य ।

आण्नद्या इत्याट् । अतिस्त्रियै । अतिस्त्रियै । अतिस्त्रियाः २ । अतिस्त्रेः २ । अतिस्त्रियाम् । अतिस्त्रौ ।

## इणो यण् । ६ । ४ । ८१ ॥

अजादौ प्रत्यये । मध्येऽपवादन्यायेनायमियङोऽपवादः । यन्ति । यन्तु । आयन् । यण आभीयासिद्धत्वादाट् । गुणवृद्धिभ्यां परत्वादयं बाध्यते । अयनम् । आयकः ।

## एरनेकाचोऽसंयोगपूर्वस्य । ६ । ४ । ८२ ॥

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे ॥ निन्यतुः । निन्युः । कुमारीमिच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारी । कुमार्यौ । कुमार्यः । अमि शसि च । कुमार्यम् । कुमार्यः । कुमार्या । कुमार्यै । कुमार्याः । कुमारीणाम् । अत्र परत्वान्नुट् । कुमार्याम् । एः किम् । असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्यादङ्गविशेषणं मा भूत् । तथा सति प्रध्यं प्रध्यः ग्रामण्यं ग्रामण्य इत्यादि न सिध्येत् । लुलुवतुः लुलुवुरिति तु ओः सुपीति नियमादपि सिध्यति । धातुना संयोगस्य विशेषणादिह स्यादेव यण् । उन्नयतीत्युन्नीः । उन्न्यौ । उन्न्यः । उन्न्यम् । उन्न्यः । उन्न्याम् । अनेकाचः किम् । नीः । नियौ । नियः । नियम् । नियः । नियाम् । असंयोगपूर्वस्य किम् । सुश्रियौ । यवक्रियौ ॥ गतिकारकेतरपूर्वपदस्य यण् नेष्यते ॥ * ॥ शुद्धधियौ । परमधियौ । कथं तर्हि दुर्धियौ वृश्चिकभियेत्यादि । उच्यते दुःस्थिता धीर्येषामिति विग्रहे दुरित्यस्य धीशब्दम्प्रति गतित्वमेव नास्ति । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः स्युः ।

वृश्चिकशब्दस्य तु बुद्धिकृतमपादानत्वं नेह विवक्षितम् । वृश्चिक-सम्बन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपो वा ॥

## ओः सुपि । ६ । ४ । ८३ ॥

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ सुपि ॥ गतिकारकेतर-पूर्वपदस्य यण् नेष्यते । खलप्वौ । खलप्व इत्यादि । एवं सुल्वा-दयः । अनेकाचः किम् । लूः । लुवौ । लुवः । धात्ववयवेति किम् । उल्लूः । उल्लुवौ । उल्लुवः । असंयोगपूर्वस्य किम् । कटप्रूः । कटप्रुवौ । कटप्रुवः । गतीत्यादि किम् । परमलुवौ । सुपि किम् । लुलुवतुः ।

## वर्षाभ्वश्च । ६ । ४ । ८४ ॥

अस्योवर्णस्य यण् स्यादचि सुपि ॥ वर्षाभ्वौ । वर्षाभ्वः ॥ दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः ॥ * ॥ दृन्भ्वम् । दृन्भ्व इत्यादि खलपूवत् । करभ्वम् । करभ्वः । दीर्घपाठे कर एव कारः । स्वार्थिकः प्रज्ञाद्यण् । कारभ्वौ । कारभ्वः । पुनर्भूर्योगिकः पुंसि । रूढस्तु नित्यस्त्रीलिङ्गः । पुनर्भ्वावित्यादि । अमि पुनर्भ्वाम् । स्त्रि-यान्तु यणं बाधित्वा परत्वान्नुट् । पुनर्भूणाम् । एवं वर्षाभूशब्देऽपि । कैयटवृत्तिकारयोर्मतभेदनिबन्धननदीत्वविकल्पान्नुड्विकल्पो द्रष्टव्यः । भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानिति यादवः । न च नेयङुवङिति निषेधः । यणा उवङो बाधनात् । दृम्भूकाराभूशब्दौ तु स्वयंभूवत् । कथं दृम्भ्वौ दृम्भ्व इत्यादि । दृम्भतीति दृम्भूः । अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूरित्युणादिसूत्रेण कू इत्यादितः

तत्र हुश्नो यणचीति यण् । स च दृम्भ्वं दृम्भ्वनित्यत्र बाध्यते । दृम्भूरित्यत्र तु दृन्निति नान्ते हिंसार्थेऽव्यये भुवः क्विबिति विशेषः ॥

**न भूसुधियोः । ६ । ४ । ८५ ॥**

गतयोर्यण् न स्यादचि सुपि ॥ स्वभुवौ । स्वभुवः । सुधियौ । सुधिय इत्यादि ।

**छन्दस्युभयथा । ६ । ४ । ८६ ॥**

भूसुधियोर्यण् स्यादियङुवङौ च । वनेषु चित्रं विभ्वं विभुवं वा । सुधियो नव्यमग्ने सुध्यो वा ।

**हुश्नुवोः सार्वधातुके । ६ । ४ । ८७ ॥**

जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चासंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके ॥ उवङोऽपवादः । जुह्वति । जुह्वतु । अजुह्वत । शृण्वन्ति । सुन्वन्ति । चिन्वन्ति । हुश्नुवोः किम् । योयुवति । बोभुवति । रोरुवति । इदमेव हुश्नुग्रहणं ज्ञापकं भाषायामपि यङ्लुगस्तीति । छन्दसि तु छन्दस्युभयथेति आर्द्ध-धातुकत्वादेव यणादेशस्याप्रसङ्गः । सार्वधातुके किम् । जुहुवतुः । असंयोगपूर्वस्य किम् । आप्नुवन्ति ।

**भुवो वुग् लुङ्लिटोः । ६ । ४ । ८८ ॥**

भुवो वुगागमः स्याल्लुङ्लिटोरचि । नित्यत्वाद्गुणवृद्धी बाधते । अभूवन् । अभूवम् । अबोभूवीत् । अबोभूवुः । बभूव । बभूवतुः । बभूवुः । बभूविथ । अचि किम् । अभूत् । अभूताम् ।

**ऊदुपधाया गोहः । ६ । ४ । ८९ ॥**

गुह उपधाया ऊत् स्याद् गुणहेतावजादौ प्रत्यये ॥ गूहति । गूहते । गूहयति । उपधायाः किम् । अन्त्यस्य मा भूत् । विकृतनिर्देशः किम् । जुगुहतुः । जुगुहुः । अचि किम् । गोढा ॥

दोषो णौ । ६ । ४ । ९० ॥

दुष इति सुवचम् । दुष्यतेरुपधाया ऊत् स्याण्णौ । दूषयति ।

वा चित्तविरागे । ६ । ४ । ९१ ॥

विरागोऽप्रीतता । चित्तं दूषयति दोषयति वा कामः ।

मितां ह्रस्वः । ६ । ४ । ९२ ॥

मितामुपधाया ह्रस्वः स्याण्णौ परे । के पुनर्मितः । चुरादौ भ्वादौ च पठ्यन्ते । तत्र तावच्चुरादौ ये त उच्यन्ते । ज्ञप मिच्च । अयं ज्ञाने ज्ञापने च वर्तते । ज्ञपयति । यम च परिवेषणे । चान्मित् । परिवेषणमिह वेष्टनं न तु भोजनं नापि वेष्टना । उभयत्रापि हेतुमण्ण्यन्तत्वेनामन्तत्वादेव सिद्धेः । न च वेष्टनायां यमोऽपरिवेषणे इति निषेध इति वाच्यम् । तत्र विनिगमनाविरहाद्भोजनावद्वेष्टनाया अपि ग्रहणात् । यमयति चन्द्रम् । परिवेष्टत इत्यर्थः । चह परिकल्कने । चहयति । अचीचहत् । कथादेस्तु अदन्तत्वेनाग्लोपित्वात्सन्वद्भावो न । अचचहत् । चप इत्येके । चपयति । रह त्यागे इत्येके । रहयति । अरीरहत् । कथादेस्तु अररहत् । बल प्राणने । बलयति । चिञ् चयने । चिस्फुरोर्णौ वा आत्वम् । अर्तिह्रीति पुक् । चपयति । चययति । ञित्करणसामर्थ्यादस्य णिज्विकल्पः । चयति । चयते । नेर्गदेत्यत्र चिनोतेर्ग्रहणान्नेह । प्रणिचययति । प्रनिचययति । नान्ये मितोऽहेतौ । अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये

मितो न स्युः । तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न । इति चुरादिर्मितः । अथ भ्वादिर्मितः । तत्र त्वरत्यन्तास्त्रयोदश अनुदात्तेतः षितश्च । ये धातवोऽन्यत्राधीता इह पठ्यन्ते तेषामर्थनियमः । ये त्विहैव पठ्यन्ते तेषामुपसर्गादिनार्थान्तरसत्त्वेऽपि मित्त्वमस्त्येवेति न्यासधातुवृत्त्यादिषु स्थितम् । घट चेष्टायाम् । घटादयो मित इति वक्ष्यमाणेन मित्संज्ञा । घटयति । कथन्तर्हि कमलवनोद्घाटनं कुर्वते ये । प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिवेत्यादि । शृणु । घट संघाते इति चौरादिकस्येदम् । न च तस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयम् । एवञ्च कथं विघटयतीत्यादौ मित्त्वमिति वाच्यम् । नान्ये मितोऽहेताविति निषेधात् । अनुवादसामर्थ्येन तद्बाधकल्पनापेक्षया स्वातन्त्र्यकल्पनस्यैवोचितत्वात् । व्यथ भयसञ्चलनयोः । प्रथ प्रख्याने । प्रस विस्तारे । म्रद मर्दने । स्खद स्खदने । स्खदनं विद्रावणम् । क्षजि गतिदानयोः । मित्त्वसामर्थ्यादनुपधात्वेऽपि चिण्णमुलोरिति दीर्घविकल्पः । अक्षञ्जि । अक्षाञ्जि । क्षञ्जम् २ । क्षाञ्जम् २ । एवमग्रेऽपि । दक्ष गतिहिंसनयोः । योऽयं वृद्धिशैघ्र्ययोरनुदात्तेत्सु पठितस्तस्येहार्थविशेषे मित्त्वार्थोऽनुवादः । क्रप कृपायां गतौ । कदि क्रदि क्लदि वैक्लव्ये । वैकल्य इत्येके । त्रयोऽप्यनिदित इति नन्दी । इदित इति स्वामी । कदिक्रदी इदितौ । कद क्लदेति चानिदिताविति मैत्रेयः । कदिक्रदीक्लदीनामाह्वानरोदनयोः परस्मैपदिषूक्तानां पुनरिह पाठो मित्त्वार्थ आत्मनेपदार्थश्च । ञित्वरा संभ्रमे । घटादयः षितः षित्वादङ् कृत्सु भवति ॥ अथ फणान्ताः परस्मैपदिनः । ज्वर रोगे । गड सेचने । हेड वेष्टने । हेडृ अना-

दरे इति घटादिभ्यः पूर्वमात्मनेपदिषु गतः स एवोत्स्वृष्टानुबन्धोऽनूद्यते अर्थविशेषमित्वार्थम् । परस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्तव्ये तन्मध्येऽनुवादसामर्थ्यात् परस्मैपदम् । हेडति । हिडयति । अनादरे तु हेडयति । वट भट परिभाषणे । वट वेष्टने भट भृताविति पठितयोः परिभाषणे मित्वार्थोऽनुवादः । नट नृत्तौ । इत्थमेव पूर्वमपि पठितम् । तत्रायं विवेकः । पूर्वं पठितस्य नाट्यमर्थः । यत्कारिषु नर्तकव्यपदेशः । पदार्थाभिनयो नृत्यम् । गात्रविक्षेपमात्रं नृत्तम् । केचित्तु घटादौ नट नताविति पठन्ति । गताविकत्यन्ये । णोपदेशपर्युदासवाक्ये भाष्यकृता नाटीति दीर्घपाठात् घटादिर्णोपदेश एव । ष्टक प्रतीघाते । चक तृप्तौ । तृप्तिप्रतिघातयोः पूर्वं पठितस्य तृप्तिमात्रे मित्वार्थोऽनुवादः । आत्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात् परस्मैपदम् । कखे हसने । रगे शङ्कायाम् । लगे सङ्गे । ह्रगे ल्हगे षगे ष्टगे संवरणे । कगे नोच्यते । अस्यायमर्थ इति विशिष्य नोच्यते । क्रियासामान्यार्थत्वात् । अनेकार्थत्वादित्यन्ये । अक अग कुटिलायां गतौ । कण रण गतौ । चण शण श्रण दाने । शण गताविकत्यन्ये । श्रथ क्नथ क्रथ क्लथ हिंसार्थाः । जासिनिप्रहणेतिसूत्रे क्राथेति मित्वेऽपि वृद्धिर्निपात्यते । क्राथयति । मित्वन्तु निपातनात् परत्वाच्चिण्णमुलोरिति दीर्घे चरितार्थम् । अक्रथि । अक्राथि । क्रथम् २ । क्राथम् २ । वन च हिंसायामिति शेषः । वनु च नोच्यते । वनु इत्यपूर्व एवायं धातुर्न तु तानादिकस्यानुवादः । उदित्करणसामर्थ्यात् । न च तस्यैवानुवाद इत्यर्थं तदिति वाच्यम् । विशिष्यार्थो नोच्यत इत्युक्त्या नियमस्य वक्तुमशक्यत्वेन तद्वैयर्थ्यात् । अत एव पूर्वपठितवनो

नानुवादः । उत्तारीत्यार्थनियमासम्भवेन तत्र वनपाठस्य वैयर्थ्या-पत्त्या तदनुवादासम्भवात् । उदित्त्वफलन्तु णिजभावे । तेन क्रिया-सामान्ये वनतीत्यादि । प्रवनयति । अनुपसृष्टस्य तु मित्त्वविकल्पो वक्ष्यते । ज्वल दीप्तौ । णप्रत्ययार्थे पठिष्यमाण एवायं मित्वार्थ-मनूद्यते । प्रज्वलयति । ह्वल ह्मल चलने । प्रह्वलयति । स्मृ-आध्याने । चिन्तायां पठिष्यमाणस्य आध्याने मित्वार्थोऽनुवादः । आध्यानमुत्कण्ठापूर्वकं स्मरणम् । दॄ भये दॄ विदारणे इति क्र्यादेरय-मनुवादः । दृणन्तं प्रेरयति दरयति । भयादन्यत्र दारयति । धात्वन्तरमेवेदमिति मते तु दरतीत्यादि । केचिद्घटादौ अरस्वृदॄ त्वरेति सूत्रे च दॄ इति दीर्घस्थाने ह्रस्वं पठन्ति । तन्नेति माधवः । नॄ नये क्र्यादिषु पठिष्यमाणस्यानुवादः । नयादन्यत्र नारयति । श्रा पाके श्रै इति कृतात्वस्य श्रा इत्यादादिकस्य च सामान्येना-नुकरणम् । लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य । लक्षणप्रतिपदो-क्तयोः प्रतिपदोक्तस्येति परिभाषाभ्याम् । श्रपयति । विक्लेदयती-त्यर्थः । पाकादन्यत्र श्रापयति । स्वेदयतीत्यर्थः । मारणतोषणनिशा-मनेषु ज्ञा । निशामनं चाक्षुषं ज्ञानमिति माधवः । ज्ञापनमात्र-मित्यन्ये । निशानेष्विति पाठान्तरम् । निशानं तीक्ष्णीकरणम् । एष्वेवार्थेषु जानातिर्मित् । ननु माधवमते ज्ञीप्स्यमानो बोधयितुम-भिप्रेत इति वृत्तिग्रन्थस्य का गतिः । ज्ञप मिच्चेति चुरादौ ज्ञापनं मारणादिकञ्च तस्यार्थः । कथं विज्ञापना भर्तृषु सिद्धिमेतीति । तज्ज्ञापयत्याचार्य इति च । शृणु । माधवमतेऽचाक्षुषज्ञाने मित्वा-भावात् । ज्ञापनमात्रे मित्वमिति मते तु ज्ञा नियोगे इति चौरादिकस्य । धातूनामनेकार्थत्वात् । निशानेष्विति पठतां हर-

दत्तादीनां मते तु ज्ञा नियोगे इति चौरादिकस्य न क्वाऽप्यनुवर्तिः । कम्पने चलिः । चल कम्पने इति ज्वलादिः । चलयति शाखाम् । कम्पनादन्यत्र तु शीलं चालयति । अन्यथा करोतीत्यर्थ इति । हरतीत्यर्थ इति स्वामी । सूत्र चालयति । क्षिपतीत्यर्थः । छदिरूर्जने छद अपवारणे इति चौरादिकस्य स्वार्थे णिजभावे मित्वार्थोऽयमनुवादः । अनेकार्थत्वादूर्जेऽर्थे वृत्तिः । छदन्तं प्रयुङ्क्ते छदयति । बलवन्तं प्राणवन्तं वा करोतीत्यर्थः । अन्यत्र छादयति । अपवारयन्तं प्रयुङ्क्ते इत्यर्थः । स्वार्थे णिचि तु छादयति । बलीभवति । प्राणीभवति । अपवारयति वेत्यर्थः । जिह्वोन्मथने लडिः । लड विलासे इति पठितस्य मित्वार्थोऽनुवादः । उन्मथनं ज्ञापनम् । जिह्वाशब्देन षष्ठीतत्पुरुषः । लडयति जिह्वाम् । तृतीयातत्पुरुषो वा । लडयति जिह्वया । अन्ये तु जिह्वाशब्देन तद्व्यापारो लक्ष्यते । समाहारद्वन्द्वोऽयम् । लडयति शत्रुम् । गालयतीत्यर्थः । लडयति दधि । उन्मथ्नाति विलोडयतीत्यर्थः । अन्यत्र लाडयति पुत्रम् । मदी हर्षग्लेपनयोः । ग्लेपनं दैन्यम् । दैवादिकस्य मित्वार्थोऽयमनुवादः । ईदित्वन्त्वस्यैवानुवाद इति बोधनार्थम् । मदयति । हर्षयति ग्लेपयति वेत्यर्थः । अन्यत्र मादयति । चित्तविकारमुत्पादयतीत्यर्थः । ध्वन शब्दे । भाव्ययं मित्वार्थमनूद्यते । ध्वनयति घण्टाम् । अन्यत्र ध्वानयति । अस्पष्टाक्षरमुच्चारयतीत्यर्थः । अत्र भोजः । दलि वलि स्खलि रणि ध्वनि त्रपि क्षपयश्चेति पपाठ । तत्र ध्वनिरणौ उदाहृतौ । दल विदारणे वल संवरणे । स्खल सञ्चलने । त्रपूष् लज्जायामिति गताः । तेषां णौ । दलयति । वलयति । स्खलयति । त्रपयति । क्षै क्षये इति

वक्ष्यमाणस्य कृतात्वस्य पुंसा निर्देशः । क्षपयति । स्वन अवतंसने । शब्दे इति पठिष्यमाणस्यानुवादः । स्वनयति । अन्यत्र स्वानयति । घटादयो मितः । मित्संज्ञा इत्यर्थः । जनीजॄष्क्नसुरञ्जोऽमन्ताश्च । मित इत्यनुवर्तते । जॄषिति षिन्निर्देशाज्जीर्यतेर्ग्रहणम् । जृणातेस्तु जारयति । केचित्तु जनीजॄष्ग्रसु इति पठित्वा ग्रसु निरसने इति दैवादिकमुदाहरन्ति । ज्वलह्वलह्मलनमामनुपसर्गाद्वा । एषां मित्वं वा । प्राप्तविभाषेयम् । ज्वलयति । ज्वालयति । उपसृष्टे तु नित्यं मित्वम् । प्रज्वलयति । कथन्तर्हि प्रज्वालयति उन्नामयतीति । घञन्तात्तत्करोतीति णौ । एवमपि कथं संक्रामयतीति नोदात्तोपदेशस्येति वृद्धिनिषेधादिति चेत् । मितां ह्रस्व इति सूत्रे वा चित्तविराग इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादिति वृत्तिकृत् । एतेन रजो विश्रामयन् राज्ञां धुर्यान् विश्रामयेति स इत्यादि व्याख्यातम् । ग्लास्नावनुवमां च । अनुपसर्गादेषां मित्वं वा स्यात् । आद्ययोरप्राप्ते इतरयोः प्राप्ते विभाषा । न कम्यमिचमाम् ॥ अमन्तत्वात् प्राप्तं मित्वमेषां न स्यात् । कामयते । आमयति । चामयति । शमो दर्शने । शाम्यतिर्दर्शने मिन्न स्यात् । निशामयति रूपम् । अन्यत्र तु प्रणयिनो निशमय्य वधूः कथाः । कथन्तर्हि निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति । शम आलोचने इति चौरादिकस्येदम् । धातूनामनेकार्थत्वात् श्रवणे वृत्तिः शाम्यतिवत् । यमोऽपरिवेषणे । यच्छतिर्भोजनतोऽन्यत्र मिन्न स्यात् ॥ आयामयति । द्राघयति । व्यापारयति वेत्यर्थः । परिवेषणे तु यमयति ब्राह्मणान् । भोजयतीत्यर्थः । पर्यवसितं नियमयन्नित्यादि तु अर्शआद्यजन्तनियमशब्दात्तत्करोतीति णौ बोध्यम् । स्खदिरवप-

रिभ्याश्च ॥ मित्त्येव । अवस्वादयति । परिस्वादयति । अपाव-परिभ्य इति न्यासकारः । स्वामी तु न कमीति नञमुत्तरचिसूत्र्या-मननुवर्त्य शम अदर्शने इति चिच्छेद । यमेस्त्वपरिवेषणे मित्व-माह तन्मते पर्यवसितं नियमयन्नित्यादि सम्यगेव । उपसृष्टस्य स्वदेश्चेदवादिपूर्वस्यैवेति नियमात् प्रस्वादयतीत्याह । तस्मात् सूत्र-द्वये उदाहरणयोर्व्यत्यासः फलितः । इदञ्च मतं वृत्तिन्यासादिवि-रोधादुपेक्ष्यम् । फण गतौ । नेति निवृत्तमसम्भवात् । निषेधात् पूर्वमसौ न पठितः फणादिकार्यानुरोधात् । फणयति । वृत् घटादिः समाप्तः । फणेः प्रागेव वृदित्येके । तन्मते फाणयतीत्येव । इति भ्वादिमितः ॥ प्रकृतमनुसरामः ॥

## चिण्णमुलोर्दीर्घोऽन्यतरस्याम् । ६ । ४ । ९३ ॥

चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात् ॥ अशमि । अशामि । अतमि । अतामि । शमम् २ । शामम् २ । तमम् २ । तामम् २ । प्रकृतौ मितां ह्रस्व एव तु न विकल्पितः । णणन्तायणौ ह्रस्वविकल्पासिद्धेः । दीर्घविधौ णिचो लोपो न स्थानि-वदिति दीर्घः सिध्यति । ह्रस्वविधौ तु स्थानिवत्त्वं दुर्वारम् । किञ्च हेड वेष्टने इति घटादिषूदाहृतस्य ह्रस्वविकल्पे अहिडि अहेडीति स्यात् । दीर्घविकल्पे तु अहिडि अहीडीति भवति । मित्वप्रयुक्तह्रस्वे-कारस्य दीर्घविधानेन दीर्घकारस्यैव प्रवृत्तेः । भाष्ये तु पूर्वत्रासिद्धे न स्थानिवदित्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्या-ताः । णाविति जातिपरो निर्देश इति तदाशयः । यङन्तात् णिचि । अशंशमि । अशंशामि । शंशमम् २ । शंशामम् २ । यङ्लुगन्तात्णि-च्यप्येवम् । भाष्यमते तु यङन्तात्णिचि दीर्घो नास्तीति विशेषः ॥

### खचि ह्रस्वः । ६ । ४ । ९४ ॥

खच्परे णौ उपधाया ह्रस्वः स्यात् । द्विषन्तं परं वा तापयतीति द्विषन्तपः । परन्तपः । पुरन्दरः ॥

### ल्हादो निष्ठायाम् । ६ । ४ । ९५ ॥

ह्रस्वः स्यात् । प्रल्हन्नः । प्रल्हन्नवान् । ल्हाद इति योगविभागात् क्तिनि ह्रस्वः । प्रल्हत्तिः ॥

### छादेर्घेऽद्व्युपसर्गस्य । ६ । ४ । ९६ ॥

छादेर्ह्रस्वः स्याद् घे परे न तु द्व्युपसर्गस्य । दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः । प्रच्छदः । छदः । पुंसि संज्ञायामिति घः । अद्व्युपसर्गस्य किम् । समुपच्छादः ॥ अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् ॥ * ॥ समुपाभिच्छादः । उत्तरा हि संख्या पूर्वसंख्याकृतं व्यपदेशं निवर्तयति । न हि त्रिपुत्रो द्विपुत्र उच्यते ॥

### इस्मन्त्रन्क्विषु च । ६ । ४ । ९७ ॥

एषु छादेर्ह्रस्वः स्यात् । छदिः । छद्म । छत्रम् । तनुछत् । क्विप्चेति क्विप् ॥

### गमहनजनखनघसां लोपः क्ङित्यनङि । ६ । ४ । ९८ ॥

एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि ॥ जग्मतुः । जंग्मति । जघ्नतुः । जंघ्नति । जज्ञतुः । जज्ञते । जज्ञाति । जन जनने जुहोत्यादिः । चख्नतुः । चंख्नति । जक्षतुः । अक्षन्नमीमदन्त । क्ङिति किम् । गमनम् । हननम् । अनङि किम् । अगमत् । अघसत् । अचि किम् । गम्यते । हन्यते ।

## तनिपत्योश्छन्दसि । ६ । ४ । ९९ ॥

एतयोरुपधाया लोपः क्ङिति प्रत्यये परे ॥ वितत्निरे कवयः । शकुना इव पप्तिम । छन्दसि किम् । वितेनिरे । पेतिम ।

## घसिभसोर्हलि च । ६ । ४ । १०० ॥

झलो झलीति सलोपः । सग्धिश्च मे । बब्धाम् । बप्सति । क्ङितीत्येव । पशून् बभस्ति ॥

## हुझल्भ्यो हेर्धिः । ६ । ४ । १०१ ॥

होर्झलन्तेभ्यश्च हेर्धिः स्यात् ॥ जुहुधि । अद्धि । पास्पर्द्धि । हृदिहीत्यत्र परत्वाद्दिटि धित्वं न ॥

## श्रुशृणुपृकृवृभ्यश्छन्दसि । ६ । ४ । १०२ ॥

श्रुधी हवम् । शृणुधी गिरः । रायस्पूर्धि । उरुणस्कृधि अपां वृधि ॥

## अङितश्च । ६ । ४ । १०३ ॥

हेर्धिः स्यात् । वा छन्दसीति पक्षे पित्वेनास्याङित्त्वम् । रारन्धि । रमेर्व्यत्ययेन परस्मैपदम् । शपः श्लुरभ्यासदीर्घश्च । अस्मे प्रयन्धि । युयोधि जातवेदः । यमेः शपो लुक् । यौतेः शपः श्लुः । अङितः किम् । हव्य प्रीणीहि ॥

## चिणो लुक् । ६ । ४ । १०४ ॥

चिणः परस्य लुक् स्यात् ॥ अकारि । अहारि । अकारितरामित्यादौ तलोपस्यासिद्धत्वात्तरपो न लुक् ॥

**अतो हेः । ६ । ४ । १०५ ॥**

अतः परस्य हेर्लुक् स्यात् । भव । पच । अतः किम् ॥ युहि । रुहि । तपरकरणं किम् । लुनीहि । ईत्वस्यासिद्धत्वादाकारान्तमेतदङ्गं भवति । इह त्वनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक् । जङ्गहि ॥

**उतश्च प्रत्ययादसंयोगपूर्वात् । ६ । ४ । १०६ ॥**

असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात् परस्य हेर्लुक् स्यात् ॥ धिनु । सनु । चिनु । तनु । कुरु । उतः किम् । लुनीहि । प्रत्ययात् किम् । युहि । रुहि । असंयोगपूर्वात् किम् । आप्नुहि ॥ छन्दसि वेति वक्तव्यम् ॥ * ॥ अवस्थिरा तनुहि धिनुहि । यज्ञम् तेन मा भागिनं कृणुहि ॥

**लोपश्चास्यान्यतरस्यां म्वोः ६ । ४ । १०७ ॥**

असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यान्म्वोः परयोः ॥ धिन्वः । धिनुवः । धिन्मः । धिनुमः । सुन्वः । सुनुवः । सुन्मः । सुनुमः । सुन्वहे । सुनुवहे । इह तु परत्वाद्गुणः । धिनोमि । प्रत्ययस्येत्येव । युवः । युमः । असंयोगपूर्वस्य किम् । शक्नुवः । शक्नुमः । लोपग्रहणमनन्त्यलोपार्थम् ॥

**नित्यं करोतेः । ६ । ४ । १०८ ॥**

करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यान्म्वोः परयोः कुर्वः । कुर्मः ॥

**ये च । ६ । ४ । १०९**

कृञ उलोपः स्याद्यादौ प्रत्यये परे । कुर्यात् ।

## अत उत् सार्वधातुके। ६। ४। ११०॥

उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात् सार्वधातुके क्ङिति॥ कुरुतः। कुर्वन्ति। तपरकरणं गुणबाधनार्थम्। इह त्वाभीयत्वेन लुकोऽसिद्धत्वादुत्वम्। कुरु। क्ङिति किम्। करोति। उप्रत्ययान्तस्य किम्। सञ्चस्करतुः। कुरुत इत्यत्र तकारेण व्यवधानान्नैव स्यात् सार्वधातुके इत्युक्तौ तु नास्योपयोगः। येननाव्यवधानन्यायेन कुरुत इत्यादौ चरितार्थस्य करिष्यत इत्यादावप्रवृत्तेः। कर्तेति तास्यन्तेऽपि टिलोपस्याभीयासिद्धत्वेनानेकव्यवधानात्। टिलोपेऽङ्गाधिकारसत्वेन समानाश्रयत्वस्य सूपपादत्वात्। ङित्वसामर्थ्यात् किञ्चिल्लक्ष्यविषयके भाधिकारबाधेऽपि अङ्गाधिकारबाधे मानाभावादिति सूत्राशयः। भाष्यकारेण तु तदुक्तावपि करिष्यत इत्याद्यसिद्धं मत्वोप्रत्ययान्तस्येति स्वीकृत्यैतन्निष्फलीकृतम्॥

## श्नसोरल्लोपः। ६। ४। १११॥

श्नस्यास्तेश्चाकारस्य लोपः स्यात् सार्वधातुके क्ङिति॥ रुन्धः। रुन्धन्ति। स्तः। सन्ति। क्ङिति किम्। भिनत्ति। सार्वधातुके इति किम्। ईहामासतुरित्यादौ अत आदेरिति दीर्घे परस्य लोपेऽप्यदोषात्॥

## श्नाभ्यस्तयोरातः। ६। ४। ११२॥

अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके। ईत्वात् पूर्वं झेरन्तादेशः। परत्वान्नित्यत्वादन्तरङ्गत्वाच्च। एवं झस्याद्भावः। ततोऽनेन लोपः। क्रीणन्ति। क्रीणते। लुनते। मिमते। माङ् माने शब्दे च। जिहते। ओहाङ् गतौ। दत्तः। दत्ते। ददते।

दरिद्राति । जाहाति । श्नाभ्यस्तयो: किम् । यान्ति । वान्ति । आत: किम् । बिभ्यति । जिहियति । ङ्किति किम् । क्रीणाति । ददाति । सार्वधातुके किम् । आशिषि जाहायात् ॥

**ई हल्यघो: । ६ । ४ । ११३ ॥**

श्नाभ्यस्तयो रात ईत् स्यात् सार्वधातुके ङ्किति हलि न तु घो: ॥ क्रीणीत: । क्रीणीते । लुनीते । मिमीते । जिहीते । जाहीत: । जाहीथ: । जहीहि । अजाहीताम् । जाहीयात् । हलि किम् । क्रीणन्ति । मिमते । अघो: किम् । दत्त: । धत्त: । ङ्किति किम् । क्रीणाति । जहाति । सार्वधातुके किम् । जाहायात् ।

**इद् दरिद्रस्य । ६ । ४ । ११४ ॥**

दरिद्रातेरिकार: स्याद्धलादै ङ्किति सार्वधातुके ॥ दरिद्रत: । हलि किम् । दरिद्रति । ङ्किति किम् । दरिद्राति । सार्वधातुके इति निष्फलम् ॥ दरिद्रातेरार्धधातुके विवक्षिते लोपो वाच्य: ॥ * ॥ दरिद्रातीति दरिद्र: । पचाद्यच् । विवक्षिते इत्यनुक्तौ तु श्याद्व्यधेति णे कृते परत्वाद्युक् स्यात् । लोपस्त्वाशिषि दरिद्र्यादित्यादै चरितार्थ: । ईषद्दरिद्रमित्यादौ युजिति च प्रसज्येत । लुङि वा सनि ण्वुलि ल्युटि च नेति वक्तव्यम् ॥ * ॥ अदरिद्रीत् । इट्सको । अदरिद्रासीत् । सिचि । अदरिद्रि । अदरिद्रायीति भवति । दिदरिद्रासति । दिदरिद्रिषतीतीट्पक्षे तु आतोलोप इटि चेत्यालोप: । दरिद्रायक: । दरिद्राणम् ॥

**भियोऽन्यतरस्याम् । ६ । ४ । ११५ ॥**

इकारो वा स्याद्धलादै ङ्किति सार्वधातुके ॥ बिभित: । बिभीत: । हलि किम् । बिभ्यति । ङ्किति किम् । बिभेति ।

सार्वधातुके किम् । बिभीवान् । भीयते बेभीयते इति तु अभ्यस्तस्येत्येव सिद्धम् । यङ्यकारसहितस्य हि द्वित्वेन भियोऽभ्यस्तत्वं नास्ति । अत एव श्नाभ्यस्तयोरित्यत्रेहल्यघोरित्यत्र च यायावरो न प्रत्युदाहृतः । यङो लुका लुप्तत्वाभावेन प्रत्ययलक्षणेन ङित्परत्वसत्त्वेऽपि वलि लोपे कृते उपदेशे आकारान्ताभ्यस्तत्वाभावेन स्यसिच्सूत्रादुपदेशे इत्यनुवृत्त्याऽपि वारयितुं शक्यत्वात् । श्नाभ्यस्तयोरित्यालोपस्य तु वरेऽजादेशस्य स्थानिवत्त्वनिषेधेनापि वारयितुं शक्यत्वाच्च । यत्वल्लोपासिद्धत्वेनापि यायावरः परिहर्तुं शक्य इति तन्न । वरच्यल्लोपो यङि त्वीत्वाल्लोपावित्ति व्याख्येयत्वात् ।

### जहातेश्च । ६ । ४ । ११६ ।

इत्स्याद्वा हलादौ ङिति सार्वधातुके ॥ पक्षे ईत्वम् । जहितः । जहीतः । हलि किम् । जहति । ङिति किम् । जहाति । सार्वधातुके इति निष्फलम् । जाहीत इत्यादाविवाशिषि जाहायादित्यत्रापि श्तिपा निर्देशादेवाप्रवृत्तेः । हीयते । जेहीयते इति त्वभ्यस्तस्येत्येव सिद्धम् ॥

### आ च हौ । ६ । ४ । ११७ ॥

जहातेर्हौ परे आ स्यात् चादिदीतौ ॥ जहाहि । जहिहि । जहीहि । जाहीहीत्यत्र श्तिपा निर्देशादेतदप्रवृत्त्येहल्यघोरितीत्वमेव ॥

### लोपो यि । ६ । ४ । ११८ ॥

जहातेरातो लोपः स्याद्यादौ सार्वधातुके ॥ जह्यात् । सार्वधातुके इति निष्फलम् । हेयादित्यत्रैर्लिङीत्यत्रार्धधातुकाधिकारात् । जाहीयादित्यत्रैव जाहायादित्यत्रापि श्तिपा

निर्देशादेत्वाप्रवृत्तेश्च । हीयते । जेहीयते । हेय हेयादित्यादि चाभ्यस्तस्येत्येव ङ्क्तीति वा यथायथं सिद्धम् ।

**घ्वसोरेद्धावभ्यासलोपश्च । ६ । ४ । ११९ ॥**

घोरस्तेश्चैत्वं स्याद्धौ परे अभ्यासलोपश्च ॥ देहि । धेहि ॥ लोपश्चेति द्विशकारकनिर्देशेन शित्वात् पुनर्लोपग्रहणाद्वा सर्वादेशोऽयं लोपः । आभीयत्वेनैत्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यतो लोपः । एधि । तातङ्पक्षे एत्वं न । परेण तातङा बाधात् । सकृद्गताविति न्यायात् । दत्तात् । धत्तात् । स्तात् ॥

**अत एकहल्मध्येऽनादेशादेर्लिटि । ६ । ४ । १२० ॥**

लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्यैत्वं स्यादभ्यासलोपश्च किति लिटि ॥ रेणतुः । रेणुः । रेमे । रेमाते । येमतुः । येमुः । लेभे । लेभाते । आदेशश्चेह वैरूप्यसम्पादक एवाश्रीयते । शसिदद्योः प्रतिषेधवचनात् ज्ञापकात् । तेन प्रकृतिजश्त्वरा तेषु सत्स्वपि एत्वाभ्यासलोपौ स्त एव । देधे । देधाते । देधिरे । पेचतुः । पेचुः । अतः किम् । दिदिवतुः । तपरः किम् । रराशे । एकेत्यादि किम् । तत्सरतुः । अनादेशादेः किम् । जगणतुः । चकणतुः । लिटा आदेशविशेषणादिह स्यादेव । नेमतुः । सेहे । सेहाते । अभ्यासजश्त्वचर्त्वयोरसिद्धत्वं तु न फलिभजोर्विधिवचनात् ज्ञापकात् ॥ दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ ॥ * ॥ देभतुः । देभुः । नलोपस्याभीयासिद्धत्वादप्राप्तिः । नशिमन्योरलिट्येत्वं छन्दस्यमिपचोरपि । किम्प्रयोजनम् । अनेशं मेनकेत्येतत् । अनेशमिति । नशेर्लुङि पुषादित्वादङ् ।

मेनकेति मनेराशिषि चेति वुन् । आशिषि वुनश्च नेतीत्वाभावः । भाषायां तु मेनकेति पृषोदरादित्वात् । व्येमानम् । लिङि पेचिरन् । व्येमानमिति विपूर्वादमतेस्ताच्छील्यादिषु चानश् । छान्दसः शपो-लुक् । पेचिरन्निति । पचेरन्निति प्राप्ते छान्दसे एत्वह्रस्वत्वे ॥ यजि-वप्योश्च ॥ * ॥ आयेजे । आवेपे । लङ इट् शप् छन्दस्यपि दृश्यते इत्याट् ॥

**थलि च सेटि । ६ । ४ । १२१ ॥**

प्रागुक्तं स्यात् । पेचिथ । शेकिथ । सेटि किम् । पपक्थ । शशक्थ । थलोऽन्यस्याकितो लिटः सेटोऽभावात् सेटीत्येव सिद्धे नार्थस्थलीत्यनेन ॥

**तॄफलभजत्रपश्च । ६ । ४ । १२२ ॥**

एषामत एकारोऽभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च ॥ तेरतुः । तेरुः । तेरिथ । फेलतुः । फेलुः । फेलिथ । भेजतुः । भेजुः । भेजिथ । त्रेपे । त्रेपाते । श्रन्थिग्रन्थ्योरित्यादिना किन्त्वपक्षे एत्वाभ्यासलोपावपि । श्रन्थिग्रन्थ्योर्वेक्तव्याविति हरदत्ता-दयः ॥ श्रेथतुः । श्रेथुः । ग्रेथतुः । ग्रेथुः ॥

**राधो हिंसायाम् । ६ । ४ । १२३ ॥**

अत इति तपरत्वमविवक्षितमचायोग्यत्वात् । राधोऽकारस्यैत्वं स्यादभ्यासलोपश्च किति लिटि सेटि थलि च ॥ अपरेधतुः । रेधुः । रेधिथ । हिंसायां किम् । आरराधतुः । आरराधुः ।

**वा जॄभ्रमुत्रसाम् । ६ । ४ । १२४ ॥**

एषामकारस्यैत्वमभ्यासलोपश्च किति लिटि सेटि थलि च ॥ जेरतुः । जजरतुः । जेरिथ । भ्रेमतुः । बभ्रमतुः । भ्रेमिथ । बभ्रमिथ । त्रेसतुः । त्रेसिथ । तत्रसिथ ॥

## फणाञ्च सप्तानाम् । ६ । ४ । १२५ ॥

एषामकारस्यैत्वमभ्यासलोपश्च वा किति लिटि सेटि थलि च ॥ फेणतुः । फेणिथ । पफणतुः । पफणिथ । रेजतुः । रेजिथ । रेजे । रराजतुः । रराजिथ । रराजे । अत इत्यनुवृत्तावपि विधानसामर्थ्यादात एत्वम् । भ्रेजे । बभ्राजे । भ्राजतेरिह पाठः फणादिकार्यार्थ एव । पूर्वं पाठस्तु ह्रस्वादित्वाभावार्थः । तत्र हि राजिसाहचर्यात् फणादेरेव ग्रहणम् । भ्रेशे । बभ्राशे । भ्लेशे । बभ्लाशे । द्वावपीमौ तालव्यान्तौ । स्येमतुः । सस्यमतुः । स्येमिथ । स्वेनतुः । सस्वनतुः । स्वेनिथ । सस्वनिथ । सप्तानां किम् । दध्वनतुः ॥

## न शसददवादिगुणानाम् । ६ । ४ । १२६ ॥

शसेर्ददेर्वकारादीनां गुणस्य च योऽकारस्तस्य एत्वाभ्यासलोपश्च न ॥ शसु हिंसायाम् । दन्त्यान्तः । शशसतुः । शशसिथ । दद दाने । दददे । ददृदाते । टुवम उद्गिरणे । इहैव निपातनादूत्वमिति सुधाकरः । ववमतुः । ववमिथ । भागवृत्तौ तु वेमतुरित्याद्यप्युदाहृतम् । तद्भाष्यादौ न दृष्टम् । तत्र चेयमुपपत्तिः । सूत्रे आदिग्रहणं व्यर्थं वेत्यकारान्तसङ्घातग्रहणेनेष्टसिद्धेः । एतच्चादिग्रहणमौपदेशिकत्वप्रतिपत्त्यर्थम् । अनुबन्धाश्चैकान्ताः । यद्वा वमेरादौ यकारो लुप्तनिर्दिष्टः । तथा चोपदेशे वादित्वाभावात्

निषेधो न । केमुश्च केचिद्दुधिरमित्यादिप्रयोगाश्चेहानुकूला इति ॥ वट वेष्ठने । ववटतुः । ववटिथ । लुलविथ । ओकारस्यावादेश-विधानादत्र गुणस्याकारः । शशरतुः । शशरिथेत्यत्रापि उः स्थानेऽण् प्रसज्यमान एव रपरो भवति । पूर्वभक्तश्च रेफ इति विशिष्टस्य गुण-त्वाद्गुणस्याकारः । पेचतुः । पेचुरित्यादौ तु गुण एवाकारो न तु गुणस्येति प्रतिषेधाभावः । व्यपदेशवद्भावस्तु न भवति । विधि-प्रतिषेधयोर्विषयभेदानापत्तेः । शसिददिआदिग्रहणवैयर्थ्यापत्तेश्चेति दिक् ॥ एतेन लक्षणया गुणशब्देन भावितपरो गुणशब्द इत्य-पास्तमिति दिक् ॥

## अर्वणस्त्रसावनञः । ६ । ४ । १२७ ॥

नञा रहितस्यार्वन्नन्तस्याङ्गस्य तृ इत्यन्तादेशः स्यान्न तु सौ । ऋ इत् उगित्वान्नुम् । अर्वन्तौ २ । अर्वन्तः । अर्वन्तम् । अर्वतः । अर्वता । अर्वद्भ्यामित्यादि । असौ किम् । अर्वा । हे अर्वन् । अनञः किम् । अनर्वा यज्ववत् ॥

## मघवा बहुलम् । ६ । ४ । १२८ ॥

मघवन्शब्दस्य वा तृ इत्यन्तादेशः स्यात् । उपधादीर्घः । मघवान् । इह दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति । बहुलग्रहणात् । तथा च श्वन्नुक्षन्निति निपातान्मघशब्दा-न्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्यैतत्सूत्रं प्रत्याख्यातमा-करे । हविर्जक्षिति निःशङ्को मखेषु मघवानसाविति भट्टिः । मघवन्तौ २ । मघवन्तः । हे मघवन् । मघवन्तम् । मघवतः । मघवता । मघवद्भ्यामित्यादि । तृत्वाभावे मघवा । छन्दसीवनि-

पौ चेति वनिबन्तं मध्योदात्तं छन्दस्येव । अन्तोदात्तं तु लोकेऽपीति विशेषः । मघवानौ । मघवानः । सुटि राजवत् । शसादौ तु मघोनः । मघोना । मघवभ्यामित्यादि ॥

**भस्य । ६ । ४ । १२९ ॥**

आ अध्यायपरिसमाप्तेरधिकारोऽयम् ॥

**पादः पत् । ६ । ४ । १३० ॥**

पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः स्यात् । पदाङ्गाधिकारे तस्य तदन्तस्य च । अनेकाल्त्वात् सर्वादेशे प्राप्ते निर्दिश्यमानस्यादेशा भवन्ति । सुपदः । सुपदा । भस्य किम् । सुपाद्भ्याम् ॥

**वसोः सम्प्रसारणम् । ६ । ४ । १३१ ॥**

वस्वन्तस्य भस्य सम्प्रसारणं स्यात् । पूर्वरूपत्वम् । षत्वम् । विदुषः । विदुषा । अन्तरङ्गोऽपीडागमः सम्प्रसारणविषये न प्रवर्तते अकृतव्यूहा इति परिभाषया । सेदुषः । सेदुषा ॥

**वाह ऊठ् । ६ । ४ । १३२ ॥**

भस्य वाहः सम्प्रसारणमूठ् स्यात् ॥ एत्येधत्यूठ्स्विति वृद्धिः । विश्वौहः । विश्वौहा । छन्दस्यैव ण्विरिति पक्षे भाषायां ण्विजन्तादिजिति केचिदिति दिक् ॥

**श्वयुवमघोनामतद्धिते । ६ । ४ । १३३ ॥**

अल्लोपोऽन इत्यतोऽन इत्यपकृष्यते । अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे सम्प्रसारणं स्यात् ॥ शुनः । शुना । यूनः । यूना । मघोनः । मघोना । ननु सम्प्रसारणे वार्णादाङ्गस्य बलीय-

स्त्वेन पूर्वत्वं बाधित्वाल्लोपो ऽन इति लोपे शुनेति सर्वानुदात्तं स्यात् । उदात्तनिवृत्तिस्वरेण वान्तोदात्तं स्यात् । इष्यते तु पूर्वरूपेणानुदात्तम् । तत्र हि वकारस्थानिकोकारस्य संप्रसारणधर्मेहल: स्थानिकत्वेनानुदात्ततया श्वन्शब्दस्यान्तोदात्ततयाकारस्योदात्तत्वेन तयो: स्थाने जातस्यैकादेशस्योदात्तत्वात् । किञ्च लोपे स्थानिवत्त्वेन यणप्रसङ्गः । अतः शुन इत्यादिनिर्देशैस्तद्वारणे तु बहुश्वा, बहुयुवा बहुमघवेत्यत्रान उपधालोपिन इति ङीप्विकल्पापत्तिः । बहुश्वेत्यत्र गौरादिङीषस्त्वनुपसर्जनाधिकाराद्प्रवृत्तिः । मघोन इत्यादावन्तोदात्तप्रकृतिके उदात्तनिवृत्तिस्वरापत्तिश्चेति चेन्न । वार्णपरिभाषाया अनित्यत्वेन क्वचिदप्रवृत्त्याऽदोषात् । श्वन्शब्दे आभीयतया सम्प्रसारणासिद्धत्वेन न संयोगादेरिति निषेधाच्च । न च वनिबन्तप्रकृतिके मघोन इत्यादौ सम्प्रसारणे यस्येतिलोपापत्तिरिति वाच्यम् । निपातितान्तोदात्तमघवन्शब्दमादाय सिद्धेः । एकादेश उदात्तेनोदात्त इत्यस्य प्रवृत्त्या तत्र स्वरे विशेषाभावात् । छन्दस्यापाद्यरूपाभावान्न निष्पादनम् । अन्नन्तानां किम् । मघवता । स्त्रियाम् । मघवती । न चैकदेशविकृतन्यायेनान्नन्तत्वम् । अन इत्यपकर्षसामर्थ्यान्नकारप्रश्लेषाद्वा नान्तान्नन्तत्वस्य विवक्षणात् । अतद्धिते किम् । शुन इदं शौवनं मांसम् । तस्येदमित्यण् । द्वारादित्वादैजागमः । यौवनम् । माघवनम् ॥

## अल्लोपोऽनः । ६ । ४ । १३४ ॥

नेहान्नन्तस्य भस्याङ्गस्याकारस्य लोपः स्यादित्यर्थस्तक्ष्णेत्यादौ तक्काराकारस्यापि लोपापत्तेः । नापि भस्याङ्गस्यानोऽकार-

स्येति । अनसा मनसेत्यादौ नदापत्तेः । तत्रावृत्त्यादिनान्नन्तस्य भस्यानोऽकारस्येत्यपि न । अनस्तक्ष्णेत्यादावतिव्याप्तेः । किन्तु भस्येत्यनेनाक्षिप्तः प्रत्ययविशेषोऽङ्गस्येति द्वयमनो विशेषणम् । अन्त्य-कारस्य । तथा चाङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः स्यादित्यर्थः । श्चुम् । न चाल्लोपः स्थानिवत् पूर्व-त्रासिद्धे तन्निषेधात् । न च बहिरङ्गतयाऽसिद्धिः । यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतयाऽन्तरङ्गाभावे बहिरङ्गपरिभाषाया अप्रवृत्तेः । जञोर्ज्ञः । राज्ञः । राज्ञा । अनः किम् । महता । राज-कीयमित्यत्र तु नान्तान्त्वाभावाददोषः । अनितेः ह्रिप्यान इत्या-दौ तु तपरकरणाल्लोपाभावः ॥

### षपूर्वहन्धृतराज्ञामणि । ६ । ४ । १३५ ॥

षपूर्वो योऽन् तस्य हनादेश्च भस्यातो लोपोऽणि ॥ ताक्ष्णः । पौष्णः । भ्रौणघ्नः । धृतराज्ञोऽपत्यं धार्तराज्ञः । षेति किम् । सामनः । अणि किम् । ताक्षण्यः । सेनान्तलक्षणकारिभ्यश्चेति ण्यः ॥

### विभाषा ङिश्योः । ६ । ४ । १३६ ॥

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यान्ङिश्योः परयोः ॥ राज्ञि । राजनि । साम्नि । सामनि ॥

### न संयोगाद्वमन्तात् । ६ । ४ । १३७ ॥

वकारमकारान्तसंयोगात् परस्यानोऽकारस्य लोपो न स्यात् । यज्वनः । सुपर्वणः । ब्रह्मणः । कर्मणः । संयोगात् किम् । प्रति-दीव्नः । साम्ना । वमन्तात् किम् । तक्ष्णः ।

अचः । ६ । ४ । १३८ ॥

लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् ॥ प्राचः । प्राचा । प्रतीचः । प्रतीचा । लुप्तनकारस्य किम् । प्रत्यञ्चः । भस्येति किम् । प्रत्यञ्चौ ।

उद ईत् । ६ । ४ । १३९ ॥

उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत्स्यात् ॥ उदीचः । उदीचा ।

आतो धातोः । ६ । ४ । १४० ॥

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात् ॥ अलोऽन्त्यस्य । विश्वपः । शङ्खध्मः । धातोः किम् । हाहान् । आत इति योगविभागादधातोरप्यालोपः क्वचित् । क्त्वः । श्नः ।

मन्त्रेष्वाङ्यादेरात्मनः । ६ । ४ । १४१ ॥

आत्मन्शब्दस्यादेर्लोपः स्यादाङि ॥ त्मना देवेषु । आङोऽन्यत्रापि छन्दसि लोपो दृश्यते । त्मन्यासमञ्जन् ॥

ति विंशतेर्डिति । ६ । ४ । १४२ ॥

विंशतेर्भस्य तिशब्दस्य लोपः स्याड्डिति ॥ आसन्नविंशाः । विंशतेरासन्ना इत्यर्थः । सङ्ख्ययाव्ययेति बहुव्रीहिः । बहुव्रीहौ सङ्ख्येये इति डच् । तिग्रहणसामर्थ्यादिहालोऽन्त्यस्येति नोपतिष्ठते ।

टेः ६ । ४ । १४३ ॥

डिति परे भस्य टेर्लोपः स्यात् । कुमुद्वान् । नड्वान् । वेतस्वान् । भस्येति किम् । पञ्चमः । उपसरजो मन्दुरज इत्यादौ तु डित्वसामर्थ्यादभस्यापि टेर्लोपः ॥

नस्तद्धिते । ६ । ४ । १४४ ॥

नान्तस्य भस्य टेर्लोपः स्यात्तद्धिते ॥ आग्निशर्मिः औडुलोमिः । बाह्वादित्वादिञ् ॥ नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् ॥ * ॥ सब्रह्मचारिण इमे साब्रह्मचाराः । तस्येदमित्यण् । पीठेन सर्पतीति पीठसर्पी । पैठसर्पाः । पूर्ववदण् । कलापिना प्रोक्तमधीयते कालापाः । वैशम्पायनान्तेवासित्वात्प्राप्तस्य णिनेरपवादः । कलापिनोऽण् । ततश्छन्दोब्राह्मणानीति तद्विषयतयाऽध्येतृवेदित्रोरणः प्रोक्ताल्लुक् । कुथुमिना प्रोक्तमधीयते कौथुमाः । तेन प्रोक्तमित्यण् पूर्ववत्तद्विषयस्याणो लुक् । तैतिलिन् । तैतिलाः । जाजलिन् । जाजलाः । लाङ्गलिन् लाङ्गलाः । तैतिलिजाजलिलाङ्गलिभिः प्रोक्तमध्ययनं साहचर्यात्तैतिल्यादिशब्दैरुच्यते तेभ्यस्तदधीते तद्वेदेत्यण् । तेन प्रोक्तमित्यत्र तु शैषिकेऽर्थे वृद्धाच्छः प्रसज्येत । शिलालिन इमे शैलालाः । शिखण्डिनः शैखण्डाः । सूकरसद्मनः सौकरसद्माः । सुपर्वणः सौपर्वाः । चर्मणः कोशे । चार्मः कोशः । तस्य विकार इत्यण् । चार्मणोऽन्यः । अश्मनो विकारे अश्मनो विकार आश्मः । आश्मनोऽन्यः । शुनः सङ्कोचे । शौवः सङ्कोचः । तस्येदमित्यण् द्वारादित्वादैजागमः । शौवनोऽन्यः । विकारावयवयोस्तु प्राप्त्योर्न प्रकृतिभावाभावात् शौव इत्येव । अव्ययानां भमात्रे । एतच्च विध्यर्थम् । पूर्वाणि तु प्रकृतिभावबाधफलकानि । सायंप्रातिकः । सायंप्रातःशब्दाद् द्वन्द्वात्कालाट्ठञ् । यथाकथञ्चित्कालशब्दादपि ठञ् भवतीति कालसमुदायवाचिनो ठञ् । ट्युट्युलौ त्वव्ययसमुदायस्यानव्ययत्वान्न भवतः । पौनःपुनिकः । पूर्ववट्ठञ् ।

उपरिष्टाच्च औपरिष्टः । अनित्योऽयम् । आदिवृद्धिविधानात् । तेनेह न । आरातीयः । शाश्वतिकः । एषां च विशेषः शाश्वतिक इति निपातनादिसुसुक्तान्तादिति कादेशाभावः । [illegible] । आव्ययकारकवचनप्रामाण्याद्वा ॥

अह्नष्टखोरेव । ६ । ४ । १४५ ॥

टिलोपः स्यान्नान्यत्र ॥ [illegible] । [illegible] इति टच् । द्वे अहनी भृतो द्व्यहीनः । तद्धितार्थे द्विगुः । [illegible] द्विगोर्नित्यमुक्तो [illegible] संवत्सरादिति खः । नेह । अह्ना निर्वृत्तम् आह्निकम् । एकारः स्पष्टार्थः । [illegible] तु न नियमः । आत्माध्वानौ खे इति [illegible] ॥

ओर्गुणः । ६ । ४ । १४६ ॥

उवर्णान्तस्य भस्य गुणः स्यात्तद्धिते ॥ [illegible] । [illegible] बाहविः । औपगवः । बाभ्रव्यः । ओरोदिति वक्तव्ये गुणोक्तिः संज्ञापूर्वको विधिरनित्य इति ज्ञापयितुम् । तेन स्वायम्भुव इत्यादि सिद्धम् ॥

ढे लोपोऽकद्र्वाः । ६ । ४ । १४७ ॥

कद्रूभिन्नस्योवर्णान्तस्य भस्य लोपः स्याड्ढे परे ॥ कमण्डलु-शब्दश्चतुष्पाज्जातिविशेषे । चतुष्पाद्भ्यो ढञ् । अकद्र्वाः किम् । काद्रवेयः ॥

यस्येति च । ६ । ४ । १४८ ॥

भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे ॥ दाक्षी । सखी । सखिदीर्घे तु सति हे सखि हे सखीति न सिध्येत् । [illegible]

ईकारस्य वार्णादाङ्गम्बलीय इति संबुद्धौ ह्रस्वे कृते पश्चात्सवर्ण-दीर्घं लक्ष्ये लक्षणस्येति न्यायेन पुनर्ह्रस्वाप्रवृत्तेः । आचेयः । कुमारी । गौरी । शार्ङ्गरवी । दाक्षिः । बाह्वादित्वात्सौश्रविः । यस्येत्यादौ ॥ श्याङ्-श्यां प्रतिषेधो वक्तव्यः ॥ * ॥ काण्डे । कुड्ये । सैयं हिमवतः शृङ्गे । सूर्यवैकादिगित्यण् । तत्र यस्येति चेत्यकारलोपः । सूर्यतिष्येति यलोपश्च प्राप्तः । वक्ष्यमाणपरिगणने तु यलोपाप्रसङ्गः । इह त्वियङु-वङ्भ्यां परत्वाद्यस्येति चेति ढलोपोऽकद्रा इति च लोपो भवति । वत्सान्प्रीणाति वत्सप्रीर्गौस्तस्यापत्यं वात्सप्रेयः । चतुष्पाद्भ्यो ढञ् । लेखाभ्रुः शुभ्रादिस्तस्यापत्यं लैखाभ्रेयः ॥

**सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः । ६ । ४ । १४९ ॥**

अङ्गस्योपधाया यो यस्तस्य लोपः स्यात्स चेद्यः सूर्यादाव-यवः ॥ सूर्येणैकादिक् सौरी बलाका । अणि यो यस्येति लोपस्तस्य नासिद्धत्वं व्याश्रयत्वात् । ईकारे तु यो यस्येति लोपस्तस्यासिद्ध-त्वादुपधात्वम् । यकारस्य सूर्यादीनामङ्गानामुपधाया इति व्याख्याने तु नेदं सिध्येत् । वचनं तु सूरी कुन्तीत्यत्र चरितार्थम् । तैष-महः । अगस्त्यस्यापत्यं स्त्री ऋष्यपत्वादण् । आगस्ती । मत्सी । गौरादित्वान्ङीष् । उपधायाः किम् । सूर्यचरी । सूर्यस्य स्त्री सूरी । सा भूतपूर्वेति चरट् । तसिलादिष्विति पुंवत्त्वम् । यग्रहणमुत्त-रार्थम् । विषयपरिगणनं कर्तव्यम् ॥ मत्स्यस्य ङ्याम् ॥ * ॥ नेह मत्स्यस्येदं मात्स्यम् ॥ सूर्यागस्त्ययोश्छे च ङ्यां च ॥ * ॥ सौर्य-स्यायं सौरीयः । वृद्धाच्छः । आगस्तीयः । पूर्वोक्ताण्णन्ताच्छः । नेह सौर्यः । आगस्त्यः ॥ तिष्यपुष्ययोर्नक्षत्राणि यलोप इति

वाच्यम् ॥ * ॥ नक्षत्रसम्बन्धिन्यणीत्यर्थः । तिष्येण युक्तमहस्तैषम् । पुष्ये भवः पौषः । नेह तिष्यनक्षत्रस्येदं तैष्यम् ॥ अन्तिकस्य बहुलं कादिलोप आद्युदात्तत्वञ्च ॥ * ॥ अन्तितो न दूरात् । अपादाने चाहीयरुहोरिति तसिः । अन्तिके सीदतीत्यन्तिषत् । सत्सूद्विषेति क्विप् । पूर्वपदादिति षत्वम् । अन्तिये च दूरकै । अन्तिके भव इत्यर्थे भवे छन्दसीति यत् । कादिलोपस्यासिद्धत्वाद्यस्येति लोपो न ॥ तमे तादेश्च ॥ * ॥ तमप्प्रत्यये अन्तिकस्य तकारादेः ककारात्ककारादेश्च लोपो वक्तव्यः । यदा तादेस्तदा अन्तमः । कादिलोपे त्वन्तितमः ॥

## हलस्तद्धितस्य । ६ । ४ । १५० ॥

हल उत्तरस्य तद्धितयकारस्य उपधाभूतस्य लोपः स्यादीति परे ॥ सौमी ऋक् । गार्गी । वात्सी । यञश्चेति ङीप् । हलः किम् । कारिकेयी । तद्धितस्य किम् । वैद्यस्य भार्या वैदी ॥

## आपत्यस्य च तद्धितेऽनाति । ६ । ४ । १५१ ॥

हलः परस्यापत्ययकारस्य लोपः स्यात्तद्धिते परे नत्वाकारे परे ॥ गर्गाणां छात्राः गार्गीयाः । गर्गाणां समूहो गार्गकम् । गोत्रेऽलुगचीति यञोऽलुकि अनेन यलोपः । आपत्यस्य किम् । साङ्काश्यकः । संकाशादिण्यन्ताद्वुञ्छयोपधाद्वुञ् । अनाति किम् । गार्ग्यायणः । हलः किम् । कारिकेयस्यापत्यं कारिकेयिः । तद्धिते किम् । गार्ग्ये ॥

## क्यच्व्योश्च । ६ । ४ । १५२ ॥

हलः परस्यापत्ययकारस्य लोपः स्यात् क्ये च्वौ च परतः ॥

गार्गीयति । गार्गीभवति । आपत्यस्येति किम् । साङ्काश्यीयति । हल: किम् । कारिकेयीयति ॥

बिल्वकादिभ्यश्छस्य लुक् । ६ । ४ । १५३ ॥

उत्करादिभ्यश्छ: नडादीनां कुक् चेति नडाद्यन्तर्गणो बिल्वकादय: । बिल्वकादिभ्य इत्यागन्तुनाकारेण कृतकुगागमनिर्देश: । भाविकुगागमेभ्यो बिल्वकादिभ्यो विहितस्य छस्य लुक् स्यात्तद्धिते परे । बिल्वा यस्यां सन्ति सा बिल्वकीया तस्यां भवा बैल्वका: । ननु छस्येति किमर्थम् । कप्रत्ययान्तबिल्वकप्रकृतिकविकाराद्यर्थकाणन्तबैल्वकशब्दादिदमर्थे छे बैल्वकीय इत्यादौ तु तस्याणो बिल्वकाद्विहितत्वेऽपि कृतकुगागमनिर्देशादेव न लुग्भविष्यति । बिल्वकीयायां भवा बैल्वका। बैल्वकस्येदं बैल्वकीयमित्यत्राप्यणो विहितविशेषणादेव न लुग्भविष्यति । अत्रोच्यते । छमात्रस्य लुग्यथा स्यात् । कुको निवृत्तिर्मा भूदित्यर्थं तत् । अन्यथा सन्नियोगशिष्टानामिति कुगपि निवर्तेत । लुग्ग्रहणं सर्वलोपार्थम् । लोपो हि यमात्रस्य स्यात् ॥

तुरिष्ठेमेयस्सु । ६ । ४ । १५४ ॥

तृशब्दस्य लोप: स्यादेषु परेषु ॥ अतिशयेन कर्ता करिष्ठ: । दोहीयसी धेनु: । अगुणवचनत्वेपि तुश्छन्दसीतीष्ठन्नीयसुनौ । इमनिजुत्तरार्थ: ॥

टे: । ६ । ४ । १५५ ॥

टेर्लोप: स्यादिष्ठेमेयस्सु ॥ पटिष्ठ: । पटिमा । पटीयान् । लघिष्ठ: । लघिमा । लघीयान् ॥ णाविष्ठवत्प्रातिपदिकस्येति वक्त-

व्यम् ॥ * ॥ इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्म-
तुल्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः ॥ एनीमा-
चष्टे एतयति । दरदमाचष्टे दारदयति । पृथुं प्रथयति । परत्वाद्
वृद्धौ सत्यां टिलोप इति केचित् । तन्न लोपः शब्दान्तरप्रा-
प्त्याऽनित्यः । वृद्धिरनित्येति तु स्पष्टमेव । उभयोरनित्ययोर्वृद्धौ
कृतायामौकारस्यावादेशात्पूर्वमेव परत्वात् वार्णादाङ्गस्य बलीय-
स्त्वाच्च लोपः । एवं चानग्लोपित्वाद्दीर्घसन्वद्भावौ स्तः । अपिप्रथत्
अपीपटत् । न च टिलोपस्य स्थानिवद्भावेन व्यवधानं शङ्क्यम् ।
तथाप्यङ्गस्य णिपरत्वानपायात् । चङ्परे णौ यल्लघ्विति पक्षे कथ-
मिति चेत् । अभ्यासस्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति
गृहाण । अतएव मुण्डमिश्रेति सूत्रे हलिकल्योरदन्तत्वनिपातनं
भाष्यवार्तिकयोराश्रितम् । न चात्र पक्षे वारि आख्यदवीवरदित्यादौ
वृद्धौ कृतायां तस्यापि टिलोपस्य स्थानिवत्त्वाद्ध्रस्वत्वं न प्राप्नोति
किन्तु नाग्लोपीतिसूत्रेऽगिति प्रत्याहारग्रहणं व्यर्थमिति वाच्यम् ।
चङ्परनिर्ह्रासे तन्निषेधात् । स्वामिनमाख्यदसस्वामत् गोमिनमा-
ख्यदजुगोमत् गोदुहमाख्यदजुगोदुहदित्यादौ ह्रस्वाभावाय प्रत्याहा-
रग्रहणस्य चारितार्थ्यादिति तदाशयः । णौचङीत्यत्र भाष्ये तु वृद्धे-
र्लोपो बलीयानिति स्थितम् । अपप्रथत् । अपपटत् । शब्दान्तरप्राप्तौ
सत्यामपि कृताकृतप्रसङ्गित्वमात्रेणेह नित्यत्वं स्वीक्रियते । श्नो
लुको नित्यत्वादित्यत्र यथेति तद्भावः । इह भाष्यद्वयस्य परस्परविरोधे
परत्वाद् वृद्धिरिति मुख्यः पक्षः । वृद्धेर्लोपो बलीयानिति तु प्रौढिवा-
दमात्रमिति हरदत्तः । तद्विपरीतं कैयटः । भाष्यद्वयप्रामाण्यात् वृद्धेः
पूर्वं पश्चाद्वा कामचारेण टिलोपे रूपद्वयमपि साध्विति मतान्तरम् ।

मतद्वयमपीदं सुब्धातुवृत्तौ माधवेनोपनिबद्धम् । अयं च मतभेदो णिज्भिन्नविषयः । णौ णिचि तु यण्लोपाविति पूर्वविप्रतिषेधात् । निष्क-षेरीत्या अपवादत्वाद्वा प्रागेव णिलोपः । उपधाह्रस्वत्वे सन्वद्भाव-दीर्घयोश्च णौ णेर्वेत्युपसंख्यानाण्णयाकृतिनिर्देशाद्वा । अचीवददित्येव रूपमित्यवधेयम् । मृदुं म्रदयति । अमिम्रदत् । अमम्रदत् । भृशं कृशं दृढं भ्रशयति । क्रशयति । द्रढयति । अबभ्रशत् । अचक्रशत् । अदद्रढत् । परिवृढं परिव्रढयति । पर्यवव्रढत् । ऊढिमाख्यत् । औजिढत् । ढत्वादीनामसिद्धत्वाद्धुतिशब्दस्येह द्वित्वं पूर्वत्रासिद्धीयमद्वित्वे इति तु अनित्यमुभौ साभ्यासस्येति लिङ्गात् । ढि इत्यस्य द्वित्वमित्यन्ये । औडिढत् । द्वित्वे कृते तदाश्रयस्य कार्यान्तरेऽप्यसिद्धत्वस्य निषेधा-न्नाभ्यासे चुत्वादि । ऊढमाख्यत् औजढत् । औडढत् । ओः पुयण्ज्यीति सूत्रे वर्गप्रत्याहारजकारग्रहो लिङ्गं द्वित्वे कार्ये णावच आदेशो नेत्युक्तम् । प्रकृत्यैकाच् । वृद्धिपुकौ । स्वापयति । त्वां मां वाचष्टे त्वापयति । मपर्यन्तस्य त्वमौ पररूपात्पूर्वं नित्यत्वाट्टिलोपः । वृद्धिः पुक् । त्वादयति । मादयति इति तु न्याय्यम् । अन्तरङ्ग-त्वात्पररूपे कृते प्रकृत्यैकाजिति प्रकृतिभावात् । न च प्रकृतिभावो भाष्ये प्रत्याख्यात इति भ्रमितव्यम् । भाष्यस्य प्रेष्ठाद्युदाहरणविशे-षेऽन्यथासिद्धिपरत्वात् । अङ्गवृत्तपरिभाषया वृद्धिमकृत्वा त्वदयति । मदयतीति केचिदिच्छन्ति । युवामावां वा । युष्मयति । अस्मयति । श्वानमाचष्टे शावयति । नस्तद्धित इति टिलोपः । प्रकृतिभावस्तु न येन नाप्राप्तिन्यायेन टेरित्यस्यैव बाधको हि सः । भत्वात्सम्प्र-सारणं नान्तश्वादीनामित्यर्थे ऽपि टिलोपस्याभीयासिद्धत्वान्न दोषः । अत एवो गुणोऽपि न । अन्ये तु नस्तद्धित इति नेहातिदिश्यते ।

इष्ठनि तस्यादृष्टत्वात् । ब्रह्मिष्ठ इत्यादौ परत्वाट्टेरित्यस्यैव प्रवृत्तेः तेन शुनयतीति रूपमाहुः । न च सम्प्रसारणे पूर्वत्वं बाधित्वा वार्णा-दाङ्गमिति न्यायेन टिलोपे इदं रूपं दुर्लभमिति वाच्यम् । शुशुवतु-रित्यादौ सम्प्रसारणे कृते तेन न्यायेनैरनेकाच इति यणि रूपासिध्या पूर्वरूपविषयेऽनित्यत्वेन तन्न्यायाप्रवृत्तेरिति तद्भावः । किन्तु ब्रह्मव-च्छब्दादिष्ठनि मतोर्लुकि टेरित्यस्याप्रवृत्तौ नस्तद्धित इत्यस्य प्रवृत्ते-रिष्टत्वेनेष्ठनि तस्यादृष्टत्वादित्यसङ्गतम् । किञ्च ब्रह्मिष्ठ इत्यादावि-त्यप्यसङ्गतम् । तथाहि केवलादिष्ठन्नवचनत्वेनेष्ठनेव दुर्लभः । मत्वन्ता-दिष्ठनि मतोर्लुकि तेन टेरित्यस्य प्रवृत्तिमात्रबाधनेन लुगुत्तरं तद-प्रवृत्त्या परत्वादित्यस्यासङ्गतिः । विद्वांसमाचष्टे विद्वयति । अङ्गवृ-त्तपरिभाषया सम्प्रसारणं नेत्येके । सम्प्रसारणे वृद्ध्यावादेशे च विदा-वयतीत्यपरे । अनित्यत्वाट्टिलोपात्प्राक् सम्प्रसारणमन्तरङ्गत्वात्पूर्व-रूपं टिलोपः । विदयतीत्यपरे । उदञ्चमाचष्टे उदीचयति । उदैचि-चत् । प्रत्यञ्चं प्रतीचयति । प्रत्यचिचत् । इकोऽसवर्णे इति प्रकृति-भावपक्षे प्रति अचिचत् । न समासे इति तु न पृथक्करणेन समास-निवृत्तेः । सम्यञ्चमाचष्टे समीचयति । सम्यचिचत् । समिअचिचत् । सम्यादेशस्य स्थानिवत्त्वेनोपसर्गत्वात्पृथक्करणेन समासस्य निवृत्तेरुत्त-रपदपरत्वाभावेऽप्यन्तरङ्गत्वाज्जातः सम्यादेशो न निवर्तते । तिर्य-ञ्चमाचष्टे तिराययति अञ्चेष्टिलोपेनापहारेऽपि बहिरङ्गत्वेनासिद्धत्वात्ति-रसस्तिरिः । असिद्धवदत्रेति णिचो [illegible] टिलोपोऽसिद्धः । अतः पुनष्टिलोपो न । [illegible] न [illegible] बहुना [illegible] अङ्गवृत्तपरिभाषया वा । तिरिस्तु भवत्येव [illegible] अनित्यत्वात् । अग्लोपित्वादुपधाह्रस्वो न । अतितिरायत् । दध्यञ्चमाचष्टे दध्याय-

यति । असद्धायत् । विष्वद्र्यञ्चमाचष्टे विष्वद्रायति । अविविष्व-द्रायत् । देवद्र्यञ्चं देवद्रायति । अदिदेवद्रायत् । अदद्र्यञ्चं । आददा-यत् । अमुमुयञ्चं । अमुमुआययति । चङ् आमुमुमुआयत् । अदमु-यञ्चं । अदमुआययति आददमुआयत् । नन्विहाख्यानात्कृतस्तदा-चष्ट इति कारकस्य पृथक्करणादिकं स्यात् ततश्च देवानञ्चयति अमुमञ्चयतीति प्रसज्येतेति चेन्मैवम् । सूयमाणाकृति तत्प्रवृत्तेः इह च क्विनो लुप्तत्वात् । एतच्च कृल्लुक्सन्नियोगशिष्टत्वाल्लभ्यते । किञ्च । महाजनप्रवादविषयीभूतार्थविषयकमेव तत् । आख्यानग्रहणसाम-र्थ्यात् । तादृशानामेव भाष्यादावुदाहृतत्वाच्च । भुवं भावयति । अबीभवत् । भ्रुवं अबुभ्रवत् । श्रियं अशिश्रयत् । गां अजूगवत् । रायं अरीरयत् । नावं अनूनवत् । स्वश्वं स्वाशश्वत् । स्वः स्वयति । अव्ययानां भमात्रे टिलोपः । असस्वत् । वस्तुतस्तु अजादेशः स्थानिवत् । अयं स्वङ्कलादेशः । अतोऽच चिचसहितस्यैव द्वित्वम् । आसिस्वत् । बहून् भावयति । बहयतीत्यन्ये । बहुनि परे पूर्वस्य यत्कार्यं तदतिदिश्यते । न त्विष्ठनोऽपि तेन यिडागमस्या-भावात्तत्सन्नियोगशिष्टो भूभावोऽपि नेति तद्भावः । स्रग्विणं स्रजयति । संज्ञापूर्वकत्वान्न वृद्धिः । श्रीमतीं श्रीमन्तं वा अशिश्रयत् । इह मालोपीति ह्रस्वनिषेधः कस्मान्न संज्ञापूर्वकत्वाद्वृद्धेरेवा-भावात् । अकृतव्यूहपरिभाषया वा पयस्विनीं पयसयति । इह टिलोपो न । तदपवादस्य लुकः प्रवृत्तत्वात् । स्थूलं स्थवयति । अकृतव्यूहपरिभाषया न वृद्धिः । दूरं दवयति । कथन्तर्हि दूरयत्यवनते विवस्वतीति । दूरमतति अयते वा दूरात् । दूरातङ्कुर्वतीत्यर्थः । युवानं यवयति । अकृतव्यूहपरिभाषया वृद्धिसं-

प्रसारणे न । कनयति युवाल्पयोरिति वा कन् । संज्ञापूर्वकत्वान्न वृद्धिः । अन्तिकं नेदयति । बाढं साधयति । प्रशस्यं प्रशस्ययति । इह श्रज्यो न उपसर्गस्य पृथक्कृतेः । वृद्धं ज्यापयति । वर्षयति । प्रियं प्रापयति । स्थिरं स्थापयति । स्फिरं स्फापयति । उरुं वरयति । वारयति । इह माधवो बाहुलकाद् वृद्धिविकल्पमिच्छति । बहुलं बंहयति । गुरुं गरयति । तृप्रं त्रपयति । दीर्घं द्राघयति । वृन्दारकं वृन्दयति ॥

**स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः । ६ । ४ । १५६ ॥**

एषां यणादिपरं लुप्यते पूर्वस्य च गुणः इष्ठादिषु ॥ स्थविष्ठः । दविष्ठः । यविष्ठः । ह्रसिष्ठः । क्षेपिष्ठः । क्षोदिष्ठः । एवमीयसुनि । ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वाद्ध्रसिमा । क्षेपिमा । क्षोदिमा । परग्रहणं किम् । यविष्ठ इत्यादौ पूर्वस्य यणादेर्लोपो मा भूत् । पूर्वग्रहणं स्पष्टार्थम् ॥

**प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः । ६ । ४ । १५७ ॥**

प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिषु ॥ प्रेष्ठः । स्थेष्ठः । स्फेष्ठः । वरिष्ठः । बंहिष्ठः । गरिष्ठः । वर्षिष्ठः । त्रपिष्ठः । द्राघिष्ठः । वृन्दिष्ठः एवमीयसुनि । प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वात्प्रेमा इत्यादि । बंह्यादेरिकार उच्चारणार्थः । वृन्दो हलन्तः ॥

**बहोर्लोपो भू च बहोः । ६ । ४ । १५८ ॥**

बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः ॥ आदेः परस्य । भूमा । भूयान् । भूभावस्यासिद्धत्वादोर्गुणो न । पुनर्लोपवचनं प्रत्ययानां स्थानित्वाभावाय ॥

इष्ठस्य यिट् च । ६ । ४ । १५९ ॥

भूहो: परस्य इष्ठस्य लोपः स्याद्यिडागमश्च ॥ भूयिष्ठः ।

ज्यादादीयसः । ६ । ४ । १६० ॥

आदेः परस्य । ज्यायान् ॥

र ऋतो हलादेर्लघोः । ६ । ४ । १६१ ॥

इष्ठेमेयस्सु । प्रथिष्ठः । प्रथिमा । प्रथीयान् । ऋतः किम् । पटिष्ठः । हलादेः किम् । ऋजिष्ठः । लघोः किम् । कृष्णिष्ठः । पृथुमृदुभृशकृशदृढपरिवृढानामेवेति परिगणनं कर्तव्यम् । तेनेह न भवति । कृतमाचष्टे कृतयति । मातरं मातयति । भ्रातरं भ्रातयति ॥

विभाषर्जोश्छन्दसि । ६ । ४ । १६२ ॥

ऋजुशब्दस्य ऋतः स्थाने रः स्याद्वा इष्ठेमेयस्सु ॥ त्वं रजिष्ठमनुनेषि । ऋजिष्ठं वा ॥

प्रकृत्यैकाच् । ६ । ४ । १६३ ॥

इष्ठादिष्वेकाच् प्रकृत्या । श्रेष्ठः । श्रेयान् । इष्ठादिषु किम् । श्रियै हितः श्रीयः । प्राक् क्रीताच्छः । यस्येतिलोपः। वृत्ताविय्ङ् स्यात् ॥ प्रकृत्याऽके राजन्यमनुष्ययुवानः ॥ * ॥ राजन्यानां मनुष्याणां समूहो राजन्यकम् । मानुष्यकम् । यूनो भावो यौवनिका । मनोज्ञादित्वाद्वुञ् । आपत्ययोरापत्यस्य चेति यलोपोऽन्त्ये नस्तद्धित इति टिलोपः प्राप्तः ।

**इनण्यनपत्ये । ६ । ४ । १६४ ॥**

अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात् ॥ गर्भिणीनां समूहो गार्भिणम् । भिक्षादिभ्योऽण् । भस्याढे इति पुंवत्वे कृते नस्तद्धित-इति टिलोपो न । अणि किम् । दण्डिनां समूहो दाण्डम् । अनु दात्तादेरञ् । अनपत्ये किम् । मेधाविनोऽपत्यं मैधावः ।

**गाथिविदथिकेशिगणिपणिनश्च । ६ । ४ । १६५ ॥**

एतेऽणि प्रकृत्या स्युः । अपत्यार्थोऽयमारम्भः । गाथिनोऽपत्यं गाथिनः । विदथिनो वैदथिनः । केशिनः । कैशिनः । गणिनो गाणिनः । पणिनः पाणिनः ।

**संयोगादिश्च । ६ । ४ । ६६ ॥**

इन् प्रकृत्याऽणि परे । चक्रिणोऽपत्यं चाक्रिणः ।

**अन् । ६ । ४ । ६७ ॥**

अणि अन् प्रकृत्या स्यात् । साम देवतास्य सामनः । वैमनः । सुत्वनोऽपत्यं सौत्वनः ।

**ये चाभावकर्मणोः । ६ । ४ । १६८ ॥**

यादौ तद्धिते परेऽन् प्रकृत्या स्यात् न तु भावकर्मणोः । सामसु साधुः सामन्यः । वेमन्यः । अभावकर्मणोः किम् । राज्ञो भावः कर्म वा राज्यम् ।

**आत्माध्वानौ खे । ६ । ४ । १६९ ॥**

एतौ खे प्रकृत्या स्तः । आत्मने हितं आत्मनीनम् । अध्वानमलङ्गामी अध्वनीनः । खे किम् । प्रत्यात्मम् । अव्ययी-भावादनश्चेति समासान्तष्टच् । प्रगतोऽध्वानं प्राध्वो रथः । उप-सर्गादध्वन इत्यच् ।

## न मपूर्वोऽपत्येऽवर्मणः । ६ । ४ । १७० ॥

मपूर्वोऽन् प्रकृत्या न स्यादपत्येऽणि ॥ भाद्रसामः । मपूर्वः किम् । सौत्वनः । अपत्ये किम् । चर्मणा परिवृतश्चार्मणो रथः । अवर्मणः किम् । चक्रवर्मणोऽपत्यं चाक्रवर्मणः । वा हितनाम्न इति वक्तव्यम् ॥ * ॥ हितनाम्नोऽपत्यं हैतनामः । हैतनामनः ।

## ब्राह्मोऽजातौ । ६ । ४ । १७१ ॥

एकयोगत्वे अजातौ ब्राह्म इति निपात्यत इत्यर्थेऽपि ब्राह्मणो न सिध्येत् अनिति तु नमपूर्व इति निषिद्धमतो योगविभागोऽत्र कर्तव्यः । ब्राह्मः । अत्र च निपातनसामर्थ्यादपत्ये इति न संबध्यते । ब्राह्म इति निपात्यतेऽणि ब्राह्मं हविः । निपातनस्यासाधारणं प्रयोजनमनपत्येऽणि । अपत्ये तु ब्राह्मो नारद इत्यादौ नमपूर्व इति प्रकृतिभावनिषेधाट्टिलोपः सिद्धः । ततोऽजातौ । अत्र च मण्डूकप्लुत्याऽपत्ये इत्यनुवर्तते । प्रसज्यप्रतिषेधश्चायम् । अन्यथापत्ये इत्यनुवृत्त्यानन्वयः स्यात् । अजातावपत्ये इत्यर्थे विधेयानिर्देशात् । अपत्ये जातावणि ब्रह्मणष्टिलोपो न स्यात् । ब्रह्मणोऽपत्यं ब्राह्मणः । अपत्ये किम् । ब्राह्मी ओषधिः । जातौ किम् । ब्राह्मो नारदः ।

## कार्मस्ताच्छील्ये । ६ । ४ । १७२ ॥

कार्म इति णे टिलोपो निपात्यते । कर्मशीलः कार्मः । मस्ताद्धित इत्येव सिद्धेऽण्कार्ये ताच्छीलिके णेऽपीति ज्ञापनार्थमिदम् । तेन चौरी तापसीत्यादि सिद्धम् । ताच्छील्ये किम् । कार्मणः ।

**औक्षमनपत्ये । ६ । ४ । १७३ ॥**

अणि टिलोपो निपात्यते ॥ औक्षं पदम् । अनपत्ये किम् । उक्ष्णोऽपत्यं औक्ष्णः षपूर्वेत्यल्लोपः ॥

**दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि । ६ । ४ । १७४ ॥**

एतानि निपात्यन्ते । दण्डिन् हस्तिन् आभ्यां नडादित्वात्फक् । येस्तु नडादिष्वेतौ न पठ्येते । तेषामत एव निपातनात्फक् । टिलोपाभावस्तु निपातनादेव । अथर्वन्निति वसन्तादिषु पठ्यते । अथर्वणा प्रोक्तो ग्रन्थः अथर्वा । उपचारात् तमधीते आथर्वणिकः । जिह्माशिन्निति शुभ्रादिः । जिह्माशिनोऽपत्यं जैह्माशिनेयः । वाशिनोऽपत्यं वाशिनायनिः । उदीचां वृद्धादिति फिञ् भ्रूणहन् धीवन् एतयोः ष्यञि तकारादेशो निपात्यते । भ्रूणघ्नो भावो भ्रौणहत्यम् । धैवत्यम् । सरयू इत्यस्याणि परे यादेर्वा निपात्यते । सरय्वां भवं सारवमुदकम् । ऐक्ष्वाक इत्यणन्तमञन्तञ्च । एकश्रुत्या पाठात् उभयथाप्युकारलोपः । इक्ष्वाकोरपत्यं जनपदशब्दात्क्षत्रियादञ् । ऐक्ष्वाको राजा । बहुत्वे लुक् । इक्ष्वाकूणां दुरापेऽर्थे । इक्ष्वाकुषु जनपदेषु भवः कोपधादण् अस्य बहुत्वे न लुक् । ऐक्ष्वाकेषु च मिथिलेषु च । फलं त्वस्माकमद्याधिप इति मुरारिः । मित्रयुशब्दो गृष्ट्यादिषु पठ्यते । ततो ढञि कृते यादेरिय इतीयादेशापवादो युशब्दलोपो निपात्यते । मित्रयोरपत्यं मैत्रेयः । अथ किमर्थं मित्रयुशब्दो विदादिष्वेव न पठ्यते । तत्राञि कृते यादेरिया-

देशेनैव सिद्धमिति लोपार्थं निपातनं न कर्तव्यं भवति । यस्कादिषु च बहुषु लुगर्थः पाठो न कर्तव्यो भवति । मित्रयव इति यञञो श्चेत्येव लुकः सिद्धत्वात् । नैतदस्ति । मित्रयूनां सङ्घ इत्यत्र हि गोत्रचरणाद् वुञं बाधित्वा सङ्घाङ्कलक्षणेष्विन्यण् प्रसज्येत । हिरण्य-शब्दस्य मयटि यादिलोपो निपात्यते । हिरण्यस्य विकारो हिरण्मयः ॥

ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि । ६ । ४ । १७५ ॥

ऋतुशब्दाद्यति वास्तुशब्दादणि यति च यणादेशो निपात्यते । ऋतौ भवं ऋत्व्यम् । वास्तुनि भवं वास्त्व्यम् । वास्त्वम् । मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते । माध्वीर्नः सन्त्वोषधीः । हिरण्यशब्दविहितस्य मयटो मशब्दस्य लोपो निपात्यते । हिरण्ययेन सविता रथेन ॥

इत्योरम्भट्टेन श्रीधोडभट्टविश्वरूपात्मजेन वैद्यनाथभट्टविश्वरूपापरनामधेयेन विरचितायां व्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ षष्ठाध्यायस्य चतुर्थः पादो ऽध्यायश्च षष्ठः समाप्तः ॥



श्रीगणेशाय नमः ।

# सप्तमाऽध्यायस्य प्रथमः पादः ।

## युवोरनाकौ । ७ । १ । १ ॥

युवु एतयोरनुनासिकयोः क्रमादन अक एतावादेशौ स्तः ॥ नन्दनः । रमणः । सायन्तनः । कारकः । हारकः । वासुदेवकः । अर्जुनकः । अनुनासिकयोः किम् । ऊर्णाया युस् । ऊर्णायुः । भुजिमृङ्भ्यां युक्त्युकौ । भुज्युः । मृत्युः । एवमादीनि हि यणोऽनुनासिकत्वं न प्रतिज्ञायते । प्रतिज्ञानुनासिक्याः पाणिनीयाः ॥

## आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ।७।१।२॥

प्रत्ययादिभूतानां फादीनां क्रमादायन्नादय आदेशाः स्युः ॥ नाडायनः । सौपर्णेयः । आढ्यकुलीनः । गार्गीयः । क्षत्रियः । प्रत्ययग्रहणं किम् । फक्कति । आदिग्रहणं किम् । ऊरुदघ्नम् । आयन्नादयः प्रत्ययोपदेशकाले एव भवन्ति । तेषु कृतेषु प्रत्ययाद्युदात्तत्वं भवति । अन्यथा प्रत्ययसन्नियोगेनाद्युदात्तत्वे आन्तर्यत आदेशा अस्वरकाणामस्वरकाः स्युः । अत्र च ज्ञापकम् । घच्छौ चेति घचश्चित्करणम् । अन्यथा कृते आद्युदात्तत्वे पश्चादायन्नादीनां प्रवृत्तौ सिद्धेऽन्तोदात्तत्वे तद्वैयर्थ्यं स्पष्टमेव । फकारादिष्वकार उच्चारणार्थः । तेन ढक्ष आदेशसिद्धिः । आयनीनोर्नकारस्य नेत्वम् । फिनो नित्करणसामर्थ्यात् । वैपरीत्यन्तु न । असञ्जातविरोधन्यायात् । एजेः खशादिष्वित्संज्ञया आदेशो बाध्यते । आदेशो हि

तद्धिते सावकाशः । षट्कः । षण्ढः इत्याद्युणादीनां तु ऋतेरीयङित्येव सिद्धे ऋतेरीयङ्वचनाद्धातुप्रत्ययानामादेशाभावो ज्ञाप्यते इत्यदोषः । उणादयोऽव्युत्पन्नानि प्रातिपदिकानीत्येषोऽप्यत्र परिहारः सम्भवति ॥

## झोऽन्तः । ७ । १ । ३ ॥

प्रत्ययावयवस्य झस्यान्तादेशः स्यात् ॥ अकार उच्चारणार्थः । पचन्ति । आदिग्रहणं निवृत्तम् । तेन शयान्तै इत्यत्रान्तादेशः सिद्धः । तत्र हि शीङ उपसंवादाशङ्कयोश्चेति लेट् । तस्य झः । लेटोऽडाटावित्याडागमः । टेरेत्वम् । वैतोऽन्यत्रेत्यैत्वम् । झोन्तादेशः शप्लुक् । शीङः सार्वधातुके गुण इति गुणः । उणादिष्वप्ययं प्रवर्तते । जॄविशिभ्यां झच् । जरन्तो वेशन्तः । प्रत्ययस्य किम् । उज्झिता । अत्राप्यन्तादेशे कृते प्रत्ययाद्युदात्तत्वं भवति । अत एव झचश्चित्करणं सार्थकम् । एवमुत्तरसूत्रेऽपि ॥

## अदभ्यस्तात् । ७ । १ । ४ ॥

अभ्यस्तात् परस्य झस्यात्स्यात् ॥ अन्तापवादः । जक्षति । ददति । दधति । नन्वत्रान्तरङ्गत्वादन्तादेशः स्यादल्विधौ स्थानिवत्वायोगाच्च पुनरदादेशो न स्यात् । एवं तर्हि यद्यप्यन्तरङ्गो ह्रस्वस्तथाप्यपवादविषयं प्रकल्प्योत्सर्गाणां प्रवृत्तेर्न ग्रामण्ये कुलायेत्यादौ प्रवर्तत इति तृतीयादिष्विति सूत्रकैयटोक्तरीत्या पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशत इति प्रातिपदिकार्थसूत्र उभेअभ्यस्तमिति सूत्रभाष्यकैयटोक्तन्यायमूलकेनोपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्यु-

त्सर्गं बाधत इति न्यायेनान्तरङ्गोऽप्यन्तादेशो न भवति। अपवादोऽपि यद्यन्यत्रेति न्यायस्य तु नात्र विषयः। अन्तादेशाप्राप्तियोग्ये चारितार्थ्याभावात्। जुसादेशेन तु अयं बाध्यते। अदधुः। ईर्त्सन्ति प्रतीषिषन्तीत्यादौ नायमनत इत्यपकर्षादित्यभ्यस्तसंज्ञासूत्रे स्पष्टं भाष्यकैयटयोः॥

## आत्मनेपदेष्वनतः। ७। १। ५॥

अनकारात्परस्य आत्मनेपदेषु झस्यात्स्यात्॥ चिन्वते। आत्मनेपदेषु किम्। चिन्वन्ति। अनतः किम्। च्यवन्ते। विकरणोऽत्र नित्यत्वादिति वृत्तिः। अनत इति झकारविशेषणं न प्रत्ययस्य। अन्यथा अद्य श्वो वा विजनिष्यमाणाः पतिभिः सह शयान्तै इत्यत्रापि स्यात्।

## शीङो रुट्। ७। १। ६॥

शीङः परस्य झादेशस्यातो रुडागमः स्यात्॥ शेरते। झकारस्य रुड्वचने हि अदादेशो न स्यात्। अवयवावयवः समुदायावयवो भवतीति रुटा व्यवधानेऽपि शीङः सार्वधातुके गुणः। सानुबन्धग्रहणं यङ्लुगर्थम्। तेनेह न। व्यतिशेश्यते।

## वेत्तेर्विभाषा। ७। १। ७॥

वेत्तेः परस्य झादेशस्यातो रुडागमः स्यात् वा॥ संविद्रते। संविदते। संविद्रताम्। संविदताम्। वेत्तेरित्युक्तत्वान्नेह विन्दते।

## बहुलं छन्दसि। ७। १। ८॥

रुडागमः स्यात्॥ लोपस्त आत्मनेपदेष्विति पक्षे तलोपः।

धेनवो दुह्रे । लोपाभावे घृतं दुह्रते । अदृश्रमस्य केतवः । रुद्र-
श्रोऽडीति गुणाभावोऽप्यत्र बहुलवचनादिति वृत्तिः ॥

**अतो भिस ऐस् । ७ । १ । ९ ॥**

अतोऽङ्गाद्भिस ऐस् स्यात् ॥ अनेकाल्त्वात्सर्वादेशः । रामैः ।
अतः किम् । अग्निभिः । तपरकरणं किम् । खट्वाभिः । अत इत्य-
नुवर्तते । जसः शीति यावत् ॥

**बहुलं छन्दसि । ७ । १ । १० ॥**

ऐस् स्यात् ॥ अनतोऽपि भवति । नद्यैः । अतोऽपि न
भवति । अग्निर्देवेभिः ॥

**नेदमदसोरकोः । ७ । १ । ११ ।**

अककारयोरिदमदसोर्भिस ऐस्न स्यात् ॥ एभिः । अमीभिः ।
अकोः किम् । इमकैः । अमुकैः । अकोरित्येव हि ज्ञापकम् ।
तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति । तेन सर्वके उच्चकैरित्यादौ
सर्वनामाव्ययसंज्ञे सिध्यतः ॥

**टाङसिङसामिनात्स्याः । ७ । १ । १२ ॥**

अदन्तादङ्गाट्टादीनां क्रमादिनादय आदेशाः स्युः ॥ रामेण ।
रामात् । रामस्य । तस्य द्वित्वपक्षे खरिचेति चर्त्वे अन्तरतमस-
स्य स एव न तु तकारः । अल्पप्राणतया प्रयत्नभेदात् । अत एव
सः सीति तादेश आरभ्यते । अतः किम् । सख्या । सख्युरिति
वृत्तिः ॥

**ङेर्यः । ७ । १ । १३ ॥**

अतोऽङ्गात्परस्य ङे इत्यस्य यादेशः स्यात् ॥ रामाय । इह

याडेशस्य स्थानिवद्भावेन सुप्त्वात्सुपि चेति दीर्घः । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषा तु नेह प्रवर्तते । कष्टाय क्रमण इति निर्देशेन तस्या अनित्यत्वज्ञापनात् । श्रीपायेत्यत्र संनिपातपरिभाषया आतो धातोरित्यालोपो न । अतः किम् । सख्ये ॥

## सर्वनाम्नः स्मै । ७ । १ । १४ ॥

अतः सर्वनाम्नो ङे इत्यस्य स्मै स्यात् । सर्वस्मै । विश्वस्मै । यस्मै । तस्मै । अस्मै । अत्वे कृते यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यमित्यनित्यत्वाण्ङेः स्मै पश्चाट्टिलोपः ॥ अतः किम् ॥ भवते ।

## ङसिङ्योः स्मात्स्मिनौ । ७ । १ । १५ ॥

अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् । विश्वस्मात् । यस्मात् । तस्मात् । अस्मात् । सर्वस्मिन् । विश्वस्मिन् । यस्मिन् । तस्मिन् । अस्मिन् । अतः किम् । भवतः । भवति ॥

## पूर्वादिभ्यो नवभ्यो वा । ७ । १ । १६ ॥

एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः ॥ पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । एवं परादीनामपि । नवभ्यः किम् । त्यस्मात् । त्यस्मिन् ॥

## जसः शी । ७ । १ । १७ ॥

अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात् ॥ अनेकाल्त्वात्सर्वादेशः । न चार्वणस्तृ इत्यादाविव नानुबन्धकृतमनेकाल्त्वमिति वाच्यम् । सर्वादेशत्वात्प्रागित्संज्ञाया एवाभावात् । सर्वे । विश्वे । ये । ते । इमे । के । दीर्घोच्चारणमुत्तरार्थम् ॥

औङ आपः । ७ । १ । १८ ॥

आबन्तादङ्गात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे ॥

नपुंसकाच्च । ७ । १ । १९ ॥

क्लीबात् परस्यौङः शी स्यात् । ज्ञाने । वारिणी । मधुनी । धातृणी । स्वनडुही ॥

जश्शसोः शिः । ७ । १ । २० ॥

क्लीबात् परयोर्जश्शसोः शिः स्यात् । ज्ञानानि । वारीणि । मधूनि । धातॄणि । स्वनड्वांहि । शस्यप्येवम् । जसा सहचरितस्य शसो ग्रहणान्नेह । कुण्डशः ॥

अष्टाभ्य औश् । ७ । १ । २१ ॥

कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात् । अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । वैकल्पिकं चेदमष्टन आ विभक्ताविति चाष्टन आत्वम् । अष्टनो दीर्घादिति सूत्रे दीर्घग्रहणाज्ज्ञापकात् । अष्टौ । अष्टौ । तदन्ते परमाष्टौ । आत्वाभावे अष्ट । अष्ट । पञ्चवत् । बहुवचननिर्देशाद्गौणत्वे आत्वाभावे राजवत् । शसि प्रियाष्ट्नः । इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवत्त्वान्न ष्टुत्वम् । कार्यकालपक्षे बहिरङ्गस्याल्लोपस्यासिद्धत्वाद्वा ॥

षड्भ्यो लुक् । ७ । १ । २२ ॥

षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् । षट् । षट् । पञ्च । पञ्च । एवं सप्तन् नवन् दशन् । कति । कति । अस्मद्युष्मद्षट्संज्ञास्त्रिषु

सरूपाः । शतानि । सहस्राणीत्यत्र सन्निपातपरिभाषया न लुक् । सर्वनामस्थानसन्निपातेन कृतस्य नुमस्तदविघातकत्वात् । तदन्ते परमषट् । परमपञ्च । बहुवचननिर्देशाद्गौणत्वे न लुक् । प्रियषषः । प्रियपञ्चानः ।

## स्वमोर्नपुंसकात् ॥ ७ । १ । २३ ॥

क्लीबादङ्गात्स्वमोर्लुक् स्यात् ॥ वारि । वारि । मधु । मधु । धातृ । धातृ । स्वनडुत् । स्वनडुत् । किम् । अत्र यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति परमपि त्यदाद्यत्वं कादेशं च बाधित्वा लुक् । स्पष्टञ्चेदं भाष्ये ।

## अतोऽम् । ७ । १ । २४ ॥

अतोऽङ्गात् क्लीबात्स्वमोरम् स्यात् । ज्ञानम् । ज्ञानम् ॥

## अद्ड्डतरादिभ्यः पञ्चभ्यः । ७ । १ । २५ ॥

एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात् ॥ कतरत् । कतमत् । अन्यत् । अन्यतरत् । इतरत् । अम्यप्येवम् । टेर्लुप्तत्वात्प्रथमयोरिति न पूर्वसवर्णदीर्घः । एङ्ह्रस्वादिति सम्बुद्धिलोपश्च न भवति । हे कतरत् । पञ्चभ्यः किम् । नेमम् । अन्यतमस्य तु अन्यतममित्येव ॥

## नेतराच्छन्दसि । ७ । १ । २६ ॥

स्वमोरदड् न ॥ इतरमितरमण्डमजायत । वार्त्रघ्नमितरम् । छन्दसीति किम् । इतरत्काष्ठम् ॥ एकतरात्सर्वत्रेति वक्तव्यम् ॥ * ॥ एकतरम् ।

युष्मदस्मद्भ्यां ङसोऽश् । ७ । १ । २७ ॥

आभ्यां ङसः स्थाने अश् स्यात् ॥ तव । मम । शित्वं सर्वादेशार्थम्। अन्यथा ह्यादेशव्यपदेशेन यत्वनिवृत्त्यर्थमादेरेव स्यात् न चावयवस्यादेशे सत्यपि विभक्तेरनादेशनाऽस्त्येवेति वाच्यम् । एवं सर्वपदादेशा इति सिद्धान्तात् ॥

ङे प्रथमयोरम् । ७ । १ । २८ ॥

युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः स्यात् ॥ तुभ्यम् । मह्यम् । त्वम् । अहम् । युवाम् । आवाम् । यूयम् । वयम् । त्वाम् । माम् । युवाम् । आवाम् ।

शसो न । ७ । १ । २९ ॥

नेत्यविभक्तिकम् । युष्मदस्मद्भ्यां परस्य शसो नकारः स्यादमोऽपवादः । आदेः परस्य । संयोगान्तस्य लोपः । युष्मान् अस्मान् ब्राह्मणान् ब्राह्मणीः कुलानि वा ।

भ्यसोऽभ्यम् । ७ । १ । ३० ॥

भ्यसो भ्यम् अभ्यम् वा आदेशः स्यात् ॥ आद्यः शेषे लोपस्यान्त्यलोपत्वे एव । तत्राङ्गवृत्तपरिभाषया एत्वं न । अभ्यम् तु पक्षद्वयेऽपि साधुः । युष्मभ्यम् । अस्मभ्यम् ।

पञ्चम्या अत् । ७ । १ । ३१ ॥

आभ्यां पञ्चम्या भ्यसो ऽत्स्यात् ॥ युष्मत् । अस्मत् ।

एकवचनस्य च । ७ । १ । ३२ ॥

आभ्यां पञ्चम्येकवचनस्यात्स्यात् ॥ त्वत् । मत् । ङसेश्चेति सुवचम् ॥

### साम आकम् । ७ । १ । ३३ ॥

आभ्यां परस्य साम आकम् स्यात् ॥ भाविनः सुटो निवृत्त्यर्थम् ससुट्कनिर्देशः । युष्माकम् । अस्माकम् ॥

### आत औ णलः । ७ । १ । ३४ ॥

आदन्ताद्धातोर्णल औकारादेशः स्यात् । ददौ । पपौ । तस्थौ । जग्लौ । मम्लौ ।

### तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् । ७ । १ । ३५ ॥

आशिषि तुह्योस्तातङ् वा स्यात् ॥ अनेकाल्त्वात्सर्वादेशः । यद्यपि ङिच्चेत्ययमपवादस्तथाप्यनन्यार्थङित्त्वेष्वनङादिषु चरितार्थ इति गुणवृद्धिप्रतिषेधसंप्रसारणाद्यर्थतया सम्भवत्प्रयोजनङकारे तातङि मन्यरं प्रवृत्तः परेण बाध्यते । इहोत्सर्गापवादयोरपि समबलत्वात् । ब्रूतात् । मृष्टात् । उष्टात् । हेरप्येवम् ॥

### विदेः शतुर्वसुः । ७ । १ । ३६ ॥

वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात् ॥ विद्वान् । विद्वांसौ । विदन् । विदन्तौ । स्थानिवद्भावादुगित्कार्ये सिद्धे वसोरुकारकरणं वसोः संप्रसारणमित्यत्र क्वसोरपि सामान्यग्रहणार्थम् । एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येत्येतदपि न भवति । तथा सति वसोरुकारकरणमनर्थकं स्यात् ॥

### समासेऽनञ्पूर्वे क्त्वो ल्यप् । ७ । १ । ३७ ॥

अव्ययपूर्वपदे अनञ्समासे क्त्वो ल्यबादेशः स्यात् ॥ प्रकृत्य । प्रहृत्य । पार्श्वतःकृत्य । आद्यादित्वात्सप्तम्यन्तात्तसिः । स्वाङ्गे

तत्प्रत्यये इति क्त्वा । तूष्णींभूय । तूष्णीमि भुव इति क्त्वा । नाना-कृत्य । द्विधाकृत्य । नाधार्थप्रत्यये इति क्त्वा । उपपदसमासः । समासे किम् । कृत्वा । अनञ् किम् । अकृत्वा । अप्रकृत्येत्यादौ तु भवत्येव । पर्युदासाश्रयणान्नेह । परमकृत्वा । सन्महत्परमेति समासः । स्नात्वाकालकः सम्पन्न इत्येवमादिषु मयूरव्यंसकादिषु निपातनाल्ल्यबादेशो न भवति । अथवा समास इति निर्द्धारणस-प्तमी । तेन क्त्वान्तः समास एव निर्द्धार्यते । स च येन विधिस्त-दन्तस्येत्यनेन तदन्तविधिना । न तु कृद्ग्रहणे गतिकारकपूर्वस्या-पीति तथा चानञ्पूर्व इत्युच्यते । गतिकारकपूर्वस्यैव तु ग्रहणे सति नञ्पूर्वस्य प्रसङ्ग एव नास्ति । नञ् न गतिर्न च कारकमिति प्रधायेत्यादिषु हिप्रभृतीनन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधत इति ज्ञापितमदोजग्धिरिति सूत्रे ॥

## क्त्वापि छन्दसि । ७ । १ । ३८ ॥

यजमानं परिधापयित्वा । ल्यबपि । उद्धृत्य जुहोति । वा छन्दसीति नोक्तम् । सर्वोपाधिव्यभिचारार्थम् । तेनासमासे ल्यप् भवति । अर्च्य तान्देवान् गतः । छन्दोऽधिकार आज्जसेरसुगिति यावत् ॥

## सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः । ७ । १ । ३९ ॥

ऋजवः सन्तु पन्थाः । पन्थान इति प्राप्ते सुः । परमे व्योमन् । व्योमनीति प्राप्ते ङिलुक् । धीती । मती । सुष्टुती । धीत्या मत्या सुष्टुत्येति प्राप्ते पूर्वसवर्णः । या सुरथा रथीतमा दिविस्पृशा अश्विना । यौ सुरथौ दिविस्पृशाविति प्राप्ते आ । नताद् ब्राह्मणम् । नतमिति प्राप्ते आत् । न युष्मे वाजबन्धवः । अस्मे इन्द्रा बृहस्पती । युष्मासु

अस्मभ्यमिति प्राप्ते शे । उरुया । धृष्णुया । उरुणा धृष्णुनेति प्राप्ते या । नाभा पृथिव्याः । नाभाविति प्राप्ते डा । ता अनुष्ठ्या च्यावय-तात् । अनुष्ठानमनुष्ठा । व्यवस्थावदङ् । आङो ड्या । साधुया । साध्विति याच् । वसन्ता यजेत । वसन्ते इति प्राप्ते आल् ॥ इयाडियाजीकाराणामुपसंख्यानम् ॥ * ॥ उर्विया । दार्विया । उरुणा दारुणा प्राप्ते इया । सुक्षेत्रिया । सुक्षेत्रेणेति प्राप्ते डियाच् । दृतिं न शुष्कं सरसी शयानम् । ङेरीकार इत्याहुः । तत्राद्युदात्ते प्राप्ते व्यत्य-येनान्तोदात्तता । वस्तुतस्तु ङीषन्तात् ङेर्लुक् । ईकारादेशस्य तूदा-हरणान्तरं मृग्यम् ॥ आङ्याजयारामुपसंख्यानम् ॥ * ॥ प्रबाहवा-सेवनम् । बाहुनेति प्राप्ते । स्वप्नया स्वप्नेनेति प्राप्ते अयाच् । स नः सिन्धु-मिव नावया । नावेति प्राप्ते अयार् । रित्वमुपोत्तमं रितीत्युदात्तार्थम् ॥

## अमो मश् । ७ । १ । ४० ॥

मिबादेशस्यामो मश् स्यात् । अकार उच्चारणार्थः । शित्वं सर्वादेशार्थम् । मकारस्यापि हि मकारवचनमनुस्वारनिवृत्त्यर्थं स्यात् । अस्तिसिच इतीट् । वधीं वृत्रम् । अवधिषमिति प्राप्ते ।

## लोपस्त आत्मनेपदेषु । ७ । १ । ४१ ॥

आत्मनेपदेषु यस्तकारस्तस्य लोपः स्यात् । देवा अदुह्र । अदुह्रतेति प्राप्ते । दक्षिणतः शये । शेते इति प्राप्ते । अधीत्यधिका-रान्न भवति । तत आत्मानमावृत्त कुरुते । आत्मनेपदेषु किम् । वत्सं दुहन्ति ।

## ध्वमो ध्वात् । ७ । १ । ४२ ॥

अन्तरेवोष्माणं वारयध्वात् ॥ वारयध्वमिति प्राप्ते ॥

## यजध्वैनमिति च । ७ । १ । ४३ ॥

एनमित्यस्मिन् परे ध्वमोऽन्तलोपो निपात्यते । यजध्वैनं प्रियमेधाः । वकारस्य यकारोऽपि निपात्यते इति वृत्तिकारोक्तिः प्रामादिकी ॥

## तस्य तात् । ७ । १ । ४४ ॥

तशब्दस्य मध्यमपुरुषबहुवचनस्य स्थाने तात्स्यात् ॥ गात्रमस्य नूनं कृणुतात् । कृणुतेति प्राप्ते । सूर्यंचक्षुर्गमयतात् । गमयतेति प्राप्ते ।

## तप्तनप्तनथनाश्च । ७ । १ । ४५ ॥

तस्येत्येव । शृणोत ग्रावाणः । शृणुतेति प्राप्ते तप् । दधातन द्रविणम् । धत्तेति प्राप्ते तनप् । मरुतस्तज्जुजुष्टन । जुषध्वमिति प्राप्ते व्यत्ययेन परस्मैपदं श्लुश्च । अत्र तनादेशः । विश्वे देवासो मरुतो यतिष्ठन । यत्संख्याकाः स्थेत्यर्थः । यच्छब्दाच्छान्दसो डतिः । अस्तेस्तस्य थनादेशः ।

## इदन्तो मसि । ७ । १ । ४६ ॥

मसीत्यविभक्तिको निर्देशः । इकार उच्चारणार्थः । मसित्ययमिकाररूपचरमावयवविशिष्टः स्यात् । मस इगागमः स्यात् इति यावत् । नमो भरन्त एमसि । त्वमस्माकं तव स्मसि । इम इति स्म इति प्राप्ते ॥

## क्त्वो यक् । ७ । १ । ४७ ॥

दिवं सुपर्णो गत्वाय ॥

## इष्ट्वीनमिति च । ७ । १ । ४८ ॥

यजेः क्त्वाप्रत्ययस्य ईनमन्तादेशो निपात्यते । इष्ट्वीनं देवान् इष्ट्वेति प्राप्ते ।

## स्नात्व्यादयश्च । ७ । १ । ४९ ॥

आदिशब्दः प्रकारार्थः । आकारस्य ईकारो निपात्यते । स्विन्नः स्नात्वी मलादिव । पीत्वी सोमस्य वावृधे । स्नात्वा पीत्वेति प्राप्ते ॥

## आज्जसेरसुक् । ७ । १ । ५० ॥

अवर्णान्तादङ्गात् परस्य जसोऽसुक् स्यात् । देवासः । ब्राह्मणासः ॥

## अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । ७ । १ । ५१ ॥

छन्दसीति निवृत्तम् । एषां क्यचि परे असुगागमः स्यात् ॥ अश्ववृषयोर्मैथुनेच्छायाम् ॥ * ॥ अश्वस्यति वडवा । वृषस्यति गौः ॥ क्षीरलवणयोर्लालसायाम् ॥ क्षीरस्यति बालः । लवणस्यति उष्ट्रः । सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ ॥ * ॥ दधिस्यति । दध्यस्यति । मधुस्यति । मध्वस्यति ।

## आमि सर्वनाम्नः सुट् । ७ । १ । ५२ ॥

आदिति वर्तते ॥ अवर्णान्तादङ्गात् परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्वषत्वे । सर्वेषाम् । येषाम् । तेषाम् । केषाम् । इह त्वेकादेशस्य पूर्वान्तवत्त्वेन ग्रहणात्सुट् । सर्वासाम् । यासाम् । तासाम् । कासाम् । आत्किम् । भवताम् ॥

## त्रेस्त्रयः । ७ । १ । ५३ ॥

त्रिशब्दस्य त्रयादेशः स्यादामि ॥ त्रिशब्दो नित्यं बहुवचनान्तः । त्रयाणाम् । तदन्ते परमत्रयाणाम् । गौणत्वे तु नेति केचित् । प्रियत्रीणाम् । वस्तुतस्तु प्रियत्रयाणाम् ॥

## ह्रस्वनद्यापो नुट् । ७ । १ । ५४ ॥

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात् ॥ रामाणाम् ॥ हरीणाम् । मतीनाम् । शम्भूनाम् । धेनूनाम् । कर्तॄणाम् । गम्तॄणाम् । गौरीणाम् । बहुश्रेयसीनाम् । वधूनाम् । अतिचमूनाम् । रमाणाम् । खट्वानाम् । बहुराजानाम् । कारीषगन्ध्यानाम् ।

## षट्चतुर्भ्यश्च । ७ । १ । ५५ ॥

षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागमः स्यात् । षण्णाम् । अनामिति पर्युदासान्न ष्टुत्वनिषेधः । यरोऽनुनासिकेऽनुनासिक इति विकल्पं बाधित्वा प्रत्यये नित्यमिति वचनान्नित्यमनुनासिकः । पञ्चानाम् । चतुर्णाम् । णत्वम् । द्वित्वम् । तदन्ते परमषण्णाम् । परमपञ्चानाम् । परमचतुर्णाम् । बहुवचननिर्देशाद्गौणत्वे न नुट् । प्रियषषाम् । प्रियपञ्चाम् । जकारद्वयमध्ये चकारः । प्रियचतुराम् ॥

## श्रीग्रामण्योश्छन्दसि । ७ । १ । ५६ ॥

आमो नुट् । श्रीणामुदारो धरुणो रयीणाम् । सूतग्रामणीनाम् ॥

## गोः पादान्ते । ७ । १ । ५७ ॥

छन्दसीत्येव । विद्मा हि त्वा गोपतिं शूर गोनाम् । पादान्ते

किम् । गवां शता पृक्षयामेषु वज्रे । पादान्तेऽपि क्वचिन्न । छन्दसि सर्वविधीनां वैकल्पिकत्वात् । विराजं गोपतिं गवाम् ॥

## इदितो नुम् धातोः । ७ । १ । ५८ ॥

स्कुन्दते । चुस्कुन्दे । स्कुन्दिता । स्कुन्दितव्यम् । इदितः किम् । पचति । धातूपदेशावस्थायामेवायं नुम् । कुण्डा हुण्डेति गुरोश्च हल इत्यकारो यथा स्यात् । अत एव धातुग्रहणं सार्थकम् । तद्धि अधातोरिदितोऽसम्भवाद्धातुसंज्ञाप्रवृत्त्यवस्थोपलक्षणार्थं विज्ञायते । शिचस्तावेश्कार उच्चारणार्थं इत्यभैत्सीदेधितास्म इत्यादाव-नुमर्थं न तत् । नन्वेवममंस्तेत्यादावनिदित्वान्नलोपः स्यात् । एवं तर्हि हनः सिजिति नलोपार्थात्कित्वविधानाज्ज्ञापकाददोषः । मन्ता आहन्तेत्यादौ त्वसिद्धवदत्राभादिति टिलोपस्यासिद्धत्वादनिदित्वेऽपि नलोपाप्रसङ्गः । भेत्ता छेत्तेत्यादौ तु इर इत्संज्ञा वाच्येति समुदायस्ये-त्संज्ञेत्यनिदित्वान्न नुम् । अवयवशोऽपीत्संज्ञेति पक्षे तु पूर्वसूत्रादन्त ग्रहणमनुवर्त्यान्तेदित इति व्याख्यानात् । युक्तञ्चैतत् । अन्यथा चक्षिङ्व्यक्तायां वाचीत्यस्य नुमापत्तेः । इकारो ह्यनुदात्त इत्संज्ञको युजर्थः । विचक्षणः प्रथयन् । अथैवं ङकारः किमर्थः आत्मनेपद-स्यापि तेनैव सिद्धत्वादिति चेदनुदात्तेत्वप्रयुक्तमात्मनेपदमनि-त्यमिति ज्ञापनार्थः । तेन स्फायन्निमौकसन्धीत्यादि सिध्यति । उदयति विततोर्ध्वरश्मिरज्जाविति माघश्च । अन्यथा अयवयेति दण्डकपठितस्यात्मनेपदित्वाच्छत्रसङ्गतेः । यद्वा इटकटकटीत्यत्र प्रश्लिष्टस्य भविष्यति ।

## शे मुचादीनाम् । ७ । १ । ५९ ॥

नुम् स्यात् । मुञ्चति । लुम्पति । विन्दति । लिम्पति । सिञ्चति । कृन्तति । खिन्दति । पिंशति । शे किम् । मोक्ता । मोक्तव्यम् । मुचादीनां किम् । तुदति ॥ शे तृम्फादीनां नुम् वाच्यः ॥ * ॥ तृम्फति । तुम्फति । आदिशब्दः प्रकारे । तेन येच नकारानुषक्तास्ते तृम्फादयः । तेनेह न । तुपति । तुफति ।

## मस्जिनशोर्झलि । ७ । १ । ६० ॥

नुम् स्यात् । मस्जेरन्त्यात्पूर्वो नुम् वाच्यः । अनुषङ्गसंयोगादिलोपार्थम् । मग्नः । मग्नवान् । मङ्क्ता । मङ्क्तुम् । नंष्टा । नंष्टुम् । झलि किम् ॥ मज्जनम् । नशनम् ।

## रधिजभोरचि । ७ । १ । ६१ ॥

एतयोर्नुमागमः स्यादचि परे । रन्धयति । रन्धकः । जम्भयति । जम्भकः । परोऽपि वृद्धिर्नित्यत्वान्नुमा बाध्यते । अचि किम् । रद्धा । जब्धुम् ।

## नेट्यलिटि रधेः । ७ । १ । ६२ ॥

लिड्वर्जे इटि रधेर्नुम् न स्यात् ॥ रधिता । रधितुम् । इटि किम् । रन्धनम् । अलिटि किम् । ररन्धि । ननु जभोऽचि रधेश्च नेट्यलिटीत्येव सूच्यताम् । किं द्वौ रधिग्रहणेनेति चेन्न । प्रतिवाक्यं भिन्नवाक्यार्थकल्पने गौरवात् । तदाहुः । पदगौरवाद्योगविभागो गरीयानिति ॥

## रभेरशब्लिटोः । ७ । १ । ६३ ॥

रभेर्नुम्स्यात् न तु शब्लिटोः । आरम्भयति । आरम्भकः । अशब्लिटोः किम् । आरभते । आरेभे । अचीत्येव । आरब्धा ॥

## लभेश्च । ७ । १ । ६४ ॥

प्राग्वत् । लम्भयति । लम्भकः । अशब्लिटि किम् । लभते । लेभे । अचि किम् । लब्धा । पृथग्योगकरणमुत्तरार्थम् ॥

## आङो यि । ७ । १ । ६५ ॥

आङः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते ॥ नुमि कृतेऽदुपधत्वाभावात् ण्यदेव । आलम्भ्यो गौः । कृदुत्तरपदप्रकृतिस्वरत्वेनान्तस्वरितत्वं भवति । पोरदुपधादिति यति तु कृदुत्तरपदप्रकृतिस्वरेण यतोनाव इत्याद्युदात्तत्वप्रसङ्गः । आङः किम् । लभ्यः । यदेव ।

## उपात्प्रशंसायाम् । ७ । १ । ६६ ॥

प्राग्वत् ॥ उपलम्भ्यः साधुः । पूर्ववत् ण्यत् । प्रशंसायां किम् । उपलब्धुं शक्यमुपलभ्यम् । यदेव ॥

## उपसर्गात् खल्घञोः । ७ । १ । ६७ ॥

उपसर्गादेव लभेर्नुम् स्यात् । ईषत्प्रलम्भः । सुप्रलम्भः । उपालम्भः । उपसर्गात्किम् । ईषल्लभः । लाभः ॥

## न सुदुर्भ्यां केवलाभ्याम् । ७ । १ । ६८ ॥

उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम् न स्यात् खल्घञोः । सुलभम् । दुर्लभम् । सुलाभः । दुर्लाभः । केवलाभ्यां किम् । सुप्रलम्भः । अतिदुर्लम्भः । कथं तर्हि अतिसुलभं अतिदुर्लभमिति यदा स्वती कर्मप्रवचनीयौ तदा भविष्यति ॥

## विभाषा चिण्णमुलोः । ७ । १ । ६९ ॥

लभेर्नुमागमो वा स्यात् ॥ अलम्भि । अलाभि । लम्भम् । लम्भम् । लाभम् । लाभम् । व्यवस्थितविभाषयोपसृष्टस्य नित्यं नुम् । प्रालम्भि । प्रलम्भम् । प्रलम्भम् ॥

## उगिदचां सर्वनामस्थानेऽधातोः । ७ । १ । ७० ॥

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यात्सर्वनामस्थाने परे ॥ भवान् । भवन्तौ । श्रेयान् । श्रेयांसौ । पचन् । पचन्तौ । प्राङ् । प्राञ्चौ । उगिदचां किम् । दृषद् । दृषदौ । सर्वनामस्थाने किम् । भवतः । भवता । अञ्चतिग्रहणं नियमार्थम् । धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति । तेनोख्रासत् ब्राह्मणीत्यादौ नुम्ङीपौ गोमन्तमिच्छति गोमानिवाचरति वा क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विपि गोमान् ब्राह्मणीत्यादौ च ङीप् च न । नुम् तु अधातुग्रहणस्याधातुभूतपूर्वस्यापि नुमर्थत्वात् ।

## युजेरसमासे । ७ । १ । ७१ ॥

युजेः सर्वनामस्थाने नुम् स्यादसमासे । युङ् । युञ्जौ । युञ्जः । क्विन् प्रत्ययस्येति कुत्वेनानुनासिको ङकारः । असमासे किम् । सुयुक् । सुयुजौ । सुयुजः । युजेरिति धातुपाठपठितेकारविशिष्टस्यानुकरणं न त्विका निर्देशः । तेनेह न । युज्यते समाधत्ते इति युक् । युज समाधौ दैवादिक आत्मनेपदी ।

## नपुंसकस्य झलचः । ७ । १ । ७२ ॥

झलन्तस्याजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने परे । बहूनडुंहि कुलानि । अचामागमे कृते पुनः प्रसङ्गविज्ञानेन नुम् । असृञ्जि । ऊर्ञ्जि । नरजानां संयोगः । गवाञ्चि । शकृन्ति । स्वाम्पि ।

नित्यात्परादपि नुमः प्राक् अप्तृन्निति दीर्घः प्रतिपदोक्तत्वात् । निरव-काशत्वं प्रतिपदोक्तत्वमिति पक्षे तु प्रकृते तद्विरहान्नुमेव स्वम्यि । धनूंषि । पयांसि । ज्ञानानि । बेभिद्यतेः पिपठिषतेश्च क्विपि शौ बेभिदि पिपठिषि इत्यादौ अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम्न । स्वविधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि न । नपुंसकस्य किम् । अग्निचि-द्ब्राह्मणः । झलचः किम् । विमलदिवि । चत्वारि । बहूर्जि नुम् प्रतिषेधः । अन्त्यात्पूर्वो वा नुम् । बहूर्जि बहूर्ञ्जि वा कुलानि ॥

## इकोऽचि विभक्तौ । ७ । १ ७३ ॥

इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ । वारिणी । त्रपुणी । वारिणे । त्रपुणे । इकः किम् । कुण्डे पीठे । अचीत्युत्तरार्थ-मिह करणान्तु न लुमतेत्यस्यानित्यत्वज्ञापनार्थम् । तद्धि संबुद्धौ नुमं वारयितुं कृतं भ्यामादिषु सत्यपि नुमि तल्लोपसम्भवात् । सम्बुद्धिश्च लुका लुप्तेति प्रत्ययलक्षणेन नुमः प्राप्तिर्वाच्या प्रत्ययलक्षणं च न लुमतेतिनिषेधस्यानित्यतांविना दुर्लभमिति । तेन हे त्रपु हे त्रपो इति सम्बुद्धौ ह्रस्वस्य गुण इति गुणविकल्पः सिध्यति । विभक्तौ किम् । मधुन इदं माधवम् ॥

## तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य । ७ । १ । ७४ ॥

प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्याट्टादा-वचि । ग्रामणी ब्राह्मणः । ग्रामणि कुलम् । ग्रामण्या ग्रामणिना वा कुलेन । अनादये । अनादिने । सुधिया । सुधिना । प्रध्या । प्रधिना । सुल्वा । सुलुना । पुंवत्पक्षे प्रियक्रोष्ट्रा । प्रियक्रोष्टुना । प्रियक्रोष्ट्रे । प्रियक्रो-ष्टवे । अन्यच्च तृज्वद्भावात्पूर्वविप्रतिषेधेन नुमेव । प्रियक्रोष्टुना । प्रिय-

क्रोष्टुने । नुमचिरेतिनुट् । प्रियक्रोष्टूनाम् । धात्रा । धातृणा । तृतीयादिषु किम् । ग्रामणिनी कुले । भाषितपुंस्क किम् । त्रपुणे । जतुने । प्रद्युना । प्रविणा । सुनुना अत्रापि न पुंवत् । यदिगन्तप्रद्यु इत्यादि तस्य भाषितपुंस्कत्वाभावात् । पीलुर्वृक्षस्तत्फलं पीलु तस्मै पीलुने अत्रापि न पुंवत् प्रवृत्तिनिमित्तभेदात् । इकः किम् । कीलालपेन कुलेन । अचि किम् । ग्रामणिभ्याम् ॥

## अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । ७ । १ । ७५ ॥

एषामनङ् स्याट्टादावचि परे स चोदात्तः । अस्थ्ना । अस्थ्ने । दध्ना । दध्ने । सक्थ्ना । सक्थ्ने । अक्ष्णा । अक्ष्णे । तदन्तस्याप्यनङ् । अत्यस्थ्ना । अतिदध्ना । अतिसक्थ्ना । अत्यक्ष्णा ब्राह्मणेन । ब्राह्मणस्य कुलेन वा । तृतीयादिषु किम् । अस्थिनी । दधिनी । अचि किम् । अस्थिभ्याम् । उदात्तग्रहणं तु अनङादेरुदात्तस्यैवोच्चारणेन सिद्धेरस्थ्यादीनां नब्विषयस्येत्याद्युदात्ततया स्थान्यनुरूपे अनुदात्ते प्राप्ते तद्वारणार्थमित्यस्य वक्तुमशक्यत्वेनासति यत्ने स्वरूपेणोच्चारिता गुणा न विवक्ष्यते इति ज्ञापनार्थमिति वृद्धिसंज्ञासूत्रे भाष्ये स्पष्टम् । तदाहुः अभेदका गुणा इति तेन यूस्त्र्याख्याविव्यत्र व्यक्तिपक्षे दीर्घनिर्देशादनरात्वेन ग्राहकसूत्राप्राप्त्योदात्तादान्यतमोच्चारणेऽपि अन्यस्वरकस्य संज्ञासिद्धिः । स्वरूपेणोच्चारित इत्युक्तेरनुदात्तादेरन्तोदात्तादित्यादिशब्दोच्चारणे विवक्षैव । उञ ऊँ इत्यत्रानुनासिके एवोच्चारणीये यत्नाधिक्येनानुनासिकोच्चारणात्तद्विवक्षा बोध्या । एतदर्थमेवासति यत्ने इत्युक्तम् । चतसर्याद्युदात्तनिपातनङ्करिष्यते तथादेशे आद्युदात्तनिपातनं करिष्यते पदादयोऽन्तोदात्ता निपात्यन्ते । सहस्य स

उदात्तो निपात्यते इत्यादि भाष्यं तु एकश्रुत्याष्टाध्यायीपाठे क्वचिदु-दात्ताद्युच्चारणं विवक्षार्थमित्याशयेन चैस्वर्येण पाठ इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः ॥

## छन्दस्यपि दृश्यते । ७ । १ । ७६ ॥

अस्थ्यादीनामनङ् । इन्द्रो दधीचो अस्थभिः । भद्रं पश्येमाक्षभिः ।

## ई च द्विवचने । ७ । १ । ७७ ॥

छन्दसि अस्थ्यादीनामित्येव । अक्षीभ्यान्ते नासिकाभ्याम् ।

## नाभ्यस्ताच्छतुः । ७ । १ । ७८ ॥

अभ्यस्तात्परस्य शतुर्नुम् न स्यात् । ददत् । ददतौ । ददतः । जक्षत् । जाग्रत् । दरिद्रत् । शासत् । चकासत् । दीध्यत् । वेव्यत् । दीधीवेव्योर्ङित्त्वेपि छान्दसत्वाद् व्यत्ययेन परस्मैपदम् । शतुरनन्तर ईकारेईकारो न विहित इति व्यवहितस्यापि नुमः प्रति-षेधो विज्ञायते ।

## वा नपुंसकस्य । ७ । १ । ७९ ॥

अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य नुम् वा स्यात् सर्वनामस्थाने । ददन्ति । ददति । जक्षन्ति । जक्षति कुलानि ।

## आच्छीनद्योर्नुम् । ७ । १ । ८० ॥

अवर्णात्परो यः शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्याच्छी-नद्योः परतः । तुदन्ती कुले । तुदन्ती । तुदती ब्राह्मणी । भान्ती कुले । भान्ती । भाती ब्राह्मणी । परोयः शतेति तु नोक्तं तुदन्ती-त्यादावेकादेशे उभयत आश्रयणे नान्तादिवद्भावाभावेन नुमभावापत्तेः । भूतपूर्वगत्याद्याश्रयणे तु अदती घ्नती लुनती पुनतीत्यादावपि

नुमापत्तेः । शवयवव्यतिरिक्तश्चावर्णो गृह्यते आदित्युपादानसा-
मर्थ्यात् । आत्किम् । कुर्वती । शीनद्योः किम् । तुदताम् ।

## शप्श्यनोर्नित्यम् । ७ । १ । ८१ ॥

शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्यात्
शीनद्योः परतः । पचन्ती पचन्ती कुले ब्राह्मणी वा । दीव्यन्ती
दीव्यन्ती कुले ब्राह्मणी वा । आत्किम् । भातीत्यादौ । नित्य-
नुमभावाय । अन्यथा प्रत्ययलक्षणेन स्यात् । आदित्युक्तौ तु वर्ण-
प्राधान्यान्न प्रत्ययलक्षणम् ।

## सावनडुहः । ७ । १ । ८२ ॥

अस्य नुम् स्यात्सौ । आच्छीनद्योर्नुमिति सूत्रादादित्यधिका-
रादवर्णात्परोऽयं नुम् । अतो विशेषविहितेनापि नुमाम् न बाध्यते
अम्सम्बुद्धावित्यमा च नुम् न बाध्यते । नुम्विधिसामर्थ्याद्वसुस्रंस्विति
दत्वं न । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । अनड्वान् । हे अनड्वन् ।

## दृक्स्ववस्स्वतवसां छन्दसि । ७ । १ । ८३ ॥

एषां नुम् स्यात्सौ । कीदृङ् । स्ववान् । स्वतवान् ।

## दिव औत् । ७ । १ । ८४ ॥

दिवित्यस्य औत्स्यात्सौ परे । तकार उच्चारणार्थः । द्यौः ।
तदन्ते सुद्यौः । लुका लुप्ते प्रत्ययलक्षणाभावान्नेह । विमलद्यु अहः ।
निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषया नेह । अक्षद्यूः ।

## पथिमथ्यृभुक्षामात् । ७ । १ । ८५ ॥

एषामाकारोऽन्तादेशः स्यात्सौ परे । आ आदिति प्रश्लेषेण
शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः । पन्थाः । मन्थाः । ऋभुक्षाः ।

## इतोऽत्सर्वनामस्थाने । ७ । १ । ८६ ॥

पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने । पन्थाः । पन्थानौ । मन्थाः । मन्थानौ । ऋभुक्षाः । ऋभुक्षाणौ । आदिति वर्तमाने पुनरद्ग्रहणं वा षपूर्वस्य निगमे इति दीर्घविकल्पे अकारश्रवणार्थम् । ऋभुक्षणमिन्द्रम् ।

## थो न्थः । ७ । १ । ८७ ॥

पथिमथोस्थस्य न्थादेशः स्यात्सर्वनामस्थाने ॥ पन्थाः । पन्थानौ । पन्थानः । पन्थानम् । पन्थानौ । एवम् ।मन्थाः । मन्थानौ । ऋभुक्षः । ऋभुक्षाणौ ।

## भस्य टेर्लोपः । ७ । १ । ८८ ॥

भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात् । पथः । पथा । मथः । ऋभुक्षः । इत्यादि । स्त्रियां नान्तलक्षणे ङीपि भत्वाट्टिलोपः । सुपथी । सुमथी । नगरी । अनृभुक्षी सेना इत्यादौ पथिमथीत्यात्वं थोन्थश्च लिङ्गविशिष्टपरिभाषया प्राप्तं विभक्तौ लिङ्गविशिष्टाग्रहणान्न भवति । सुपथि वनमित्यादौ नपुंसके आत्वं न भवति । न लुमतेति प्रत्ययलक्षणनिषेधात् । हे सुपथिन् । हेसुपथि इत्यादौ संबुद्धौ नपुंसकानां नलोपो वा वक्तव्य इति वा नलोपः । नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वाद्ध्रस्वस्येति गुणो न । सुपथी इति द्विवचने भत्वाट्टिलोपः । शौ सर्वनामस्थानत्वात्सुपन्थानि । पुनरपि सुपथि । सुपथी । सुपन्थानि । सुपथा । सुपथे इत्यादि ॥

## पुंसोऽसुङ् । ७ । १ । ८९ ॥

सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् ॥ उकार उच्चार-

णार्थः । बहुपुंसीत्यत्र उगितश्चेति ङीबर्थं कृतेन पुंसो ङुम्सुन्निति प्रत्ययस्ययेऽगित्वेनैव नुम्सिद्धेः । पुमान् । हे पुमन् । पुमांसौ । पुमांसः । पुमांसम् । सुपुमांसि कुलानि । परमपुमानित्यत्र परत्वाद्‌सुङि कृते समासान्तोदात्तत्वं भवदसुङकारस्य स्यादित्यर्थं निवन्तिते इत्युक्तम् । परसप्तम्यान्तु नैतत्सिध्येत् । सर्वनामस्थानो-त्पत्तेः प्रागेव पुम्शब्दोकारस्योदात्तत्वं संसनर्धर्मिणो हलः स्थाने तद्धर्मिणो अनुदात्तस्यैवादेशस्य प्रसङ्गात् ॥

## गोतो णित् । ७ । १ । ९० ॥

गोशब्दात्परं सर्वनामस्थानं णित्कार्यकृत्स्यात् ॥ गौः । गावौ । गावः ॥ ओतो णिदिति वाच्यम् ॥ * ॥ विहितविशेषणं च ॥ तेन द्यौः । द्यावौ । द्यावः । तदन्ते सुद्यौः । सुद्यावौ । सुद्यावः । उः शम्भुः स्मृतो येन स्मृतौः । स्मृतावौ । स्मृतावः । ओकारा-न्ताद्विहितं सर्वनामस्थानमिति व्याख्यानान्नेह । हे भानो । भानवः ।

## णलुत्तमो वा । ७ । १ । ९१ ॥

उत्तमो णल् वा णित्स्यात् । अहं पपाच । पपच ॥

## सख्युरसंबुद्धौ । ७ । १ । ९२ ॥

सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ॥ सखायौ । सखायः । सखायम् । सखायौ ।

## अनङ् सौ । ७ । १ । ९३ ॥

सख्युरङ्गस्यानङादेशः स्यात् असंबुद्धौ सौ परे ॥ ङिच्चेत्य-न्तादेशः । सखा । असंबुद्धौ किम् । हे सखे । शोभनः सखा सुसखा । सुसखायौ । सुसखायः । सुसखायम् । सुसखायौ । अनङ्वि-

वृद्धावयोराङ्गत्वात्तदन्तेऽपि प्रवृत्तिः । एवमतिशयितः सखा अतिसखा परमः सखा यस्येति विग्रहे परमसखा । परमसखायावित्यादि । गौणत्वेऽप्यनङ्णित्वे प्रवर्तते । सखीमतिक्रान्तोऽतिसखिः । लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टच् । इहानङ्णित्वे न भवतः । गोस्त्रियो-रिति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात् । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् । सखायमिच्छति सखीयति । ततः क्विप् अल्लोपयलोपौ । अल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते क्वौ लुप्तं न स्थानिवत् । एवं अमि पूर्वरूपात्परत्वाद्यणि प्राप्ते ततोऽपि परत्वात्सख्युरसंबुद्धा-विति प्रवर्तते । सखायम् । सखायौ । सखी । सख्यौ । सख्यः । इत्यादौ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादनङ्णिद्वद्भावे च प्राप्ते विभक्तौ लिङ्गविशिष्टस्याग्रहणान्न भवतः ॥

## ऋदुशनस्पुरुदंसोऽनेहसां च । ७ । १ । ९४ ॥

ऋदन्तानामुशनसादीनां चानङ् स्यादसंबुद्धौ सौ परे । कर्ता । हर्ता । माता । पिता । हे गमल् । उशना । पुरुदंसा । अनेहा । संबुद्धौ तु हे कर्तः । हे गमलः । हे उशनः । हे पुरुदंशः । हे अनेहः । उशनसः संबुद्धौ वानङ् नलोपश्च वा वाच्यः ॥ * ॥ हे उशनन् । हे उशन । हे उशनः । तथा चोक्तम् । सम्बोधने तूशनस-स्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् । माध्यन्दिनि वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः । इति । एतच्च काशिकायां धातुवृत्तौ माधवग्रन्थे च वश कान्तावित्यत्र स्थितम् । कॄ तॄ अनयो-रनुकरणे प्रकृतिवदनुकरणमिति वैकल्पिकातिदेशादित्वे रपरत्वम् । कीः । किरौ । किरः । तीः । तिरौ । तिरः इत्यादि गीर्वत् ।

इत्वाभावपक्षे तु कॄः । क्रौ । क्रः । कॄम् । क्रौ । कॄन् । क्रा । क्रे । एवं नॄः । अत्र सावनङभावार्थं ऋदिति तपरकरणम् । ऋतो ङीति सुचेऽप्यत्रैव गुणभावार्थं च तत् ।

## तृज्वत्क्रोष्टुः । ७ । १ । ९५ ॥

क्रोष्टुस्तृजन्तेन तुल्यं वर्ततेऽसंबुद्धौ सर्वनामस्थाने परे ॥ क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः ॥ क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । सर्वनामस्थाने किम् । क्रोष्टून् । असंबुद्धौ किम् । हे क्रोष्टो । क्लीबे तु प्रियक्रोष्टु । प्रियक्रोष्टुनी । वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन ॥ * ॥ वृद्धेरवकाशः । सखायौ । नुमः त्रपुणे । इहोभयं प्राप्नोति । अतिसखीनि । कुलानि । औत्वस्यावकाशः । अग्नौ । नुमः स एव । इहोभयं प्राप्नोति । त्रपुणि । तृज्वद्भावस्यावकाशः । क्रोष्टा । क्रोष्टारौ । क्रोष्ट्रा । क्रोष्टुना । नुमः स एव । इहोभयं प्राप्नोति । प्रियक्रोष्टूनि कुलानि । प्रियक्रोष्टुने कुलाय । गुणस्यावकाशः । अग्नये । नुमः स एव । इहोभयं प्राप्नोति त्रपुणे । नुम् भवति विप्रतिषेधेन ॥

## स्त्रियां च । ७ । १ । ९६ ॥

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ऋदन्तेभ्यो ङीप् । क्रोष्ट्री । क्रोष्ट्र्यौ । क्रोष्ट्र्यः । क्रोष्ट्रीः । क्रोष्ट्र्या । क्रोष्ट्रीभ्याम् ॥

## विभाषा तृतीयादिष्वचि । ७ । १ । ९७ ॥

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्स्यात् ॥ क्रोष्ट्रा । क्रोष्ट्रे । क्रोष्टुः । आमि परत्वात्तृज्वद्भावे प्राप्ते ॥ नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन ॥ * ॥ नुमोऽवकाशः । त्रपूणि । नुटः अग्नीनाम् ।

इहोभयं प्राप्नोति । वारीणाम् । त्रपूणाम् । नामीति दीर्घत्वम् । अचिरादेशस्यावकाशः । तिस्रः । चतस्रः । नुटः स एव । इहोभयं प्राप्नोति । तिसृणाम् । चतसृणाम् । तृज्वद्भावस्यावकाशः क्रोष्टा । क्रोष्टुना । नुटः स एव । इहोभयं प्राप्नोति क्रोष्टूनाम् । नुट् भवति विप्रतिषेधेन । क्रोष्टरि । क्रोष्टोः । पक्षे हलादौ च शंभुवत् । क्रुश आह्वाने । अस्मात् सितनीति तुन् प्रत्यये क्रोष्टुशब्दः । तृचि तु क्रोष्टृशब्दः । द्वावपि शृगालवचनौ । तत्राविशेषेण द्वयोः प्रयोगे प्राप्ते सर्वनामस्थाने स्त्रियां च तृजन्त एव तृतीयादावच्युभयम् । अन्यत्र तुन्नन्त एवेति नियमार्थं त्रिसूची आरभ्यते इत्यवधेयम् ।

## चतुरनडुहोरामुदात्तः । ७ । १ । ९८ ॥

अनयोराम् स्यात्सर्वनामस्थाने स चोदात्तः । चत्वारः । हे चत्वारः । चत्वारि । अनड्वान् । अनड्वाहौ । अनड्वाहः । अनड्वाहम् । अनड्वाहौ । तदन्ते प्रियचत्वाः । प्रियचत्वारौ । प्रियचत्वारः । प्रियानड्वान् ॥ अनडुहः स्त्रियां वेति वक्तव्यम् ॥ * ॥ अनड्वाही । अनडुही । गौरादित्वान्ङीष् ॥

## अम्संबुद्धौ । ७ । १ । ९९ ॥

चतुरनडुहोरम् स्यात्संबुद्धौ । आमोऽपवादः ॥ हे प्रियचत्वः । हे अनड्वन् । हे प्रियानड्वन् ॥

## ऋत इद्धातोः । ७ । १ । १०० ॥

ऋदन्तस्य धातोरङ्गस्येत्स्यात् । किरति । गिरति । आस्तीर्णम् । विशीर्णम् । चिकीर्षति । आस्तरणम् । आस्तारकः । अत्र परत्वाद् गुणवृद्धी । धातोः किम् । पितृणाम् ॥

उपधायाश्च । ७ । १ । १०१ ॥

धातोरुपधाभूतस्य ऋत इत्स्यात् ॥ रपरत्वम् । उपधायां चेति दीर्घः । कीर्तयति ॥

उदोष्ठ्यपूर्वस्य । ७ । १ । १०२ ॥

अङ्गावयवौष्ठ्यपूर्वो य ऋत् तदन्तस्याङ्गस्य उत्स्यात् ॥ पूर्ताः पितरः । हलि चेति दीर्घः । पिपूर्तः । पिपुरति । मुमूर्षति । सुस्मूर्षति । बुभूर्षति । संपूर्वाद्वृगताविलयस्मात् क्तप्रत्यये समीर्णमित्येव । ओष्ठ्यस्याङ्गावयवत्वाभावात् । गुणवृद्धी परत्वादिमं बाधेते । पिपर्ति । निपरणम् । निपारकः ।

बहुलं छन्दसि । ७ । १ । १०३ ॥

मित्रावरुणौ । ततुरिः ।

इति श्रीव्याकरणदीपिकायां पाणिनिसूत्रवृत्तौ सप्तमाध्यायस्य प्रथमः पादः ॥



# सप्तमाऽध्यायस्य द्वितीयः पादः ।



## सिचि वृद्धिः परस्मैपदेषु । ७ । २ । १ ॥

इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदे परे सिचि ॥ अचैषीत् । अलावीत् । अपावीत् । अकार्षीत् । अतारीत् । अकारीत् । न सिच्यन्तरङ्गमस्तीति गुणेऽप्रवृत्ते इगन्तमङ्गमेव भवति । अन्यथान्तर्भूतसिज्भावापेक्षत्वेनान्तरङ्गत्वाद् गुणप्रवृत्तौ अनिगन्ताङ्गत्वेन वृद्ध्यनुपपत्तौ सूत्रवैयर्थ्यापत्तेः । परस्मैपदेषु किम् । अच्योष्ट । अच्योषाताम् ।

## अतो ल्रान्तस्य । ७ । २ । २ ॥

ल्रेति लुप्तषष्ठीकं पदम् ॥ अतः समीपौ यौ ल्रौ तदन्ताङ्गस्यातो वृद्धिः स्यात् परस्मैपदे परे सिचि । नेटीति निषेधस्यातो हलादेर्लघोरिति विकल्पस्य चापवादः । मा भवानालीत् । अफालीत् । अक्षालीत् । अत्सारीत् । अक्षारीत् । अचारीत् । अतः किम् । न्यखोरीत् । न्यमीलीत् । ल्रान्तस्य किम् । मा भवानशीत् । मा भवानटीत् । माभवानभीत् । अश्वल्लीत् इत्यादावङ्गान्त्यरेफलकारयोरतः समीपत्वाभावान्न वृद्धिः । एतदर्थमेवान्तग्रहणम् ॥

## वदव्रजहलन्तस्याचः । ७ । २ । ३ ॥

वदेर्व्रजेर्हलन्तस्य चाङ्गस्य स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु ॥ अवादीत् । अव्राजीत् । अतो हलादेर्लघोरिति विकल्पबाधना-

र्थमनयोर्ग्रहणम् । अपाक्षीत् । असैत्सीत् । अभैत्सीत् । अरौत्सीत् । अक्षौत्सीत् । अक्षाक्षीत् । हल्ग्रहणं जातिपरम् । अराङ्क्षीत् । अभाङ्क्षीत् । अस्कान्त्सीत् । तदन्तविधिनैव सिद्धेऽन्तग्रहणं स्पष्टार्थम् । उदवोढामित्यादौ उदवह् स् तामित्यवस्थायां सिज्लोपादेरसिद्धत्वात् पूर्वं वृद्धौ तत ओत्वे लक्ष्ये लक्षणं सकृदेव प्रवर्तते इति न्यायेन न पुनर्वृद्धिः ॥ विकारकृतभेदेन च लक्ष्यभेदो भाष्यप्रमाणयादिति बोध्यम् ॥

## नेटि । ७ । २ । ४ ॥

इडादौ सिचि प्रागुक्तं न स्यात् ॥ मा भवानतीत् । मा भवानटीत् । मा भवानवीत् । अदेवीत् । अकोषीत् । अमोषीत् । अकर्तीत् । अनर्तीत् ॥

## ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् । ७ । २ । ५ ॥

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यात् इडादौ सिचि परे ॥ अग्रहीत् । अस्यमीत् । अजङ्गमीत् । अह्ययीत् । अक्षणीत् । अश्वसीत् । अजागरीत् । जागृ इस् इत्यत्र यण् प्राप्तः । तं सर्वधातुकगुणो बाधते । तं सिचि वृद्धिः । तां जागर्ति गुणः । तस्मिन् कृते हलन्तलक्षणा प्राप्ता नेटीति निषिद्धा । ततोऽतोहलादेरिति बाधित्वाऽतोलान्तस्येति प्राप्ता । ह्म्यन्तेति निषिध्यते । तदाहुः ।

गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् ।
पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नवेति ॥

औनयीत् । अध्यनयीत् । नोनयतीति ञ्लेश्चङ् न अश्वयीत् । अकटीत् । इडादौ किम् । अधाक्षीत् ।

## ऊर्णोतेर्विभाषा । ७ । २ । ६ ॥

इडादौ परस्मैपदे परे सिचि वृद्धिर्वा स्यात् ॥ और्णावीत् पक्षे गुणः । और्णवीत् । विभाषोर्णोरिति ङित्वपक्षे उवङ् । और्णुवीत् ॥

## अतो हलादेर्लघोः । ७ । २ । ७ ॥

हलादेर्लघोरकारस्य इडादौ परस्मैपदे परे सिचि वृद्धिर्वा स्यात् ॥ अवादीत् । अवदात् । अमावीत् । अमवीत् । अशावीत् । अशवीत् । येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् अचकासीदित्यत्रानेक व्यवधाने न ॥ अत: किम् । अदेवीत् । हलादेः किम् । मा भवानटीत् । लघोः किम् । अरक्षीत् । स्पष्टार्थमेतत् । इडादौ किम् । अपाक्षीत् । परस्मैपदे किम् । मच मुचि कल्कने । अमचिष्ट ॥

## नेड्वशि कृति । ७ । २ । ८ ॥

वशादेः कृत इण्न स्यात् ॥ शॄ सुशर्मा । अन्येभ्योऽपि दृश्यन्ते इति मनिन् । ईश्वरः । दीप्रः कृति किम् । रुरुदिव । रुरुदिम ॥

## तितुत्रतथसिसुसरकसेषु च । २ । ९ ॥

एषां दशानां कृत्प्रत्ययानामिण्न स्यात् ॥ ति इति क्तिन्क्तिचोर्ग्रहणम् । दीप्तिः । स्त्रियां क्तिन् । तनु विस्तारे । तन्तिः । क्तिच्क्तौ च संज्ञायामिति क्तिच् । तन्तुः । गन्तुः । सक्तुः । सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् । शस्त्रम् । पत्त्रम् । दाम्नीशसेति ष्ट्रन् । हस्तः । लोतः । पोतः । हसिमृग्रिण्वामिदमिलूपूधु-

र्विभ्यस्तन् । औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते । न पुनः क्तस्य । हसितमित्येव भवतीति वृत्तिः । कुष्ठम् । काष्ठम् । निकुषिनीरमिकशिभ्यः क्थन् । कुक्षिः । प्लुषिकुषिशुषिभ्यः क्सिः । इक्षुः । इषेः क्सुः । अक्षरम् । अशेः सरः । शल्कम् । इणभीकापाशल्यतिमर्चिभ्यः कन् । वत्सः । वृतॄवदिहनिकमिकषिभ्यः सः ॥ तितुत्रेष्वग्रहादीनामिति वक्तव्यम् ॥ * ॥ ग्रहादयो ग्रहप्रकाराः येषामिट् क्तिनि दृश्यते । निगृहीतिः । उपस्निहितिः । निकुचितिः । निपठितिः । कृत्प्रत्ययानां किम् । रोदिति । स्वपिति ॥

## एकाच उपदेशेऽनुदात्तात् । ७ । २ १० ॥

उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्धधातुकस्येरान स्यात् ॥ के पुनरुपदेशेऽनुदात्ताः । ये तथा पठ्यन्ते त एव विस्पष्टार्थमनिट्कारिकासु प्रविभक्ताः प्रदर्श्यन्ते ॥

ऊदृदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।
वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥
शक्लृपच्मुच्रिच्वच्विच्सिच्प्रच्छित्यज्निजिर्भजः ।
भञ्ज्भुज्भ्रस्ज्मस्जियज्युज्रुज्रञ्ज्विजिर्स्वञ्जिसञ्जिसृजः ॥
अद्क्षुद्खिद्च्छिदतुदिनुदः पद्यभिद्विद्यतिर्विनद् ।
शद्सदी स्विद्यतिः स्कन्दिहदी क्रुध् क्षुधिबुध्यती ॥
बन्धिर्युधिरुधी राधिव्यध्शुधः साधिसिध्यती ।
मन्यहन्नाप्क्षिपक्षुपितप्तिपस्तृप्यतिदृप्यति ॥
लिप्लुप्वप्शप्स्वप्सृपियभ्रभ्लभ्नम्गम्यमो रमिः ॥
क्रुशि दंशिदिशी दृश्मृश्रिश्रुश्लिश्विश्स्पृशः कृषिः ॥

त्विष्तुष्द्विष्दुष्पुष्यविष्शिष्शुष्श्लिष्यतयो घसिः ।
वसतिर्दहदिहदुहो नह्मिह्रुह्लिहवहिस्तथा ॥
कचच्छजा दधनपा भमशाः षसहाः क्रमात् ।
कचक्रा णपटाः खणडो गघङाष्टखजाः स्मृताः ॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ॥ इति संग्रहः ।
तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥
तृप्दृपी तौ वारयितुं श्यना निर्देश आदृतः ।
रधादित्वादिमौ वेड्भावमर्थमनुदात्तता ॥
क्लिशूं स्विद्यपद्यौ सिध्यबुध्यौ मन्यपुष्यश्लिषः श्यना ।
वसिः शपा लुका यौति निर्दिष्टोऽन्यनिवृत्तये ॥
निजिर्विजिर्शक्लृ इति सानुबन्धा अमी तथा ।
विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येपि दृश्यते ॥
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ।
रञ्जिमस्जी अदिपदी तुद् क्षुध् शुषिपुषी शिषिः ॥
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसंमतेः ।

चेता । स्तोता । कर्ता । शक्ता । पक्ता इत्यादि । उपदेश इत्युभयान्वयि । तत्रोत्तरान्वयफलम् । कर्तुं गन्तुमित्यादाविविनषेधः । नित्स्वरेण संप्रत्युदात्तत्वात् । पूर्वान्वयफलं तु विभित्सति पिपक्षतीत्यादौ निषेधः । द्वित्वे कृतेऽनेकाच्त्वात् । एकाचः किम् । यङ्लुग्व्यावृत्तिर्यथा स्यात् । स्मरन्ति हि ।

श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकीति ॥

श्तिपा यथा स्यन्ति । हन्ति याति । वाति । द्राति । प्सातीत्यादि । यपा । सनीवन्तेति सूत्रे भरेति । अनुबन्धनिर्देशो द्विधा । स्वरूपेण इत्संज्ञकत्वेन च । आद्यो यथा शीङः सार्वधातुके गुणः । दीङो युडिति । द्वितीयस्तु अनुदात्तङित इत्यादि । गणेन यथा बेभिदीति । चेच्छिदीति । रुधादिभ्यः श्नम् । एकाज्ग्रहणं प्रकृतसूत्रे । तेन बेभेदिता । चेच्छेदिता । गङ्गमिता । अत्रेरिण्निषेधो न । एतच्चेहैवैकाज्ग्रहणेन ज्ञाप्यते । अच इत्येवैकत्वविवक्षया तद्वतो ग्रहणेन च सिद्धे एकग्रहणसामर्थ्यादनेकाच्कोपदेशो व्यावर्त्यते तेन बधेर्हन्त्युपदेशे एकाचोऽपि न निषेधः । आदेशोपदेशेऽनेकाच्त्वात् ॥

## श्र्युकः किति । ७ । २ । ११ ॥

श्रिञ एकाच उगन्ताच्च परयोर्गित्कितोरिण् न स्यात् ॥ श्रितः । श्रितवान् । भूष्णुः । भूतः । द्युतः । नुतः । वृतः । ऊर्णोतेर्नुवद्भावेनैकाच्त्वान्नेट् । ऊर्णुतः । सस्वरिथ सुषुविथ दुधुविवेत्यादौ परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । स्वृत्वा । सूत्वा । धूत्वा । अत्र तु निषेध एव । एकाचः किम् । जागरितवान् । उपदेशे इति ह्यनुवर्तते । इहापि यथा स्यात् । स्तीर्णम् । वृतो वेत्यतो वृत इत्यनुवर्तमाने इट् सनिर्वेति वेट्कत्वेन यस्य विभाषेति तु न सिध्यति । इत्वे कृते ऋकारान्तत्वाभावादिति वृत्तिः ॥

## सनिग्रहगुहोश्च । ७ । २ । १२ ॥

ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात् ॥ ग्रहिज्योरिति सम्प्रसार-

णम् । सनः षत्वस्यासिद्धत्वाद्‌ढषभावः । जिघृक्षति । जुघुक्षति । बुभूर्षति । एकाच इत्येव जिजागरिषतीति कश्चित् ।

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि । ७ । २ । १३ ॥

एभ्यो लिट इरान स्यात् ॥ चकृव । सस्रृव । बभृव । ववृव । तुष्टुव । दुद्रुव । सुस्रुव । शुश्रुव । क्रादीनां चतुर्णां ग्रहणं नियमार्थम् । प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिणिन्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्य इति ॥ बिभिदिव । चिच्छिदिव । बभूविव । लुलुविव । बभूथाततन्थेति सूत्रे छन्दसि ववर्थेति निपातनाद्भाषायां वृजस्थल इट्स्वीकारेण तत्राप्राप्तनिषेधार्थं वृग्रहणमिति नाशङ्कनीयम् । ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम् । तुष्टोथ । दुद्रोथ । सुस्रोथ । शुश्रोथ ॥ कृञोऽसुट इति वक्तव्यम् ॥ * ॥ तेन ससुट्कात्परस्य इट् । सञ्चस्करिम । ऋतो भारद्वाजस्येत्येतदप्यसुट एवेष्यते । सञ्चस्करिथ ॥

## श्वीदितो निष्ठायाम् । ७ । २ । १४ ॥

श्वयतेरीदितश्च निष्ठाया इरान स्यात् । शूनः । शूनवान् । दीप्तः । ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेट् स ह्योदित्त्वश्चेत्योदितोऽनन्तरस्य नत्वार्थः । उड्डीनः ॥

## यस्य विभाषा । ७ । २ । १५ ॥

यस्य क्वचिद्विभाषया इड्विहितस्ततो निष्ठाया इरान स्यात् । विधूतः । गुहू गूढः । स्वरतीति वेट्कत्वान्नेट् । वृधु । वृद्धः । वनु वतः । तनु ततः । अञ्जू समक्तः । उदितो वेति त्कायां वेट्क-

त्वादिह नेट् । अञ्चोऽनपादाने इति नत्वम् । तनिपतिदरिद्रातिभ्यः सन इड् वा वाच्य इति पतेः सनि वेट्कत्वादिडभावे प्राप्ते द्वितीया श्रितेति सूत्रे निपातनादिट् । पतितः । सेधतीति वेट्कत्वात्सिद्धे कृन्तत्यादीनामोदित्त्वेनानित्यत्वज्ञापनाद्वा । तेन धावितमिभराजधियेत्यादि । दरिद्रातेस्त्वेकाच इत्यनुवृत्तेः दरिद्रितः । यदुपधेर्विभाषा तदुपधेः प्रतिषेध इति विभाषा गमहनेत्यत्र विशिना परेण साहचर्याच्छविकरणस्यैव विदेर्ग्रहणमिति वेत्तेर्विदित इत्येव ॥

## आदितश्च । ७ । २ । १६ ॥

आकारेतो निष्ठाया इरान स्यात् । ञिमिदा । मिन्नः । ञिक्ष्विदा । क्ष्विण्णः । ञिष्विदा । स्विन्नः । चकारोऽनुक्तसमुच्चयार्थः । आश्वस्तो वान्त इति वृत्तिः ॥

## विभाषा भावादिकर्मणोः । ७ । २ । १७ ॥

भावे आदिकर्मणि च आदितो निष्ठाया इड् वा न स्यात् । स्विन्नम् तेन । स्वेदितं तेन । प्रस्विन्नश्चैत्रः । प्रस्वेदितश्चैत्रः ॥ इट्पक्षे निष्ठा शीङित्यकित्वाद् गुणः ।

## क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु । ७ । २ । १८ ॥

क्षुब्धादीन्यष्टौ अनिट्कानि निपात्यन्ते समुदायेन मन्थादिषु वाच्येषु । द्रवद्रव्यसंपृक्ताः सक्तवो मन्थः मन्थनदण्डश्च ।

क्षुब्धः मन्थश्चेत् । स्वान्तं मनः । ध्वान्तं तमः । लग्नं सक्तम् । निष्ठानत्वमपि निपातनात् । म्लिष्टमविस्पष्टम् । विरिब्धः स्वरः । म्लेच्छ रेभृ अनयोरुपधाया इत्वमपि निपात्यते । फाण्टमनायाससाध्यः कषायविशेषः । माधवस्तु नवनीतभावात्प्रागवस्थापन्नं द्रव्यं फाण्टमिति शतपथश्रुते भाष्ये आह । बाढं भृशम् । अन्यत्र क्षुभितम् । क्षुब्धो राजेति तु आगमशास्त्रस्यानित्यत्वात् । स्वनितम् । ध्वनितम् । लगितम् । म्लेच्छितम् । विरेभितम् । फणितम् । बाहितम् ॥

## धृषिशसी वैयात्ये । ७ । २ । १९ ॥

एतौ निष्ठायामविनये एवानिट्कौ स्तः । धृष्टः । विशस्तः । अन्यत्र धर्षितः । विशसितः । भावादिकर्मणोस्तु वैयात्ये धर्षितोऽस्ति । अतएव नियमार्थमिदं सूत्रमिति वृत्तिः । धृषेरादित्वे फलं चिन्त्यमिति हरदत्तः । । माधवस्तु भावादिकर्मणोरवैयात्ये विकल्पमाह । धृष्टम् । धर्षितम् । प्रधृष्टः । प्रधर्षितः ॥

## दृढः स्थूलबलयोः । ७ । २ । २० ॥

स्थूले बलवति च निपात्यते दृह दृहि वृद्धौ क्तस्येडभावः । तस्य ढत्वं हस्य लोपः इदितो नलोपश्च । दृढितो दृंहितोऽन्यः ॥

## प्रभौ परिवृढः । ७ । २ । २१ ॥

वृह वृहि वृद्धौ । निपातनं प्राग्वत् । परिवृहितः । परिवृंहितोऽन्यः ।

## कृच्छ्रगहनयोः कषः । ७ । २ । २२ ॥

कषो निष्ठायां इराम स्यात् एतयोरर्थयोः । कष्टं दुःखं तत्कारणं च । स्यात् कष्टं कृच्छ्रमाभीलम् । कष्टो मोहः । कष्टं शास्त्रम् । दुरवगाहमित्यर्थः । कषितमन्यत् ॥

**घुषिरविशब्दने । ७ । २ । २३ ॥**

घुषेर्निष्ठायामनिट् स्यात् । घुष्टा रज्जुः । अविशब्दनेऽपि घुषितं वाक्यम् । शब्देन प्रकटीकृताभिप्रायमित्यर्थः । अविशब्दने इति लिङ्गादनित्यो ह्यस्य णिच् । अत एव महीपालवचः श्रुत्वा जुघुषुः पुष्पमाणवा इत्यप्युपपद्यते । अन्ये त्वनित्यण्यन्ताश्चुरादय इति सामान्येन ज्ञाप्यते इत्याहुः । केचिच्चिति स्मृत्यामितीदित्वं चुरादिणिचोऽनित्यत्वस्य ज्ञापकमाहुः । इदित्वेन नुम्विधाने प्रयोजनं चिन्तित इति नलोपाभावः । यदि च चुरादिणिच् नित्यः स्यात् । तदा चिन्त स्मृत्यामित्येव पठेत । णिचि सति नलोपाप्रसङ्गात् । एतच्च ज्ञापकं सामान्यापेक्षमित्येके । अत एकहल्मध्ये इत्यत्र वृत्तिकृता जगाण जगणतुः जगणुरित्याद्युदाहृतत्वात् । विशेषापेक्षमित्यपरे । अत एव आ धृषाद्वेत्यस्य न वैयर्थ्यम् । यचि सङ्कोच इतीदित्करणाद्यन्त्रतीति माधवोक्तं तु चिन्त्यमेव ॥

**अर्देः सन्निविभ्यः । ७ । २ २४ ॥**

एतत्पूर्वादर्देर्निष्ठाया इराम स्यात् ॥ समर्णः । न्यर्णः । व्यर्णः । अर्दितोऽन्यः ॥

**अभेश्चाविदूर्ये । ७ । २ । २५ ॥**

अभ्यर्णम् ॥ नातिदूरं आसन्नं वा । अभ्यर्दितमन्यत् ॥

**णेरध्ययने वृत्तम् । ७ । २ । २६ ॥**

ण्यन्ताद्वृतेः क्तस्येडभावो णिलुक् च अधीयमानेर्थे । वृत्तं छन्दश्छात्रेण । सम्पादितमधीतमिति यावत् । अन्यत्र तु वर्तिता रज्जुः ॥

**वा दान्तशान्तपूर्णदस्तस्पष्टछन्नज्ञप्ताः ।७।२।२७॥ ।**

एते णिचि निष्ठान्ता वा निपात्यन्ते । पक्षे दमितः । शमितः । पूरितः । दासितः । स्पाशितः । छादितः । ज्ञापितः ॥

**रुष्यमत्वरसंघुषास्वनाम् । ७ । २ । २८ ॥**

एभ्यो निष्ठाया इड् वा । रुष्टः । रुषितः । आन्तः । अमितः । तूर्णः । त्वरितः । अस्यादित्वे फलं मन्दम् । संघुष्टः । संघुषितः । आस्वान्तः । आस्वनितः ॥

**हृषेर्लोमसु । ७ । २ । २९ ॥**

हृषेर्निष्ठाया इड् वा स्यात् लोमसु विषये । हृष्टं हृषितं लोम । विस्मितप्रतिघातयोश्चेति वक्तव्यम् ॥ * ॥ हृष्टो हृषितो मैत्रः । विस्मितः प्रतिहतो वेत्यर्थः । अन्यत्र तु हृषु अलीके उदित्वान्निष्ठायां नेट् । हृष तुष्टौ इट् ।

**अपचितश्च । ७ । २ । ३० ॥**

चायते निपातोऽयं वा । अपचितः । अपचायितः ॥ क्तिनि नित्यमिति वक्तव्यम् ॥ * ॥ अपचितिः ॥

**ह्रु ह्वरेश्छन्दसि । ७ । २ । ३१ ॥**

ह्वरतेश्छन्दसि ह्रु इत्ययमादेशः स्यात् । अह्रुतमसि हविर्धानम् । छन्दसि किम् । ह्वृतम् ॥

**अपरिह्वृताश्च । ७ । २ । ३२ ॥**

पूर्वेण प्राप्तस्यादेशस्याभावो निपात्यते । अपरिह्वृताः सनुयाम वाजम् ॥

**सोमे ह्वरितः । ७ । २ । ३३ ॥**

इड्गुणौ निपात्येते । सोमो ह्वरितः ॥

**ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरुत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च । ७ । २ । ३४ ॥**

अष्टादश निपात्यन्ते । तत्र ग्रसु स्कंभु स्तभु एषामुदित्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इडिनपात्यते । युवं शचीभिर्ग्रसितामगुञ्चतम् । विष्कभिते अजरे । येन स्वः स्तभितम् । सत्येनोत्तभिता भूमिः । स्तभितेत्येव सिद्धे उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य मा भूदिति । चते याचने । कस गतौ आभ्यां क्तस्येडभावः । चत्ता इतश्चतामुतः । त्रिधा ह श्यावमश्विना विकस्तम् । निपातनबहुत्वापेक्ष सूत्रे बहुवचनं विकस्ता इति । तेनैकवचनान्तोऽपि प्रयोगः साधुरेव । शसु शंसु शासु एभ्यस्तृच इडभावः । एकस्त्वष्टुरश्वस्याविशस्ता । ग्रावग्राभ उत शंस्ता । प्रशास्ता पोता । तरतेर्वृङ्वृञोश्च तृच ऊट् उट् एतावागमौ निपात्येते । तरूतारं रथानाम् । तरुतारम् । वरूतारम् । वरुतारम् । वरुत्रीभिः सुशरणो नो अस्तु । अत्र ङीबन्तनिपातनं प्रपञ्चार्थम् । वरुतृशब्दो हि निपातितः । ततो ङीपा गतार्थत्वात् । उज्ज्वलादिभ्यश्चतुर्भ्यः शप इकारादेशो निपात्यते । ज्वल दीप्तौ । क्षर सञ्चलने । टुवम्

उद्गिरणे । अम गत्यादिषु । इह चरतीत्यस्यानन्तरं चमितीत्यपि केचित्पठन्ति । तच्च चमूष् सहने इति धातुर्बोध्यः । भाषायां तु ग्रस्तस्कब्धस्तब्धोत्तब्धचतितविकसिताः । विशसिता । शंसिता । शासिता । तरिता । तरीता । वरीता । वरिता । उज्ज्वलति । क्षरति । पाठान्तरे चमति । वमति । अमति । इतिकरणः प्रदर्शनार्थः । तेन क्वचिदीकारोऽपि भवति रविमभ्यमीति वरुण इत्यपि वेदे दृश्यते इति वृत्तिः ॥

## आर्द्धधातुकस्येड्वलादेः । ७ । २ । ३५ ॥

छन्दसीति निवृत्तम् । निष्ठायामिति च नेति च । वलादेरार्धधातुकस्येडागमः स्यात् । लविता । लवितुम् । लवितव्यम् । पठिता । पठितुम् । पठितव्यम् । आर्धधातुकस्य किम् । आस्ते । शेते । वलादेः किम् । लव्यम् । लवनीयम् । इडिति वर्तमाने पुनरिड्ग्रहणं प्रतिषेधनिवृत्त्यर्थमिति वृत्तिः ॥

## स्नुक्रमोरनात्मनेपदनिमित्ते । ७ । २ । ३६ ॥

अयेवेट् । प्रस्नवितुम् । प्रस्नवितव्यम् । प्रक्रमिता । प्रक्रमितुम् । प्रक्रमितव्यम् । निमित्तत्वं चात्र फलोपहितम् । तेन कर्मकर्तृविषयेऽपि प्रस्नवितेत्यादाविड् भवत्येव । प्रक्रमितेत्यादौ प्रशब्द आदिकर्मणोऽन्यत्र विज्ञेयः । आदिकर्मणि तु क्रमेः कर्तर्यात्मनेपदविषयादिति प्रतिषेधेन भाव्यम् । अनात्मनेपदनिमित्ते किम् । प्रस्नोषीष्ट । प्रक्रंसीष्ट । प्रस्नोष्यते । प्रक्रंस्यते । प्रचिक्रंस्यते । प्रचिक्रंसिष्यते । चिक्रंसते । प्रचिक्रंसते । सन्नेवात्र स्नौतिः क्रमिश्चात्मनेपदस्य निमित्तम् । सन्नन्तादपि हि पूर्ववत्सन इत्यात्मनेपदं विधौ

यते। एतदर्थमेव च तत्र निमित्तातिदेशः। तथा चानुपसर्गः प्रपूर्वश्च क्रमिरेवेह सना व्यवहितोऽप्यात्मनेपदं प्रवर्तितवानित्येतन्नियमादिडभावः। कार्यातिदेशे तु अनात्मनेपदनिमित्तत्वादिट् स्यात्। निमित्तत्वञ्चात्र फलोपहितमेव गृह्यते इत्यनभिप्रेत्य प्रस्नवितेत्यादौ दोषमुद्भाव्य अविशेषेण स्नुक्रमोरिडागममुक्त्वा आत्मनेपदपरे नेति वक्ष्यामीत्युक्त्वा प्रचिक्रंसिष्यते प्रस्नोषीष्टेत्यादौ दोषवारणाय सिद्धं त्वात्मनेपदेन समानपदस्थस्येट्प्रतिषेधादिति वदतो वार्तिककारस्य तु मते कार्यातिदेशेऽपि न दोषः। न च प्रस्नविषीयते इत्यादौ वार्तिकमते दोषः। मम तु क्यङन्तस्यात्मनेपदनिमित्तत्वेऽपि स्नोरनात्मनेपदनिमित्ततास्त्येवेति वाच्यम्। बहिरङ्गलक्षणमनात्मनेपदमिति भाष्यकारेणैव समाधानादिति दिक्॥ किति सनि च प्रस्नुतः। प्रसुस्नूषति। प्रसुस्नूषिष्यते। क्रमेश्च निष्ठायां क्रान्त इति। श्र्युकः किति। सनि ग्रहगुहोश्च। यस्य विभाषेति प्रतिषेध एव भवति। पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात्॥ क्रमेः कर्तर्येवात्मनेपदविषयात् कृत इण्निषेधो वाच्यः॥ * ॥ प्रक्रन्ता। कर्तरि किम्। प्रक्रमितव्यम्। आत्मनेपदेति किम्। सङ्क्रमिता। अनन्यभावे विषयशब्दः। तेनानुपसर्गाद्वेति विकल्पार्हस्य न निषेधः। क्रमिता। तदर्हत्वमेव तद्विषयत्वम्। तेन क्रन्तेत्यपीति केचित्॥

## ग्रहोऽलिटि दीर्घः। ७। २। ३७॥

एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यान्न तु लिटि। ग्रहीता। ग्रहीतुम्। ग्रहीतव्यम्। लिटि तु जग्रहिथ। एकाचः किम्। यङ्लुकि मा भूत्। जाग्रहिता। माधवस्तु दीर्घमाह। तद्भाष्यादिवि-

सृढुम् । विहितस्येति किम् । ग्राहितम् । चिराबदिटो न दीर्घत्वम् । प्रकृतस्य वलादिलक्षणस्यैव तद्विधानात् । ग्राहिता । ग्राहिष्यते ॥

वॄतो वा । ७ । २ । ३८ ॥

वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि । वरिता । वरीता । तरिता । तरीता । तपरकरणं किम् । करिष्यति । अलिटीति । किम् । तेरिथ ॥

न लिङि । ७ । २ । ३९ ॥

वॄतो लिङ इटो दीर्घो न स्यात् । वरिषीष्ट । स्तरिषीष्ट ॥

सिचि च परस्मैपदेषु । ७ । २ । ४० ॥

अत्र वॄत इटो दीर्घो न । अवारिष्टाम् । अस्तारिष्टाम् । परस्मैपदेषु किम् । अवरीष्ट । अस्तरीष्ट ॥

इट् सनि वा । ७ । २ । ४१ ॥

वृङ्वृञ्भ्यामॄदन्ताच्च सन इड् वा स्यात् ॥ विवरिषते । विवरीषते । वुवूर्षते । तिस्तारिषति । तिस्तरीषति । तिस्तीर्षति । चिकीर्षति । जिहीर्षति । दुध्र्षतीत्यत्रोपदेशाधिकाराल्लाक्षणिकत्वाच्चेडागमो न भवति ॥

लिङ्सिचोरात्मनेपदेषु । ७ । २ । ४२ ॥

वृङ्वृञ्भ्यामॄदन्ताच्च परयोर्लिङ्सिचोरिड् वा स्यात् । वृषीष्ट । तङि । वरिषीष्ट । अवरिष्ट । अवरीष्ट । अवृत । स्तरिषीष्ट । स्तीर्षीष्ट । अस्तरिष्ट । अस्तरीष्ट । अस्तीर्ष्ट । लङि किम् । अवारीत् । अस्तारीत् ॥

**ऋतश्च संयोगादेः । ७ । २ । ४३ ॥**

ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड् वा स्यात्तङि ॥ स्तृञ् आच्छादने इति ह्रस्वान्तः स्वादौ । स्तरिषीष्ट । स्तृषीष्ट । अस्तरिष्ट । अस्तृत । ऋतः किम् । च्योषीष्ट । अच्योष्ट । संयोगादेः किम् । कृषीष्ट । अकृत । तङि किम् । अस्तार्षीत् । उपदेशाधिकारेणोपदेशे यः संयोगादिरिति व्याख्यानादिह नेट् । संस्कृषीष्ट । समस्कृत । समस्कृषाताम् ॥

**स्वरतिसूतिसूयतिधूञूदितो वा । ७ । २ । ४४ ॥**

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड् वा स्यात् ॥ स्वर्ता । स्वरिता । सस्वरिथ । सस्वर्थ । सोता । सविता । सूयतेरप्येवम् । धोता । धविता । दुधविथ । दुधोथ । सेद्धा । सेधिता । सिषेधिथ । सिषेद्ध । सिषिधिव । सिषिध्व । नेड्वशीति प्रक्रमान्नञा प्रापितस्यैव क्रादिनियमो निवर्तको न तु विभाषाबललभ्यस्यापि । तेन लिट्यपि वेट् । क्रिति लिटि क्ङिति च स्वरतिसूतिसूयतिधूञां यथा नित्यमिडनिषेधो तथा प्रयुक्त इत्यत्रोक्तम् । स्वरिष्यतीत्यत्र तु परत्वादृद्धनोरिति नित्यमिट् । सूतिसूयत्योर्विकरणनिर्देशो धूञः सानुबन्धनिर्देशश्च सुवतिधुवत्योः सविता धुवितेत्येव यथा स्यादित्यर्थः । सुतिसूयतिधूञां चोभयं यथा स्यादित्यर्थश्च । सूङित्येव सुवतेर्व्यावृत्तिसिद्धौ पृथङ्निर्देशो लुग्विकरणालुग्विकरणयोरलुग्विकरणस्येति परिभाषाज्ञापनार्थः । तेन गातिस्थेति सिचो लुगपासीदित्यादौ पातेर्न । वेति वर्तमाने पुनर्वेति लिङ्सिचोर्निवृत्त्यर्थमिति दिक् ॥

**रधादिभ्यश्च । ७ । २ । ४५ ॥**

बलादार्द्धधातुकस्य वेट् स्यात् । रधिता । रद्धा । नशिता । नंष्टा । तर्पिता । तर्प्ता । त्रप्ता । दर्पिता । दर्प्ता । द्रप्ता । द्रोहिता । द्रोग्धा । द्रोढा । मोहिता । मोग्धा । मोढा । स्नोहिता । स्नोग्धा । स्नोढा । स्नेहिता । स्नेग्धा । स्नेढा । लिट्यपि वेट् । ररन्धिव । रेध्वेत्यादि ॥

**निरः कुषः । ७ । २ । ४६ ॥**

निरः परात्कुषो बलादेरार्धधातुकस्येट् वा स्यात् । निष्कोषिता । निष्कोष्टा । निरः किम् । कोषिता ॥

**इड् निष्ठायाम् । ७ । २ । ४७ ॥**

निरः कुषो निष्ठाया इट् स्यात् । यस्य विभाषेति प्राप्ते पुनर्विधिः निष्कुषितः । इड्ग्रहणं नित्यार्थम् ॥

**तीषसहलुभरुषरिषः । ७ । २ । ४८ ॥**

इष्यादेः परस्य तादेरार्द्धधातुकस्येड् वा स्यात् । सूत्रत्वाद्वलादेरित्यनुदात्तविशेषणीभूतवल्पदार्थस्य तकारेण विशेषणात्तकाररूपवलादेरिति तु वाच्योऽर्थः ॥ एवं सेऽसिचीत्यादावपि बोध्यम् । सप्तमी प्रथमार्थे एव । एषिता । एष्टा । सहिता । सोढा । लोभिता । लोब्धा । रोषिता । रोष्टा । रेषिता । रेष्टा । तीति किम् । एषिष्यति । इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधो वक्तव्यः ॥ * ॥ एषिता । यत्तु सूत्रे सहिना साहचर्यादकारविकरणस्य तौदादिकस्यैव इषेर्ग्रहणम् । न तु इष्यतीष्णात्योरित्याहुस्तदेतद्वार्तिकविरुद्धम् ॥

**सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपि सनाम् । ७ । २ । ४९ ॥**

इवन्तेभ्य ऋधादिभ्यश्च सन इड् वा स्यात् ॥ दिदेविषति । दुद्यूषति । सिसेविषति । सुस्यूषति । ईर्त्सति । अर्दिधिषति । बिभ्रज्ज्ञिषति । बिभर्जिषति । बिभ्रक्षति । बिभर्क्षति । दिदम्भिषति । धिप्सति । धीप्सति । शिश्रीषति । शिश्रयिषति । सुस्वूर्षति । सिस्वरिषति । युयूर्षति । यियविषति । ऊर्णुनूषति । ऊर्णुनुविषति । ऊर्णुनविषति । बुभूर्षति । बिभरिषति । ज्ञपिः पुगन्तो मित्सञ्ज्ञः पकारान्तश्चौरादिकश्च । इडभावे इको झलिति कित्वान्न गुणः । अज्झनेति दीर्घः परत्वाण्णिलोपेन बाध्यते । आप्ज्ञप्यृधामीत् । ज्ञीप्सति । जिज्ञपयिषति । अमितस्तु । जिज्ञापयिषति । सिषासति । सिसनिषति । तनिपतिदरिद्रातिभ्यः सन इड् वा वाच्यः ॥ तितांसति । तितंसति । तितनिषति । पिपतिषति । पित्सति । दिदरिद्रिषति । दिदरिद्रासति ॥

## क्लिशः क्त्वानिष्ठयोः । ७ । २ । ५० ॥

इड् वा स्यात् । क्लिष्ट्वा । क्लिशित्वा । क्लिष्टः । क्लिष्टवान् । क्लिशितः । क्लिशितवान् । क्लिश उपतापे । अस्य नित्य प्राप्ते । क्लिशू विबाधने । अस्य क्त्वायां विकल्पे सिद्धेऽपि निष्ठायां निषेधे प्राप्ते विकल्पः ॥

## पूङश्च । ७ । २ । ५१ ॥

पूङः क्त्वानिष्ठयोरिड् वा स्यात् ॥ पूत्वा । पवित्वा । पूतः । पवितः । पूतवान् । पवितवान् । श्युकः कितीति प्राप्ते विकल्पः ॥

## वसतिक्षुधोरिट् । ७ । २ । ५२ ॥

आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात् । उषित्वा । उषितः । उषितवान् । क्षुधित्वा । क्षोधित्वा । क्षुधितः । क्षुधितवान् । इड्ग्रहणं नित्यार्थम् ॥

## अञ्चेः पूजायाम् । ७ । २ । ५३ ॥

पूजार्थादञ्चेः क्त्वानिष्ठयोरिट् स्यात् ॥ अञ्चित्वा । अञ्चितः । अञ्चितवान् । पूजायां किम् । अक्त्वा । अञ्चित्वा । अक्तः । अक्तवान् ॥

## लुभो विमोहने । ७ । २ । ५४ ॥

लुभः क्त्वानिष्ठयोरिट् स्याद्विमोहने ॥ लुभित्वा । लोभित्वा । लुभितः । लुभितवान् । विमोहने किम् । लुब्ध्वा । लुभित्वा । लोभित्वा । लुब्धः । लुब्धवान् ॥

## जॄव्रश्च्योः क्त्वि । ७ । २ । ५५ ॥

आभ्यां परस्य क्त्व इट् स्यात् ॥ जरीत्वा । जरित्वा । व्रश्चित्वा ॥

## उदितो वा । ७ । २ । ५६ ॥

उदितः परस्य क्त्व इड् वा स्यात् । शमित्वा । शान्त्वा ॥ दमित्वा । दान्त्वा । देवित्वा । द्यूत्वा ॥

## सेऽसिचि कृतचृतच्छृदतृदनृतः । ७ । २ । ५७ ॥

एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड् वा स्यात् ॥ कर्तिष्यति । कर्त्स्यति । चर्तिष्यति । चर्त्स्यति । छर्दिष्यति । छर्त्स्यति । तर्दिष्यति । तर्त्स्यति । नर्तिष्यति । नर्त्स्यति । सादेः किम् । नर्तिता । असिचि किम् । अनर्तीत् ॥

## गमेरिट् परस्मैपदेषु । ७ । २ । ५८ ॥

गमेः परस्य सकारादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु । गमिष्यति । जिगमिषति । परस्मैपदग्रहणं तङानयोरभावं लक्षयति । तेन कृति परस्मैपदेषु लुकि चेट् भवत्येव । जिगमिषितुम् । जिगमिषितव्यम् । जिगमिषु । इड्ग्रहणं नित्यार्थम् । परस्मैपदेषु किम् । सङ्गंस्यते ॥

## न वृद्भ्यश्चतुर्भ्यः । ७ । २ । ५९ ॥

वृतादिभ्यः सकारादेरार्धधातुकस्येण् न स्यात्तङानयोरभावे । वर्त्स्यति । विवृत्सति । विवृत्सिता । विवृत्सु । वृधेरप्येवम् । शर्त्स्यति । स्यंत्स्यति । अथ चतुर्भ्य इति व्यर्थमेव कृपेरनन्तरं द्युतादिपरिच्छेदार्थमावश्यकेन वृत्करणेन वृतादीनामपि परिच्छेदात् । कृपेश्च तासि च क्लृप इत्यनेन सकारादेरार्धधातुकस्येरानिषेधविधानेन ग्रहणे बाधकाभावाच्चेति ॥ स्यंत्स्यतीत्यत्रोदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्न वृद्भ्य इति निषेधः । तङानयोरभावे किम् । वर्तिष्यते । गणनिर्दिष्टत्वान्नेह । वर्वर्तिष्यति ॥

## तासि च क्लृपः । ७ । २ । ६० ॥

क्लृपेः परस्य तासेः सकारादेरार्धधातुकस्य चेरान स्यात्तङानयोरभावे ॥ कल्प्तासि । कल्प्स्यति । चिक्लृप्सिता । चिक्लृप्सु । तङानयोरभावे किम् । कल्पितासे । कल्प्तासे । कल्पिष्यते । कल्प्स्यते ॥

## अचस्तास्वत्थल्यनिटो नित्यम् । ७ । २ । ६१ ॥

उपदेशे इत्युत्तरसूत्रादपकृष्यते । उपदेशे अजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इरान स्यात् ॥ ययाथ । चिचेथ । उपदेशे किम् जहर्थ । परत्वान्नित्यत्वाच्च गुणेऽनजन्तत्वादचस्तास्वदित्यस्याप्रवृतौ ऋतोभारद्वाजस्येत्यस्य नियमत्वानुपपत्तेः । अचः किम् । बिभेदिथ । तास्वत्किम् । लुलविथ । लूत्वेति क्त्वायामनिट्त्वात् । वत्किम् । तासौ सत्तस्थलि प्रतिषेधो यथा स्यात् । यो हि तासावसन्नसत्वाच्च नित्यानिट् तस्य मा भूत् । जघसिथ । उवयिथ । अत्र चोत्तरसूत्रेण प्राप्तिसंभावनासत्वादुत्तरार्थमेतद्बोध्यम् । थलि किम् ययिव । अनिट्ग्रहणं नित्यमित्यनेन विशेषणार्थम् । नित्यं किम् । सस्वरिथ । सस्वर्थ ॥

## उपदेशेऽत्वतः । ७ । २ । ६२ ॥

उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इरान स्यात् ॥ पपक्थ । इयष्ठ । उपदेशे किम् । कर्ष्टा । चकर्षिथ । अत्वतः किम् । बिभेदिथ । तपरः किम् । रराधिथ । तासौ किम् । जिघृक्षति । जघसिथ । नित्यानिटः किम् । आनञ्जिथ ॥

## ऋतो भारद्वाजस्य । ७ । २ ६३ ॥

तासौ नित्यानिट् ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य स्यादेव । सस्वर्थ । दध्वर्थ । ययिथ । चिचयिथ । पेचिथ । इयजिथ । अयमत्र संग्रहः ॥

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेट् भवेत् ॥

न च स्तुद्रादीनामपि थलि विकल्पः शङ्क्यः । अचस्तास्व-दिति उपदेशेऽत्वत इति च योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भावद्वाजनियमो निवर्तकोऽनन्तरस्येति न्यायात् ॥

## बभूथाततन्थजगृम्भववर्थेति निगमे । ७ । २ । ६४ ॥

एषां वेदे इडभावो निपात्यते । विद्म । तमुत्संयत आबभूथ । येनान्तरिक्षमुर्वा ततन्थ । जगृम्भा ते दक्षिणमिन्द्रहस्तम् । यस्य-मदे अपगोत्रा ववर्थ । भाषायां तु बभूविथ । आतेनिथ । जगृहिम । ववरिथेति ॥

## भाषायां सृजिदृशोः । ७ । ३ । ६५ ॥

आभ्यां थल इड् वा स्यात् । ससर्जिथ । सस्रष्ठ । ददर्शिथ । दद्रष्ठ ॥

## इडत्यर्तिव्ययतीनाम् । ७ । २ । ६६ ॥

अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आदिथ । आरिथ । संविव्ययिथ । विकल्पविधाने हि सति अर्तिव्ययति ग्रहणमनर्थकम् । प्रतिषेधविधाने चार्तिग्रहणमिति नित्योऽयं विधि-रिड्ग्रहणमन्तरेणापि शक्यते विधातुम् ॥

## वस्वेकाजाद्धसाम् । ७ । २ । ६७ ३

एकाज्ग्रहणेन सामर्थ्याद्विर्वोत्तरमभ्यासादिकार्येषु कृते-ष्वेकाचां ग्रहणम् । तद्धि नानेकाज्व्यावृत्तये । तत्र भिद्याम: सत्वान्मन्ते तथा प्रयोगाभावाच्च । न चाम्भावे जागर्तिर्व्यावर्त्यः । न चैकमुदाहरणमिति न्यायात् । दरिद्रातिस्तु कृतद्वित्वानामित्य

थाभावे आद्ग्रहणस्य भूतपूर्वाकारान्तग्रहणेन दरिद्रात्यर्थतया न तद्भावत्यर्थत्वमित्येकाज्ग्रहणसामर्थ्येन दरिद्रातौ नेवेड् भवति । कृतद्वित्वानामेकाचामादन्तानां घसेश्च वसोरिट् नान्येषाम् । आरिवान् । आदिवान् । पेचिवान् । पपिवान् । ददिवान् । घसिग्रहणाभावे तु द्वित्वात्परत्वान्नित्यत्वाच्च घसिभसोरिति लोपे द्वित्वनिमित्ताज्निमित्तत्वाभावेन द्विर्वचनेचीत्यस्याप्राप्यानच्कत्वेन द्वित्वं न स्यान्न स्याच्चेडागमः । तत्सत्वे त्विट्लोपयोरपि नित्यत्वेन परत्वादिटि तत उपधालोपे द्विर्वचनेऽचीत्यस्य प्रवृत्त्या सिद्ध-मिष्टम् । एषां किम् । बिभिद्वान् । बभूवान् । शिश्रिवान् ॥

**विभाषा गमहनविदविशाम् । ७ । २ । ६८ ॥**

एभ्यो वसोरिड्वा । जग्मिवान् । जगन्वान् । जघ्निवान् । जघन्वान् । विविदिवान् । विविद्वान् । विविशिवान् । विविश्वान् । विशिना परेण साहचर्याल्लुग्विकरणपरिभाषासहकृताद्वा तस्माद्विन्दते र्ग्रहणम् । वेतेस्तु विविद्वान् ॥ दृशेश्चेति वक्तव्यम् ॥ * ॥ ददृशि-वान् । ददृश्वान् ॥

**सनिंससनिवांसम् । ६ । २ । ६९ ॥**

सनिमित्येतत्पूर्वात्सनतेः सनोतेर्वा क्वसोरिट् एत्वाभ्यासलो-पाभावश्च निपात्यते । सनिपूर्वादन्यत्र सेनिवांसमिति भवति ॥

**ऋद्धनोः स्ये । ७ । २ । ७० ॥**

ऋतो हन्तेश्च स्यस्य इट् स्यात् । करिष्यति । हनिष्यति ॥

**अञ्जेः सिचि । ७ । २ । ७१ ॥**

अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् । सिचि किम् । अञ्जिता । अङ्क्ता ॥

## स्तुसुधूञ्भ्यः परस्मैपदेषु । ७ । २ । ७२ ॥

अस्तावीत् । असावीत् । सुनोतेः सवतेश्च पूर्वोत्तराभ्यां किद्भ्यां साहचर्यात्सुनोतेरेव ग्रहणमिति पक्षे असौषीत् अधावीत् । परस्मैपदेषु किम् । अस्तोष्ट । असाविष्ट । अधोष्ट । अधविष्ट ॥

## यमरमनमातां सक् च । ७ । २ । ७३ ॥

एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु ॥ अयंसीत् । अयंसिष्टाम् । व्यरंसीत् । व्यरंसिष्टाम् । अनंसीत् । अनंसिष्टाम् । अयासीत् । अयासिष्टाम् । परस्मैपदेषु किम् । अरंस्त । अयंस्त । अनंस्त ।

## स्मिपूङ्रञ्ज्वशां सनि । ७ । २ : ७४ ॥

स्मि पूङ् ऋ अञ्ज अशू एभ्यः सन इट् स्यात् । सिस्मयिषते । पिपविषते । अरिरिषति अञ्जिजिषति । अशिशिषते ॥

## किरश्च पञ्चभ्यः । ७ । २ । ७५ ॥

कॄ गॄ दृङ् धृङ् प्रच्छ एभ्यः सन इट् स्यात् । चिकरिषति । जिगरिषति । जिगलिषति । अचेटो दीर्घो नेष्टः । दिदरिषते । दिधरिषते । कथमुद्दिधीर्षुरिति । भौवादिकयोर्धृङ्धृञोरिति गृहाण । पिपृच्छिषति ॥

## रुदादिभ्यः सार्वधातुके । ७ । २ । ७६ ॥

रुद् स्वप् श्वस् अन् जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् स्यात् । रोदिति । स्वपिति । श्वसिति । अनिति । जक्षिति ।

पञ्चभ्य इत्येव। जागर्ति। सार्वधातुके किम्। स्वप्ता। वलादेः किम्। रुदन्ति। गणनिर्दिष्टत्वान्नेह। सास्वपीति। सास्वप्ति। लुका लुप्ते प्रत्ययलक्षणाभावांत्स्वपिस्यमित्युत्वं न। आर्षिषि तु वचिस्वपीत्युत्वम्। सासुप्यात्॥

## ईशः से। ७। २। ७७॥

## इडजनोर्ध्वे च। ७। २। ७८॥

ईशीड्जनां सेध्वेशब्दयोः सार्वधातुकयोरिट् स्यात्। योगविभागो वैचित्र्यार्थः। ईशिषे। ईशिध्वे। ईडिषे। ईडिध्वे। जनिषे। जनिध्वे। जनी प्रादुर्भावे छान्दसत्वाच्छ्यनो लुगुपधालोपाभावश्च। जन जनने। कर्मव्यतिहारे आत्मनेपदम्। व्यतिजज्ञिषे। व्यतिजज्ञिध्वे। एकदेशविकृतस्यानन्य त्वादीशिष्व ईशिध्वम्। ईडिष्व। ईडिध्वम्। जनिष्व। जनिध्वम्। विकृतिग्रहणेन प्रकृतेर ग्रहणात्। ऐड्ढ्वम्॥

## लिङः सलोपोऽनन्त्यस्य। ७। २। ७९॥

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात्। कुर्यात्। कुर्याताम्। कुर्युः। कुर्वीत। कुर्वीयाताम्। कुर्वीरन्। अनन्त्यस्य किम्। कुर्युः। कुर्याः। सार्वधातुके किम्। क्रियास्ताम्। क्रियासुः। कृषीष्ट। कृषीयास्ताम्। कृषीरन्॥

## अतो येयः। ७। २। ८०॥

अतः परस्य सार्वधातुकावयवस्य या इत्यस्य इय् स्यात्॥ भवेत्। भवेताम्। भवेयुरित्यत्र तूस्य पदान्तादिति पररूपे प्राप्ते परत्वान्नित्यत्वाच्चातो येय इति प्राञ्चः। यद्यप्यन्तरङ्गत्वात्पररूपं

न्याय्यम् तथापि यास् इत्येतस्य इय् इति व्याख्येयम् । एवं च सलोपस्यापवाद इय् । अतोयेय इत्यत्र तु सन्धिरार्षः । अतः किम् । चिनुयात् । तपरः किम् । पायात् । सार्वधातुके किम् । चिकीर्ष्यात् । मध्येऽपवादन्यायेन ह्यतो लोप एव बाध्येत । भवेदित्यादौ तु परत्वाद्दीर्घः स्यात् ॥

## आतो ङितः । ७ । २ । ८१ ॥

अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । पचेते । यजेथे । पचेथाम् । आतः किम् । पचन्ति । ङितः किम् । पचावहै । अतः किम् । चिन्वाते । तपरः किम् । मिमाते ।

## आने मुक् । ७ । २ । ८२ ॥

अङ्गस्यातो मुगागमः स्यादाने परे ॥ पचमानः यजमानः ॥

## ईदासः । ७ । २ । ८३ ॥

आसः परस्यानस्य ईत्स्यात् । आदेः परस्य । आसीनः ॥

## अष्टन आ विभक्तौ । ७ । २ । ८४ ॥

उत्तरसूत्राद्धलीत्यपकृष्यते । अष्टन आत्वं स्याद्धलादौ विभक्तौ ॥ अष्टाभिः । अष्टाभ्यः । अष्टानाम् । अष्टासु । तदन्त परमाष्टाभिः । वैकल्पिकं चेदमष्टन आत्वमित्युक्तत्वादात्वाभावे अष्टभिः । अत्र बहुवचननिर्देशाभावेन गौणत्वेऽपि हलादौ वैकल्पिकमात्वम् । प्रियाष्टाः । प्रियाष्टाभ्याम् ३ । प्रियाष्टाभिः । प्रियाष्टाभ्यः २ । प्रियाष्टासु ॥

प्रियाष्णो राजवत्सर्वं हाहावच्चापरं हलि ।

विभक्तौ किम् । अष्टत्वम् हलादौ किम् । अष्टानामित्यत्र नुटः पश्चादेव सन्निपातपरिभाषायाः अनित्यत्वादात्वम् न तु

प्राक् । अन्यथा अष्टन् आमिति स्थिते परत्वान्नित्यत्वाच्चात्वे कृते अनान्तत्वेन षट्संज्ञाभावे नुट् न स्यादिति दिक् ॥

रायो हलि । ७ । २ । ८५ ॥

रैशब्दस्याकारोऽन्तादेशः स्यात् हलि विभक्तौ ॥ राः । राभ्याम् । एकदेशविकृतस्यानन्यत्वात्प्राभ्याम् । प्राभिः । नुम चिरेति नुट्यात्वे प्राणामिति माधवः । वस्तुतस्तु सन्निपातपरिभाषया नुट्यात्वं न । नामीति दीर्घस्त्वारम्भसामर्थ्यात्परिभाषां बाधते इत्युक्तम् । प्रीणाम् । हलि किम् । रायौ । रायः । विभक्तौ किम् । रैत्वम् ॥

युष्मदस्मदोरनादेशे । ७ । २ । ८६ ॥

अनयोराकारः स्यादनादेशे हलादौ विभक्तौ परतः । युवाभ्याम् । युष्माभिः । युष्मासु । अस्मासु ॥

द्वितीयायां च । ७ । २ । ८७ ॥

युष्मदस्मदोराकारः स्याद्द्वितीयायाम् । त्वाम् । माम् । युवाम् । आवाम् । युष्मान् । अस्मान् ॥

प्रथमायाश्च द्विवचने भाषायाम् । ७ । २ । ८८ ॥

इह युष्मदस्मदोराकारः स्यात् । औङि भाषायामित्येव सुवचम् । युवाम् । आवाम् । भाषायाम् किम् । युवं वस्त्राणि । आवं च यथार्थं ॥

योऽचि । ७ । २ । ८९ ॥

युष्मदस्मदोर्यकारादेशः स्यादनादेशेऽजादौ विभक्तौ । त्वया । मया । त्वयि । मयि । युवयोः । आवयोः ॥

## शेषे लोपः । ७ । २ । ९० ॥

आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपःस्यात् । त्वम् । अहम् । यूयम् । वयम् । तुभ्यम् । मह्यम् । युष्मभ्यम् । अस्मभ्यम् । त्वत् । मत् । युष्मत् । अस्मत् । तव । मम । युष्माकम् । अस्माकम् । ननु त्वं स्त्रीत्यादौ त्व अम् अह अम् इत्यादिस्थिते अमिपूर्वत्वादिकं परमपि बाधित्वान्तरङ्गत्वाट्टाप् प्राप्नोति । सत्यम् । अलिङ्गे युष्मदस्मदी । तेन स्त्रीत्वाभावान्न टाप् । यद्वा शेषे लोपष्टिलोपः । कथं वक्ष्यमाणादेशापेक्षः शेषः । ते चादेशा मपर्यन्तस्य । शेषे इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया तेन मपर्यन्ताच्छेषस्याद्शब्दस्य लोपः । स च परोऽप्यन्तरङ्गे अतोगुणे कृते प्रवर्तते । अदन्तत्वाभावान्न टाप् ॥

## मपर्यन्तस्य । ७ । २ । ९१ ॥

इत्यधिकृत्य ॥

## युवावौ द्विवचने । ७ । २ । ९२ ॥

द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ । युवाम् । आवाम् । युवाभ्याम् । आवाभ्याम् । युवयोः । आवयोः । मपर्यन्तस्य किम् । साकच्कस्य मा भूत् । युवकाम् । आवकाम् । त्वया मयेत्यत्र च त्व्या म्येति मा भूत् । युवकाभ्यामावकाभ्यामिति च न सिध्येत् ॥

## यूयवयौ जसि । ७ । २ । ९३ ॥

स्पष्टम् । यूयम् । वयम् । परमयूयम् । परमवयम् । अतियूयम् । अतिवयम् । इह शेषेलोपोऽन्त्यलोप इति पक्षे जसः शी

प्राप्तः। अङ्गकार्ये कृते पुनर्नाङ्गकार्यमिति परिभाषया न भवति। ङेप्रथमयोरित्यत्र मकारान्तरं प्रश्लिष्य अम् मान्त एवावशिष्यते न तु विक्रियत इति व्याख्यानाद्वा॥

## त्वाहौ सौ। ७। २। ९४॥

युष्मदस्मदोर्मपर्यन्तस्य त्वाहावादेशौ स्तः सौ परे। त्वम्। अहम्। परमत्वम्। परमाहम्। अतित्वम्। अत्यहम्॥

## तुभ्यमह्यौ ङयि। ७। २। ९५॥

अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि। तुभ्यम्। मह्यम्। परमतुभ्यम्। परममह्यम्। अतितुभ्यम्। अतिमह्यम्॥

## तवममौ ङसि। ७। २। ९६॥

अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि। तव। मम। परमतव। परममम। अतितव। अतिमम॥

## त्वमावेकवचने। ७। २। ९७॥

एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ। त्वाम्। माम्। त्वया। मया। त्वत्। मत्। त्वयि। मयि॥

समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी।
समासार्थोऽन्यसंख्यश्चेत्स्तो युवावौ त्वमावपि॥ १॥
सुजस्ङेङस्सु परत आदेशाः स्यु सदैव ते।
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि॥ २॥
एते परत्वाद्बाधन्ते युवावौ विषये स्वके।
त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः॥ ३॥

द्वेकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी ।

तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ न च ॥ ४ ॥

त्वां मां वा अतिक्रान्त इति विग्रहे अतित्वम् । अत्यहम् । अतित्वाम् । अतिमाम् । अतियूयम् । अतिवयम् । अतित्वाम् । अतिमाम् । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । अतित्वभ्यम् । अतिमभ्यम् । ङसि-भ्यसोः । अतित्वत् । अतिमत् । भ्यामि प्राग्वत् । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकम् । अतिमाकम् । अतित्वयि । अतिमयि । अतित्वासु । अतिमासु । युवामावां वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत् । औअम्औट्सु । अतियुवाम् । अत्यावाम् । त्रीणि वचनानि तुल्यानि । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतियुवाभ्याम् । अत्यावाभ्याम् । अतियुवाभिः । अत्यावाभिः । भ्यसि । अतियुवभ्यम् । अत्यावभ्यम् । ङसिभ्यसोः । अतियुवत् । अत्यावत् । ओसि । अतियुवयोः । अत्यावयोः । अतियुवाकम् । अत्यावाकम् । अति-युवयि । अत्यावयि । अतियुवासु । अत्यावासु । युष्मानस्मान् वा अतिक्रान्त इति विग्रहे सुजसङेङस्सु प्राग्वत् । औअम्औट्सु अतियुष्माम् । अत्यस्माम् । अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । अतियुष्माभ्याम् । अत्यस्माभ्याम् । अतियुष्माभिः । अत्यस्माभिः । अतियुष्मभ्यम् । अत्यस्मभ्यम् । ङसिभ्यसोः । अतियु-ष्मत् । अत्यस्मत् । ओसि अतियुष्मयोः । अत्यस्मयोः । अतियु-

ष्माकम् । अत्यस्माकम् । अतियुष्मयि । अत्यस्मयि । अतियुष्मासु ।
अत्यस्मासु ॥

## प्रत्ययोत्तरपदयोश्च । ७ । २ । ९८ ॥

मपर्यन्तयोरनयोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तरपदे च ।
त्वदीयः । मदीयः । त्वत्पुत्रः । मत्पुत्रः ॥

## त्रिचतुरोः स्त्रियान्तिसृचतसृ । ७ । २ । ९९ ॥

स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो विभक्तौ परतः ॥ तिस्रः ।
चतस्रः २ तिसृभिः । चतसृभिः । तिसृभ्यः २ । चतसृभ्यः २ ।
आमि नुमचिरेतिनुट् । नतिसृचतसृ इति दीर्घो न । तिसृणाम् । चत-
सृणाम् । तिसृषु । चतसृषु । स्त्रियां किम् । त्रयः । चत्वारः ।
त्रीणि । चत्वारि । स्त्रियामिति त्रिचतुरोर्विशेषणान्नेह । प्रियास्त्र-
यस्त्रीणि वा यस्याः सा प्रियत्रिः मतिवत् । आमि प्रियत्रयाणा-
मिति विशेषः । प्रियास्तिस्रो यस्येति विग्रहे तु प्रियतिस्रौ । प्रिय-
तिस्रः । प्रियतिस्रमित्यादि । प्रियास्तिस्रो यस्य तत्कुलं प्रियत्रि ।
स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः । नलुमतेति
निषेधस्यानित्यत्वात्पक्षे प्रियतिसृ । भाष्योदाहरणप्रामाण्याद्वादेशात्
पूर्वविप्रतिषेधेन नुम् । प्रियतिसृणी । प्रियतिसृणि । तृतीयादिषु
पुंवद्भावविकल्पात्पर्यायेण नुमभावौ । प्रियतिस्रा । प्रियतिसृणा
इत्यादि । एवं प्रियचतसृ इत्यादि । नद्यृतश्चेति कप् न । विभ
क्त्याश्रयत्वेन तिसृचतसृभावस्य बहिरङ्गत्वात् ॥ तिसृभावे संज्ञायां
कन्युपसंख्यानम् ॥ * ॥ तिसृका नाम ग्रामः ॥

## अचि र ऋतः । ७ । २ । १०० ॥

तिसृचतस्रु एतयोर्ऋकारस्य रेफादेशः स्यादचि ॥ गुणदीर्घोत्वानामपवादः । तिस्रश्चतस्रस्तिष्ठन्ति । तिस्रश्चतस्रः पश्य । प्रियतिस्रः प्रियचतस्रः आगतः ॥

## जराया जरसन्यतरस्याम् । ७ । २ । १०१ ॥

जराशब्दस्य जरस्वा स्यादजादौ विभक्तौ ॥ जरसौ । शीभावात्परत्वाज्जरस् । आमि नुटः परत्वाज्जरस् । जरसामित्यादि । पक्षे रमावत् । इह । पूर्वविप्रतिषेधेन शीभावं प्रति सन्निपातपरिभाषाया अनित्यतां चाश्रित्य जरसी इति केचिदाहुस्तन्निर्मूलम् । यद्यपि जरसादेशस्य स्थानिवद्भावेनाबन्तत्वमाश्रित्य औङ आपः आङि चापः याडापः ह्रस्वनद्यापः ङेराम्नीति पञ्चापि विधयः प्राप्ताः । एवं नत्तिसृपृत्सु । तथापि । अनल्विधावित्युक्तेर्न भवन्ति । आ आबिति प्रश्लिष्य आकाररूपस्यैवापः सर्वत्र ग्रहणात् । एवं हल्ङ्याप्भ्य इति सूत्रेपि आ आप् ङी ई इति प्रश्लेषादतिखट्वः निष्कौशाम्बिरित्यादिसिद्धे दीर्घग्रहणं प्रत्याख्येयम् । न चैवमप्यतिखट्वायेत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वञ्चाश्रित्य याट् स्यादिति वाच्यम् । आबन्तं यदङ्गं ततः परस्य याड्विधानात् । उपसर्जनस्त्रीप्रत्यये तदादिनियमात् । पदाङ्गाधिकारे तस्य तदन्तस्य च । अनेकाल्त्वात्सर्वादेशे प्राप्ते निर्दिश्यमानस्यादेशा भवन्ति । एकादेशशविकृतस्यानन्यत्वाज्जरशब्दस्य जरस् । निर्जरसौ । निर्जरसः । इनादीन्बाधित्वा परत्वाज्जरस् । निर्जरसा । निर्जरसे । निर्जरसः । पक्षे । हलादौ च रामवत् । वृत्तिकृता तु पूर्वविप्रतिषेधेनेनातोः कृतयोः

सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन निर्जरसादिति रूपे न तु निर्जरसा निर्जरस इति केचिदित्युक्तम् । तथा भिसि निर्जरसैरिति रूपान्तरमुक्तम् । तदनुसारिभिश्च षष्ठ्येकवचने निर्जरस्येत्येव रूपमिति स्वीकृतम् । एतच्च भाष्यविरुद्धम् । क्लीबे सोरमादेशे कृते सन्निपातपरिभाषया न जरस् । अजरम् । अजरसी । अजरे । परत्वाज्जरसि कृते झलन्तत्वान्नुम् । सान्तेति दीर्घः । अजरांसि । अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस् । ततः सन्निपातपरिभाषया न लुक् । अजरसम् । अजरम् । अजरसी । अजरे । अजरांसि । अजराणि ॥

## त्यदादीनामः । ७ । २ । १०२ ॥

एषामकारोऽन्तादेशः स्याद्विभक्तौ ॥ द्विपर्यन्तानामेवेष्टिः ॥ * ॥ स्यः । त्यौ । त्ये । सः । तौ । ते । यः । यौ । ये । एषः । एतौ । एते । अयम् । इमौ । इमे । असौ । अमू । अमी । द्वौ २ । द्वाभ्याम् । द्वयोः २ । द्विशब्दो नित्यं द्विवचनान्तः । द्विपर्यन्तानां किम् । भवान् । भवन्तौ । संज्ञायामुपसर्जनत्वे च नात्वं सर्वाद्यन्तर्गणकार्यत्वात् । द्विर्नाम कश्चित् । द्विः । द्वी । द्वयः । द्वावतिक्रान्तोऽतिद्विः हरिवत् । प्राधान्ये तु परमद्वावित्यादि ॥

## किमः कः । ७ । २ । १०३ ॥

किमः कः स्याद्विभक्तौ । अकच्सहितस्याप्ययमादेशः । कः । कौ । के । कम् । कौ । कान् इत्यादि सर्ववत् ॥

## कु तिहोः । ७ । २ । १०४ ॥

किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः ॥ कुतः । कुत्र । कुह ॥

## क्वाति । ७ । २ १०५ ॥

किमः क्वत्यादेशः स्यादति । क्व ॥

## तदोः सः सावनन्त्ययोः । ७ । २ । १०६ ॥

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ परे । स्यः । सः । एषः । असौ । परमसः । द्विपर्यन्तानामित्येव । नेह । त्वम् । न च तकारोच्चारणसामर्थ्यान्नेति वाच्यम् । अतित्वमिति गौणे चरितार्थत्वात् । संज्ञायां गौणत्वे च न । त्यद् । अतित्यद् । अनन्त्ययोः किम् । हे स । त्यदादीनां सम्बोधनन्नास्तीति तूत्सर्गः ॥

## अदस औ सुलोपश्च । ७ । २ । १०७ ॥

अदस औकारोन्तादेशः स्यात्सौ परे सुलोपश्च ॥ असौ । औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च ॥ * ॥ प्रतिषेधसन्नियोगशिष्टमुत्वं तदभावे न प्रवर्तते । असकौ । असुकः ।

## इदमो मः । ७ । २ । १०८ ॥

इदमो मस्य मः स्यात्सौ परे । त्यदाद्यत्वापवादः । अयम् । इयम् ।

## दश्च । ७ । २ । १०९ ॥

इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । इमम् । इमौ । इमान् । इमे । इमाः । इमाम् । इमे । इमाः । इमे । इमानि ॥

## यः सौ । ७ । २ । ११० ॥

इदमो दस्य यः स्यात्सौ परे । इयम् ॥

## इदोऽय् पुंसि । ७ । २ । १११ ॥

इदम इदः स्थाने अय् स्यात्सौ परे पुंसि ॥ अयम् ॥

## अनाप्यकः । ७ । २ । ११२ ॥

अककारस्य इदम इदोऽन्स्यादापि विभक्तौ । आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः । अनेन । अनया । अनयोः । अकः किम् । इमकेन ॥

## हलि लोपः । ७ । २ । ११३ ॥

अककारस्य इदम इदो लोपः स्यादापि हलादौ । नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे । सुपि चेति दीर्घः । आभ्याम् । एत्वं एभिः । अत्व कृते नित्यत्वाण्ङेः स्मै । पश्चाद्धलिलोपः । अस्मै । अस्मात् इत्यादि । अकः । किम् । इमकाभ्याम् ॥

## मृजेर्वृद्धिः । ७ । २ । ११४ ॥

मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे । मार्ष्टा । मार्ष्टुम् । मार्जितुम् ।

## अचोऽञ्णिति । ७ । २ । ११५ ॥

ञिति णिति च प्रत्यये परेऽजन्ताङ्गस्य वृद्धिः स्यात् ॥ एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ । कारकः । गौः । गावौ । गावः । सखायौ । सखायः ।

## अत उपधायाः । ७ । २ । ११६ ॥

उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे ।

पाकः । त्यागः । रागः । पाचकः । पाठकः । अतः किम् । भेदकः । उपधायाः किम् । चकासकः । तक्षकः ॥

**तद्धितेष्वचामादेः । ७ । २ । ११७ ॥**

ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात् ॥

**किति च । ७ । २ । ११८ ॥**

किति तद्धिते च तथा । गार्ग्यः । वात्स्यः । दाक्षिः । औपगवः । कापटवः । नाडायनः । प्राग्वहतेष्ठक् । आक्षिकः । शालाकिकः । त्वाष्ट्रो जागत इत्यादावादिवृद्धिरन्त्योपधावृद्धिं बाधते इति सर्वंसिद्धिः ॥

इत्योरम्भट्टेन श्रीघोरुडभट्टविश्वरूपात्मजेन वैजनाथभट्ट-
विश्वरूपापरनामधेयेन विरचितायां व्याकरणदीपिका-
समाख्यायां पाणिनिसूत्रवृत्तौ सप्तमाध्यायस्य
द्वितीयः पादः समाप्तः ॥



# सप्तमाऽध्यायस्य तृतीयः पादः ।

**देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् । ७ । ३ । १ ॥**

परिभाषेयमिति पदसञ्ज्ञायां सूत्रम् । एषां पञ्चानां वृद्धिप्राप्तावचामादेरच आत् भवति [illegible] च । देविकायां भवं दाविकमुदकम् । देविकाकूले भवा दाविकाकूलाः शालयः । पूर्वदेविका नाम प्राचां ग्रामः । तत्र भवः पूर्वदाविकः । प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिः । साप्याकार एव भवति । अस्य स्वतन्त्रविधित्वे तु नेदं सिध्येत् । दाविकाकूला इति तु विधित्वेपि सिध्यति । अङ्गस्याचामादेरच आद्भवति स चेद्देविकादीनामाद्यच् भवतीत्यर्थसम्भवात् । अत एव सुदेविकायां भवः सौदेविक इत्यत्र नातिव्याप्तिः । विधित्वे सुशब्दोकारस्य देविकाद्यनवयवत्वात् परिभाषात्वे देविकादेर्वृद्धिप्राप्तेश्च । परिभाषात्वे तु अङ्गस्येत्यस्यैवमभिसम्बन्धः क्रियते देविकादीनां वृद्धिप्राप्तावचामादेराकारो भवति देविकादीन्यङ्गसम्बन्धीनि चेत् [illegible] । अनुवृत्तस्य सम्बन्धो वक्तव्य इत्येतावदेव [illegible] प्रयोजनं । न तु किञ्चिद्वाचत्यम् । यदि च परिभाषात्वेपि अङ्गस्याचामादेरचो वृद्धिप्राप्तौ आद्भवति स चेद्देविकादीनामाद्यजित्यर्थः स्यात्तदापि पूर्वदाविको नैव सिद्ध्येत् । शिंशपाया विकारः शांशपश्चमसः । पलाशादिभ्यो वेत्यञ् । शिंशपास्थले भवा देवाः शांशपास्थलाः । पूर्वशिंशपा नाम प्राचां ग्रामः । तत्र भवः पूर्वशांशपः । दित्यौह इदं दात्यौहम् । दात्यौ-

लघ्वे भवं द्राघिमणम् । श्रेयसि भवं श्रायसम् ॥ वहीनरस्येत्वं वक्तव्यम् ॥ * ॥ वहीनरस्यापत्यं वैहीनरिः । आकारवृद्धिः प्राप्ता सा इकारेण बाध्यते । तस्य त्वैकारवृद्धिर्भवत्येव । न हि तस्यां नाप्राप्तायामिकारो विधीयते । यतः सापि बाध्येत । केचित्तु विहीनरस्यैव वैहीनरिमिच्छन्ति ॥

## केकयमित्रयुप्रलयानामादेरियः । ७ । ३ । २ ॥

एषां यकारादेरियादेशः स्यात् ञिति णिति किति च तद्धिते परे ॥ केकयस्यापत्यं कैकेयः । जनपदशब्दात्क्षत्रियादञ् । मैत्रेयिकया श्लाघते । मित्रयूनां भावेनेत्यर्थः । गोत्रचरणाच्छ्लाघात्याकारेति वुञ् । तत्र हि लौकिकं गोत्रं गृह्यते । लोके च ऋषिशब्दो गोत्रमित्यभिधीयते इति काशिका । प्रलयादागतं प्रालेयम् । इयादेशेन वृद्धिर्न बाध्यते । विषयभेदात् । अचामादेर्वृद्धिर्यादेरियादेशः । अङ्गं तूभयोर्विशेषणं न कार्यीति हरदत्तः ॥

## न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् । ७ । ३ । ३ ॥

पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किन्तु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः ॥ वैयाकरणः । स्वश्वस्यापत्यं सौवश्वः । स्वश्वशब्दः शिवादिरिति पद्मञ्जर्यां स्पष्टम् । य्वाभ्यां किम् । वर्थस्यापत्यं वार्थिः । पदान्ताभ्यां किम् । एतीति यन् तस्य छात्रा याताः । प्रतिषेधवचनमैचोर्विषयप्रक्लृप्त्यर्थम् इह मा भूत् । दाध्यश्विः । माध्वश्विः । अन्यथैच्भ्यां वृद्धिबाधे सिद्धे तद्वैयर्थ्यात् । एतच्च सूत्रं नाप्राप्तद्धितेष्वचामादेरित्येतद्विषयकम् । द्वे अशीती भृतो द्व्याशीतिक इत्यादौ संख्यायाः संवत्सरसंख्यस्य चेत्येतद्विषये न प्रवर्तते । कथं

तर्हि पूर्वेष्वलिन्दे भवः पूर्वैषुयलिन्द इत्यादौ प्राचां ग्रामनगराणामि-त्येतद्विषये प्रवृत्तमिति चेत् । इष्टानुरोधेन प्राचांग्रामेत्यत्रैतदनुवर्त्य वाक्यभेदेन व्याख्यायते संख्यायाः संवत्सरेत्यत्र तु नेत्यवेहि । पूर्व-शब्द आवर्तते तत्रैकोऽवयववचनः । अपरो व्यवस्थावचनः । ताभ्यां पूर्वावेचौ भवतस्तौ चाङ्गस्यावयवाविति । तेन डश्चाजश्च वर्णौ तयो-रिदं औवजन्तस्येदमौवर्जीयमिति छः सिद्धः । अन्यथैचोरभक्तत्वा-दतन्मध्यपतितत्वाच्च प्रातिपदिकस्यावृद्धत्वान्न स्यादिति पदमञ्जर्यां स्पष्टम् ॥

## द्वारादीनां च । ७ । ३ । ४ ॥

द्वार । स्वर । स्वाध्याय । व्यल्कश । स्वस्ति । स्वर् । स्फ्य-कृत । स्वादुमृदु । श्वस् । श्वन् । स्व । स्वग्राम । एषां न वृद्धिः ऐजागमश्च । द्वारे नियुक्तो दौवारिकः । द्वारपालस्येदं दौवा-रपालम् । दाविकाकूलवदसिद्धिः । सौवर्यः सप्तम्यः । व्यल्कशे भवः वैयल्कशः । स्वस्तीत्याह सौवस्तिकः । स्वर्भवः सौवः । अव्ययानां भमात्रे टिलोपः । स्वर्गगमनमाह सौवर्गगमनिकः । स्फ्यकृतस्या-पत्यं स्फैयकृतः । ऋषित्वादणिति पदमञ्जर्यां स्पष्टम् । स्वादुमृदु-न इदं सौवादुमृदवम् । श्वो भवं सौवस्तिकम् । श्वसस्तुट् चेति ठञ् । शुनो विकारो मांसं शौवम् । श्वादंष्ट्रायां भवः शौवादंष्ट्रो मणिः । संज्ञापूर्वको विधिरनित्य इति वृद्धाच्छो न । प्रत्ययसंज्ञा विशिष्टस्यैव छस्य विधानात् । स्वस्येदं सौवम् । स्वग्रामे भवः सौवग्रामिकः । अध्यात्मादित्वाट्ठञ् । स्वाध्यायशब्दो यदि शोभनो-ऽध्यायः स्वाध्यायः आङ् मध्ये प्रक्षिप्तः अन्येषामपि दृश्यते

इति वा उत्तरपदादेर्दीर्घत्वं तदा पूर्वेणैव सिद्धम् । यदि च स्वध्यायस्वध्यायश्च स्वाध्याय इति तदापि स्वादेष्वित्वस्वशब्दादित्वेन स्वाध्यायस्वप्राममयोः सिद्धमेवेति दिक् ॥

न्यग्रोधस्य च केवलस्य । ७ । ३ । ५ ॥

अस्य न वृद्धिरैजागमश्च । नैयग्रोधम् । प्लक्षादिभ्योऽण् । केवलस्य किम् । न्यग्रोधमूले भवाः न्यग्रोधमूलाः शालयः । न्यग्रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थम् । अव्युत्पत्तिपक्षे तु विध्यर्थम् ॥

न कर्मव्यतिहारे । ७ । ३ । ६ ॥

अत्र ऐ न स्यात् । व्यावक्रोशी । व्यावहासी ॥

स्वागतादीनां च । ७ । ३ । ७ ॥

ऐच् न स्यात् । स्वागतमित्याह स्वागतिकः । स्वाध्वरे चरति स्वाध्वरिकः । स्वङ्गस्यापत्यं स्वाङ्गिः । व्याङ्गिः । व्यडस्यापत्यं व्याडिः । व्यवहारेण चरति व्यावहारिकः । स्वपतौ साधु स्वापतेयम् ॥

श्वादेरिञि । ७ । ३ । ८ ।

ऐच् न । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । श्वादंष्ट्रिः । प्रत्याहारनिर्दिष्टैरादेरचो विशेषणात्तदादिविधिर्भवतीत्यत्रैतदेव ज्ञापकम् ॥ इकारादाविति वाच्यम् ॥ * ॥ श्वगणेन चरति श्वागणिकः । श्वायूथिकः ॥ इजन्तस्य चान्यत्र तद्धिते प्रतिषेधो वक्तव्यः ॥ * ॥ श्वाभस्त्रेरिदं श्वाभस्त्रम् । इजश्चेत्यण् ॥

पदान्तस्यान्यतरस्याम् । ७ । ३ । ९ ॥

श्वादेरङ्गस्य पदशब्दान्तस्य्वा । श्वापदस्येदं श्वापदम् । शौवापदम् । शौवदंष्ट्रश्चाभावे अण् ॥

### उत्तरपदस्य । ७ । ३ । १० ॥

अधिकारोऽयं हनस्त इत्यस्मात्प्राक् । वक्ष्यति च प्रोष्ठपदानाम् । प्रोष्ठपदासु जातः प्रोष्ठपादो ब्राह्मणः ॥

### अवयवादृतोः । ७ । ३ । ११ ॥

अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिर्ञिति णिति किति च तद्धिते ॥ पूर्ववार्षिकः । पूर्वशारदः । अपरहैमनः । वर्षाणां पूर्वं इत्येकदेशिसमासः । तत्र भव इत्यर्थे वर्षाभ्यष्ठक् । ऋत्वण् । हेमन्ताच्च सर्वत्राण् तलोपश्चेत्यण् । अवयवात्किम् । पूर्वासु वर्षासु भवः पौर्ववार्षिकः । पौर्वशरदिकः । कालाट्ठञ् । ऋतोर्वृद्धिमद्विधाववयवानामिति तदन्तविधिरुदाहरणे । प्रत्युदाहरणे तु न । अवयवत्वाभावात् । ऋतुवाचकाद्वृद्धिनिमित्तप्रत्ययविधौ तदन्तविधिर्वक्तव्योऽवयववाचकानां पूर्वपदत्वे इति तदर्थः । वृद्धिमद्विधौ किम् । पूर्वप्रावृषम् । ऋत्वण् । न तु प्रावृष एण्यः ॥

### सुसर्वार्द्धाज्जनपदस्य । ७ । ३ । १२ ॥

उत्तरपदस्य वृद्धिः । पाञ्चालकः । सर्वपाञ्चालकः । अर्द्धपाञ्चालकः । जनपदतदवध्योश्च । अवृद्धादपि बहुवचनविषयादिति वुञ् । सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधिः । जनपदवाचिनः शब्दस्यानन्तरं प्रत्यये विधीयमाने तदन्तविधिर्यदि सुप्रभृतिभ्यः परः स भवतीति तदर्थः ॥

### दिशोऽमद्राणाम् । ७ । ३ । १३ ॥

दिग्वाचकाज्जनपदवाचिनो वृद्धिः । पूर्वपाञ्चालकः । उत्तरपा-

प्रालकः । दिशः किम् । पूर्वपञ्चालानामयं पौर्वपञ्चालः । दिक्-शब्दग्रहणेन दिग्वाचकस्यैव ग्रहणात्तदन्तविधेरभावान्न लुक् । अम-द्राणां किम् । पौर्वमद्रः । मद्रेभ्योऽञ् । योगविभाग उत्तरार्थः । सुसर्वार्द्धदिशो जनपदस्यामद्राणामित्युक्ते स्वादिभ्यः परस्यापि मद्रस्य पर्युदासो मा भूदितीहार्थोऽपि ॥

## प्राचां ग्रामनगराणाम् । ७ । ३ । १४ ॥

यद्यपि नगरस्यापि ग्रामनामधेयत्वमस्ति तथापि नगराणा-मित्युत्तरपदविशेषणं ग्रामाणामित्यङ्गविशेषणमित्यर्थमुभयम् । प्राचां देशे दिशः परेषां नगरवाचिनां ग्रामवाच्यङ्गानामचामादेरचो वृद्धिः । पूर्वेषुकामशम्यां भवः पूर्वैषुकामशमः । समुदायस्यास्य ना-मधेयादण् । पूर्वपाटलिपुत्रकः । उत्तरपदमेव नगरमाह । रोप-धेतोः प्राचामिति वुञ् । यद्यप्येकमेव पाटलिपुत्रम् । तथापि तदेकदेशे तत्प्रवृत्त्या समानाधिकरणसमासः । भाष्ये तु नगरग्रहणं प्रत्याख्यातम् । पदैकदेशन्यायेनोत्तरपदस्यापि ग्रामत्वमित्याशयात् ।

## संख्यायाः संवत्सरसंख्यस्य च । ७ । ३ । १५ ॥

संख्याया उत्तरपदस्य वृद्धिः स्यात् ञिदादौ । द्विसांव-त्सरिकः । द्वे षष्टी भृतो द्विषाष्टिकः । संख्यायाः परिमाणस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम् । तेन द्वैसमिकः द्वैरात्रिक इत्युत्तरपदवृद्धिर्न ॥

## वर्षस्याभविष्यति । ७ । ३ । १६ ॥

उत्तरपदवृद्धिः स्यात् । द्विवार्षिकः । भविष्यति तु द्वैव-

षिकः । अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न । कर्म करिष्यतीत्यादि पदान्तरसमभिव्याहारेण हि गम्यते तत्र भविष्यता न तु तद्धितार्थः । द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः । वर्षाल्लुक् च चित्तवति नित्यमिति नित्यं लुक् तु न भवति । आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे पुनर्नित्यग्रहणाद् भूतार्थे एव स इष्यते । अन्यत्र चित्तवत्यपि विकल्प एव ॥

## परिमाणान्तस्यासंज्ञाशाणयोः । ७ । ३ । १७ ॥

उत्तरपदवृद्धिः स्यात् ञिदादौ । परमनैष्किकम् । असमासे निष्कादिभ्य इत्यत्र समासपर्यु दासादत्र ठञ् । द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः । द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम् । द्विनैष्किकम् । शाणप्रतिषेधात्परिच्छित्तिसाधनमिह परिमाणम् । तेनोन्मानस्यापि भवति । असंज्ञेति किम् । पञ्च लोहिन्यः पञ्च कलापाः परिमाणमस्य पाञ्चलोहितिकम् । पञ्चकलापिकम् । लोहिनी गुञ्जा । तद्धितान्तसंज्ञा । द्वैशाणम् । कुलिजशब्दमपि केचित्पठन्ति । द्वे कुलिजे प्रयोजनमस्य द्वैकुलिजिकः । कुलिजं धान्यमानम् । अन्तग्रहणं चिन्त्यप्रयोजनम् ॥

## जे प्रोष्ठपदानाम् । ७ । ३ । १८ ॥

प्रोष्ठपदानामुत्तरपदस्याचामादेरचो वृद्धिः जातार्थे ञिति णिति किति च ॥ प्रोष्ठपदासु जातः प्रोष्ठपादो माणवकः । प्रोष्ठपदाभिर्युक्तः काल इत्यणो लुबविशेषे इति लुपि कृतसन्धिवेलादिसूत्रेण जातार्थेऽण् । जे इति किम् । प्रोष्ठपदासु भवः प्रौष्ठपदः । बहुवचननिर्देशात्पर्यायोऽपि गृह्यते । भद्रपादः ॥

**हृद्भगसिन्ध्वन्ते पूर्वपदस्य च । ७ । ३ । १९ ॥**

हृदाद्यन्ते पूर्वपदोत्तरपदयोरचामादेरचो वृद्धिर्ञिति णिति किति च ॥ सुहृदोऽपत्यं सौहार्दः । सौभाग्यम् । सुभगाया अपत्यं सौभागिनेयः । कल्याण्यादीनामिनङ् । महते सौभगायेत्यत्रोद्गाथा-द्यन्ते तु छान्दसत्वान्नोत्तरपदवृद्धिः । सक्तुप्रधानाः सिन्धवः सक्तु सिन्धवः । तेषु भवः साक्तुसैन्धवः । सिन्धुः कच्छादिः । तेन तदन्तविधिरिष्यते इत्यणिति वृत्तिः ॥

**अनुशतिकादीनां च । ७ । ३ । २० ॥**

एषामुभयपदवृद्धिः स्यात् ञिति णिति किति च । अनुश-तिकस्येदं आनुशातिकम् । अनुहोडेन चरति आनुहौडिकः । अङ्गा-रवेणुर्नाम कश्चित्तस्यापत्यं आङ्गारवैणवः । सुवनडस्यापत्यं सौवना-नाडिः । आकृतिगणोऽयम् । अभिगममर्हति आभिगामिकः ॥

**देवताद्वन्द्वे च । ७ । ३ । २१ ॥**

अत्र पूर्वोत्तरपदयोराद्यचो वृद्धिः स्यात् ञिति णिति किति च परे ॥ आग्निमारुतम् । आग्निवारुणम् । यो देवताद्वन्द्वः सूक्तसम्बन्धी वा हविःसम्बन्धी तत्रायं विधिः । इह तु न भवति । स्कन्दविशाखौ देवते अस्य स्कान्दविशाखः । ब्रह्मप्रजा-पती ब्राह्मप्रजापत्यमिति वृत्तिः । अत्र सास्यदेवतेत्यण् । पत्युत्तर-पदाण्ण्यः । ननु सास्यदेवतेत्यत्र न जातिवचनो देवताशब्दः । किन्तर्हि यस्मै हविर्निरूप्यते । यद्वा मन्त्रस्तुत्यम् । सा देवता गृह्यते । न चैवम्भूतोऽत्र द्वन्द्वार्थः एवं भूतत्वे वा यथा तद्धिता भवन्ति । तथायमपि विधिः प्राप्नोति । अत्राहुः । तद्धिताः

क्वचिदन्यथापि भवति । क्वा देवता स्य क्वः स्थालीपाक इति हि प्रकृत्यैकाजिति भाष्ये दृष्टमिति पदमञ्जर्यां स्पष्टम् ॥

**नेन्द्रस्य परस्य ॥ ७ । ३ । २२ ॥**

सैमेन्द्रम् । परस्य किम् । ऐन्द्राग्नः ।

**दीर्घाच्च वरुणस्य । ७ । ३ । २३ ॥**

दीर्घात् परस्य वरुणस्य न वृद्धिः । ऐन्द्रावरुणौ । दीर्घात्किम् । आग्निवारुणीमनड्वाहीम् ॥

**प्राचान्नगरान्ते । ७ । ३ । २४ ॥**

प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिर्ञ्णिति किति च । सुह्मनगरे भवः सौह्मनागरः । पौण्ड्रनागरः । प्राचां किम् । मनगरमुदक्षु तत्र भवो मानगरः ।

**जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् । ७ । ३ । २५ ॥**

जङ्गलाद्यन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिरुत्तरपदस्य वा ञ्णिति किति च ॥ कुरुजङ्गले भवं कौरुजङ्गलम् । कौरुजाङ्गलम् । वैश्वधेनवम् । वैश्वधैनवम् । सौवर्णवलजम् । सौवर्णवालजम् ।

**अर्द्धात्परिमाणस्य पूर्वस्य तु वा । ७ । ३ । २६ ॥**

अर्द्धात्परिमाणवाचकस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा ञ्णिति किति च । अर्द्धद्रोणेन क्रीतमर्द्धद्रौणिकम् । आर्द्धद्रौणिकम् । प्राग्वतेष्ठञ् । अर्द्धात्परिमाणस्य पूर्वन्त्विति सुवचम् । विभाषितमित्यनुवृत्तेः ।

नातः परस्य । ७ । ३ । २७ ॥

अर्द्धात्परस्य परिमाणाकारस्य वृद्धिर्न पूर्वस्य तु वा ञिदादौ । अर्द्धप्रस्थिकम् । आर्द्धप्रस्थिकम् । अतः किम् । अर्धकौडविकम् । तपरः किम् । अर्द्धखार्यां भवा अर्द्धखारी अर्द्धखारीभार्यं इत्यत्र वृद्धिनिमित्तस्येति पुंवद्भावनिषेधो न स्यात् । परस्य किम् । पूर्वस्य मा भूत् । नन्वत इत्येतत्सामर्थ्यादेव पूर्वस्य न भविष्यति । न हि पूर्वस्यार्द्धशब्दस्याकारादन्यो वृद्धिभागस्ति । किन्तु यदि पूर्वस्य प्रतिषेधः स्यात्पूर्वस्य तु वेत्येतदनर्थकं स्यात् । एवं तर्ह्यकारान्तस्योत्तरपदस्येत्येव तदन्तविधिर्मा भूत् । किन्तु स्यात् इह प्रतिषेधः स्यात् । अर्द्धद्रौणिकमर्द्धकौडविकमिति । पूर्वस्तु विधिरर्धमुष्टिना क्रीतः अर्द्धमौष्टिक इत्यादौ चरितार्थः ॥

प्रवाहणस्य ढे । ७ । ३ । २८ ॥

प्रवाहणशब्दस्योत्तरपदस्याचामादेरचो वृद्धिः पूर्वपदस्य तु वा ढे परे । प्रवाहणस्यापत्यं प्रावाहणेयः । प्रवाहणेयः । प्रवाहयतीति प्रवाहणः । शुभ्रादिः । णयन्ताद्वहेर्नन्द्यादेल्युः । णेर्विभाषेति णत्वम् ।

तत्प्रत्ययस्य च । ७ । ३ । २९ ॥

ढान्तस्य प्रवाहणस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा । प्रवाहणेयिः । प्रावाहणेयिः । बाह्यतद्धितनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुं न शक्यत इति सूत्रारम्भः ॥

नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् । ७ । ३ । ३० ॥

नञः परेषां शुच्यादिपञ्चानामादेरचो वृद्धिः पूर्वपदस्य तु वा ञिदादौ । अशुचेरागतमशुचौ भवं वा अशौचम् । आशौचम् ।

बहुव्रीहेर्वा भावार्थकोऽण् । अनैश्वर्यम् । आनैश्वर्यम् । ब्राह्मणादित्वात्तत्पुरुषात्ष्यञ् । न नञ्पूर्वात्तत्पुरुषादिति निषेधस्तु न । तत्र तत्पुरुषस्यैव पाठसामर्थ्यात् । अक्षेत्रज्ञम् । आक्षेत्रज्ञम् । पूर्ववदण् । भावार्थको युवाद्यण् तु न तत्र क्षेत्रज्ञस्यैव पाठेन तदन्तविधेरभावात् भावार्थकाणन्तेन नञ्समासे तु अक्षेत्रज्ञमित्येव । एवं कुशलनिपुणयोरपि युवाद्यणि ब्राह्मणादित्वाष्ष्यञि च क्षेत्रज्ञस्यापि ब्राह्मणादित्वात्ष्यञि च बोध्यम् । अक्षेत्रज्ञस्तत्पुरुषो ब्राह्मणादिरिति वृत्त्यादिमते । तस्मात्तत्पुरुषाद्ब्राह्मणादित्वात्ष्यञ् वा तदा उदाहरणे यकारोऽपि बोध्यः । अकौशलम् । आकौशलम् । अनैपुणम् । आनैपुणम् । पूर्ववदण् । एते सर्वे शुच्यादिप्रकृतिकभावार्थकप्रत्ययान्तैरेव नञ्समासाः । वचनसामर्थ्यादनङ्गस्यापि वृद्धिरिति मतं वृत्तिपदमञ्जर्यादिविरोधादुपेक्ष्यम् ।

## यथातथयथापुरयोः पर्यायेण । ७ । ३ । ३१ ॥

नञः परयोरेतयोः पूर्वोत्तरपदयोः पर्यायेणादेरचो वृद्धिर्ञिदादौ । आयथातथ्यम् । अयाथातथ्यम् । आयथापुर्यम् । अयाथापुर्यम् । अयथातथ अयथापुर इति नञ्समासौ ब्राह्मणादिषु द्रष्टव्यौ । प्रत्ययान्तरन्त्वाभ्यां नैवानभिधानात् । यथातथयथापुरशब्दौ तु पदार्थानतिवृत्तावव्ययीभावौ । तत्र च नपुंसकह्रस्वः कृतः तथाभावमनतिक्रान्तं यथातथं सत्यमुच्यते । यद्वस्तु पुरा यथाभूतं तदद्यापि तथाभावमनतिक्रान्तं यथापुरमुच्यते । भाष्ये तु अयथातथाभाव इति विग्रहदर्शनात्सुप्सुपेति समासो लक्ष्यते । यथातथेत्ययं विशिष्टो निपातोऽविपरीतार्थवृत्तिरिति केचिदाहुः । एवं चास्मिन्पक्षद्वये सूत्रे दीर्घान्तपाठः ॥

हनस्तोऽचिण्णलोः । ७ । ३ । ३२ ॥

हन्तेस्तकारोऽन्तादेशः स्या च्चिण्णल्वर्जे ञिति णिति । घातो घातकः । अचिण्णलोः किम् । अघानि । जघान ॥

आतो युक् चिण्कृतोः । ७ ३ । ३३ ॥

आदन्तानां युगागमः स्याच्चिणि ञ्णिति कृति च अदायि । दायो दायकः । दरिद्रायकः । चिण्कृतोः किम् । ददौ । दा देवतास्य दः । ञ्णिति किम् । गोदः ।

नोदात्तोपदेशस्य मान्तस्यानाचमेः । ७ । ३ । ३४ ॥

उपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अशमि । अदमि । शमो दमः । शमकः । दमकः । उदात्तोपदेशस्येति किम् । अगामि । यामको रामकः । कथमुद्यमोपरमौ । संज्ञापूर्वकत्वा-द्वृद्ध्यभावात् । विश्रम इति त्वपाणिनीयम् । उपदेशग्रहणं किम् । शमी दमी इत्यत्र यथा स्यात् इह च मा भूत् यामको रामकः । मान्तस्य किम् । अवादि । अनाचमेः किम् । आचामि । आचामः । अनाचमिकमिवमीनामिति वक्तव्यम् । अकामि । अवामि । कामः । वामः । आमस्तु अमरोगे इति चुरादिरायन्तस्य बोध्यः । तच्चामि-त्वात् । चिण्कृतोः किम् । शशाम ।

जनिवध्योश्च । ७ । ३ । ३५ ॥

अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि । प्रजनः । जनकः । वध हिंसायाम् । हलन्तः । अवधि । वधो वधकः । चिण्कृतोः किम् । जजान ॥

## अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ । ७ । ३ । ३६ ॥

एषां पुक् स्याण्णौ । अर्पयति । ह्रेपयति । व्लेपयति । रेपयति । यलोपः । क्नोपयति । क्ष्मापयति । स्थापयति । दापयति । अदीदपत् ।

## शाच्छासाह्वाव्यावेपां युक् । ७ । ३ । ३७ ॥

णौ परे । पुकोऽपवादः । शाययति । छाययति । साययति । ह्वाययति । व्याययति । वाययति । पाययति । पातेर्णौ लुग्वक्तव्यः । पुकोऽपवादः । पालयति । धूञ्प्रीञोर्नुग्वक्तव्यः । धूनयति । केचित्तु धूञ्प्रीणोरिति पठित्वा प्रीणातिसाहचर्याद्धुनातेरेव नुकमाहुः । तन्मते तदन्यस्य धावयति । अयमाधृषीयः स्वादौ क्र्यादौ तुदादौ च । स्वादौ ह्रस्वश्च तथा च कविरहस्ये ॥

धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ।

वायुर्विधूनयति चम्पकपुष्परेणून्यत्कानने धवति चन्दनमञ्जरीश्च ।

प्रीणयति । धूञ्प्रीणोरिति हरदत्तोक्तपाठे तु प्रीणात्यन्यस्याधृषीयस्य प्राययति ॥

## वो विधूनने जुक् । ७ । ३ । ३८ ॥

जुक् स्याण्णौ कम्पेऽर्थे । वाजयति । कम्पे किम् । केशान्वापयति ॥

## लीलोर्नुग्लुकावन्यतरस्यां स्नेहवि-पातने । ७ । ३ ३९ ॥

लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ स्तो वा णौ स्नेहद्रवे । विलीनयति । विलापयति । विलालयति । विलापयति वा घृतम् । ली ई इति ईकारप्रश्लेषादात्वपक्षे नुग्न । स्नेहद्रवे किम् । लोहं विलापयति विलाययति ॥

## भियो हेतुभये षुक् । ७ । ३ । ४० ॥

भी ई इतीकारः प्रश्लिष्यते । ईकारान्तस्य भियः षुक् स्याण्णौ हेतुभये । भीषयते । ईकारान्तस्य किम् । मुण्डो भापयते । हेतुभये किम् । कुञ्चिकयैनं भाययति ॥

## स्फायो वः । ७ । ३ । ४१ ॥

णौ । स्फावयति ॥

## शदेरगतौ तः । ७ । ३ । ४२ ॥

शदेर्णौ तान्तादेशः स्यान्न तु गतौ । शातयति । गतौ तु गाः शादयति गोविन्दः । गमयतीत्यर्थः ॥

## रुहः पोऽन्यतरस्याम् ॥ ७ । ३ । ४३ ॥

णौ । रोपयति । रोहयति । अयं योगः शक्यो ऽव-क्तुम् । रुप लुप विमोहने इति दैवादिकस्य रोपयतीति रुहेश्च रोहयतीति च सिद्धेर्धातूनामनेकार्थत्वान्नार्थासङ्गतिरिति पदम-ञ्जर्यां स्पष्टम् ॥

## प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः । ७ । ३ । ४४ ॥

प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारः स्यादापि परे स आप्सुपः परो न चेत् ॥ सर्विका । कारिका । अतः किम् । नौका । प्रत्ययस्थात्किम् । शक्नोतीति शका । असुपः किम् । बहुपरिव्राजका नगरी । कात्किम् । नन्दना । पूर्वस्य किम् । परस्य मा भूत् । कटुका । तपरः किम् । राका । आपि किम् । कारकः ॥ मामकनरकयोरुपसङ्ख्यानम् । मामिका । नरान्कायतीति नरिका त्यक्त्यपोश्च । दाक्षिणात्यिका । इहत्यिका ॥

## न यासयोः । ७ । ३ । ४५ ॥

यत्तदोरस्येन्न स्यात् । यका । सका । यकाम् । तकाम् । त्यकनश्च निषेधः । उपत्यका । अधित्यका । पावकादीनां छन्दस्युपसंख्यानम् । हिरण्यवर्णाः शुचयः पावकाः । अलोमकाः । छन्दसि किम् । पाविका । अलोमिका । आशिषि वुनश्च न ॥ * ॥ जीवका । भवका ॥ उत्तरपदलोपे च न ॥ * ॥ देवदत्तिका देवका । क्षिपकादीनां च ॥ * ॥ क्षिपका । ध्रुवका । कन्यका । चटका । तारका ज्योतिषि । अन्यत्र तारिका । वर्णका तान्तवे ॥ * ॥ अन्यत्र वर्णिका । वर्तका शकुनौ प्राचाम् ॥ * ॥ उदीचां तु वर्तिका । अष्टका पितृदेवत्ये । अष्टिकान्या ॥ सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम् ॥ * ॥ इह वा अ इति छेदः । कात्पूर्वस्याकारादेशो वेत्यर्थः । तेन पुत्रिकाशब्दे ङीन इवर्णस्य पक्षे अकारः । अन्यत्रेत्त्वबाधनार्थमकारस्यैव पक्षे ऽकारः । सूतका सूतिकेत्यादि ॥

## उदीचामातः स्थाने यकपूर्वायाः । ७ । ३ । ४६ ॥

यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्व-

स्यद्वा स्यात् आपि परे । केण इति ह्रस्वः । आर्यका । आर्यिका । चटकका । चटकिका । आनः किम् । सांकाश्ये भवा सांकाश्यिका । यकेति । किम् । अश्विका । स्त्रीप्रत्ययः किम् । शुभंयिका । धात्वन्तयकोस्तु नित्यम् ॥ * ॥ सुनयिका । सुपाकिका ॥

**भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि । ७ । ३ । ४७ ॥**

स्वेत्यन्तं लुप्तषष्ठीकं पदम् । एषामत इद्वा स्यात् । तदन्तविधिनैव सिद्धे नञ्पूर्वाणामपीति स्पष्टार्थम् । भस्त्राग्रहणमुपसर्जनार्थम् । अन्यस्य तूत्तरसूत्रेण सिद्धम् । एषा द्वा एतयोस्तु सपूर्वयोर्नेत्वम् । अन्तर्वर्तिनीं विभक्तिमाश्रित्यासुप इति प्रतिषेधात् । अनेषका । परमैषका । अद्वके । परमद्वके । स्वशब्दग्रहणं संज्ञोपसर्जनार्थम् । इह हि आतः स्थाने इत्यनुवृत्तं स्वशब्दस्याते विशेषणं न तु द्वैषयोरसम्भवात् । नाप्यन्येषामव्यभिचारात् । स्वशब्दस्त्वनुपसर्जनमात्मीयवाची अकजर्हः । अर्थान्तरे तु न स्त्री संज्ञोपसर्जनीभूतस्तु कप्रत्ययन्तत्वाद्वत्युदाहरणम् । एवं चात्मीयायां स्विका परमस्विकेति नित्यमेवेत्वम् । निर्भस्त्रका । निर्भस्त्रिका । एषका । एषिका । कृतषत्वनिर्देशान्नेह विकल्पः । एतिके । एतिकाः । अजका । अजिका । ज्ञका । ज्ञिका । द्वके । द्विके । निःस्वका । निःस्विका ॥

**अभाषितपुंस्काच्च । ७ । ३ । ४८ ॥**

एतस्माद्विहितस्यातः स्थानेऽत इद्वा स्यात् । गङ्गका । गङ्गिका । बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य नित्यम् । अज्ञाता अखट्वा अखट्विका । शैषिके कपि तु विकल्प एव ॥

## आदाचार्याणाम्। ७। ३। ४९॥

पूर्वसूत्रविषये आद्वा स्यात्। गङ्गाका। उक्तपुंस्कात्तु शुभ्रिका॥

## ठस्येकः। ७। ३। ५०॥

अङ्गात्परस्य ठस्येकादेशः स्यात्। रैवतिकः। रेवत्यादिभ्यष्ठक्॥

## इसुसुक्तान्तात्कः। ७। ३। ५१॥

इस् उस् उक् त् एतदन्तात्परस्य ठस्य कः स्यात्॥ सार्पिष्कः। तदस्य पण्यमिति ठक्। धानुष्कः। प्रहरणमिति ठक्। नैषादकर्षुकः। शाम्बरजम्बुकः। आर्दीशे ठञ्। केशः। मातृकम्। स्तनन्तुञ्। औदश्वित्कम्। उदश्वितोऽन्यतरस्यामिति ठक्। इसुसोः प्रतिपदोक्तयोर्ग्रहणान्नेह। आशिषा चरति आशिषिकः। उषा चरति औषिकः॥ दोष उपसंख्यानम्॥ * ॥ दोर्भ्यां चरति दौष्कः।

## चजोः कु घिण्ण्यतोः। ७। ३। ५२॥

चस्य जस्य च कुत्वं स्याद्घिति ण्यति च परे॥ पाकः। त्यागः। रागः। वाक्यम्॥ भोग्यम्॥

## न्यङ्क्वादीनां च। ७। ३। ५३॥

कुत्वं स्यात्॥ न्यङ्कुः। नावक्षुदः। मद्गुः। मिमस्जिभ्य उरित्युः। जश्त्वेन सस्य दः॥

## हो हन्तेर्ञ्णिन्नेषु। ७। ३। ५४॥

ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हस्य कुत्वं

स्यात् । घातः । घातकः । घ्नन्ति । नकारे परे कुत्वविधिसामर्थ्या-
दल्लोपो न स्थानिवत् ॥

## अभ्यासाच्च । ७ । ३ । ५५ ॥

अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ । जिघांसति । हन्तेर्यङ्लुकि अभ्यासाच्चेति कुत्वं यद्यपि हो हन्ते-रित्यनुवर्त्य विहितं तथापि यङ्लुकि भवत्येवेति न्यासकारादयः । श्तिपा शपेति निषेधस्त्वनित्यः । गुणो यङ्लुकोरिति सामान्यापेक्ष-ज्ञापकादिति भावः । जङ्घनीति । आङ्पूर्वात्तु आङो यमहन इत्यात्मनेपदम् । आजङ्घते इत्यादि । इदं चाभ्यासाङ्गनिमित्त प्रत्ययैक्ये एव । तेन हननीयितुमिच्छति जिहननीयिषतीत्यादौ न ॥

## हेरचङि । ७ । ३ । ५६ ॥

अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि । जिघाय । जिघीषति । जेघायते । अचङि किम् । अजीहयत् । एतदेव हि ज्ञापयति चङोऽन्यत्र ण्यन्तेपि कुत्वं भवतीति । तेन प्रजिघाययिषतीति सिद्धम् ॥

## सन्लिटोर्जेः । ७ । ३ । ५७ ॥

जयतेः सन्लिण्निमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात् । जिगीषति । जिगाय । सन्लिटोः किम् । जीयते । यदि च सनि लिटि च परत इति व्याख्यायेत । तदा यङ्लुगन्तात्सनि कुत्वं स्यात् ॥

## विभाषा चेः । ७ । ३ । ५८ ॥

अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिटि च ॥ चिकीषति । चिचीषति । चिकाय । चिचाय । सन्लिटोः किम् । चेचीयते ॥

## न क्वादेः । ७ । ३ । ५९ ॥

क्वादेर्धातोश्च जोः कुत्वं न । गर्ज्यम् । वार्तिककारस्तु चजोरिति सूत्रे निष्ठायामनिट इति पूरयित्वा न क्वादेरित्यादि प्रत्याचख्यौ । तेन अर्जितर्जिप्रभृतीनां न कुत्वम् । निष्ठायां सेट्त्वात् । शुचुप्रभृतीनां तु क्वादित्वेपि कुत्वं स्यादेव । सूत्रमते तु यद्यपि विपरीतं प्राप्तं तथापि यथोत्तरं मुनीनां प्रामाण्यम् ॥

## अजिव्रज्योश्च । ७ । ३ । ६० ॥

न कुत्वम् ॥ समाजः । परिव्राजः । परिव्राज्यम् ॥

## भुजन्युब्जौ पाण्युपतापयोः । ७ । ३ । ६१ ॥

एतयोरेतौ निपातौ । भुज्यतेऽनेनेति भुजः पाणिः । हलश्चेति घञ् । न्युब्जन्त्यस्मिन्निति न्युब्जः । उपतापो रोगः । पाण्युपतापयोः किम् । भोगः । समुद्गः ॥

## प्रयाजानुयाजौ यज्ञाङ्गे । ७ । ३ । ६२ ॥

एतौ निपात्येते यज्ञाङ्गे । पञ्च प्रयाजाः । त्रयोऽनुयाजाः । यज्ञाङ्गे । किम् । प्रयागः । अनुयागः ॥

## वञ्चेर्गतौ । ७ । ३ । ६३ ॥

कुत्वं न । वञ्च्यम् । गतौ किम् । वङ्क्यं काष्ठम् । कुटिलीकृतमित्यर्थः ॥

**ओक उचः के । ७ । ३ । ६४ ॥**

उचेर्गुणकुत्वे निपात्येते के परे । ओकः शकुन्तवृषलौ । इगुपधलक्षणः कः । घञा सिद्धे अन्तोदात्तार्थमिदम् ॥

**ण्य आवश्यके । ७ । ३ । ६५ ॥**

कुत्वं न । अवश्यपाच्यम् ॥

**यजयाचरुचप्रवचर्चश्च । ७ । ३ । ६६ ॥**

ण्ये कुत्वं न । याज्यम् । याच्यम् । रोच्यम् । प्रवाच्यम् । ग्रन्थविशेषः । ऋच अर्च्यम् । ऋदुपधत्वेऽप्यत एव ज्ञापकाराण्यत् । त्यजेश्च ॥ * ॥ त्याज्यम् । त्यजिपूज्योश्चेति काशिका । तत्र पूजे-र्ग्रहणं चिन्त्यम् । भाष्यानुक्तत्वात् । ण्यत्प्रकरणे त्यजेरुपसंख्या-नमिति हि भाष्यम् । पूज्यमिति तु चुरादिण्यन्तस्य पूजे रूपम् ॥

**वचोऽशब्दसंज्ञायाम् । ७ । ३ । ६७ ॥**

वच्यम् । शब्दाख्यायां तु वाक्यम् ॥

**प्रयोज्यनियोज्यौ शक्यार्थे । ७ । ३ । ६८ ॥**

प्रयोक्तुं शक्यः प्रयोज्यो भृत्यः ॥

**भोज्यं भक्ष्ये । ७ । ३ । ६९ ॥**

भोग्यमन्यत् ॥

**घोर्लोपो लेटि वा । ७ । ३ । ७० ॥**

दधद्रत्नानि दाशुषे । सोमो ददद्गन्धर्वाय । यदग्निरग्नये ददात् । लोपपक्षे आटा सिद्धेर्वेति स्पष्टार्थम् ॥

## ओतः श्यनि । ७ । ३ । ७१ ॥

लोपः स्यात् । श्यति । छ्यति । स्यति । द्यति ॥

## क्सस्याचि । ७ । ३ । ७२ ॥

उत्तरसूत्रादात्मनेपदे इत्यपकृष्यते । अजादौ तङि क्सस्य लोपः स्यात् । अलोन्त्यस्य । अधुक्षाताम् । अधुक्षाथाम् । अधुक्षि । अचि किम् । अधुक्षत । अधुक्षन्त । झावस्थायां लोपाभावेनादादेशो न । तङि किम् । तादक्षानित्यादौ मा भूत् ॥

## लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये । ७ । ३ । ७३ ॥

एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । अदुग्ध । अधुक्षत । अदुग्धाः । अधुक्षथाः । अधुग्ध्वम् । अधुक्षध्वम् । अदुह्वहि । अधुक्षावहि । अदिग्ध । अधिक्षत । अलीढ अलिक्षत । अगूढ अघुक्षत । दुहादीनां किम् । गृहू ग्रहणे । अघृक्षत । तङि किम् । अधुक्षत् । दन्त्ये किम् । अधुक्षामहि । लुग्ग्रहणं किम् । अदुह्वहि अन्त्यस्य लोपो मा भूत् ॥

## शमामष्टानां दीर्घः श्यनि । ७ । ३ । ७४ ॥

शमादीनामित्यर्थः । शाम्यति । ताम्यति । दाम्यति । श्राम्यति । भ्राम्यति । क्षाम्यति । क्लाम्यति । शपीव श्यन्यपि ष्ठिवुक्लम्वित्येव दीर्घे सिद्धे शमादिपाठो घिनुणर्थः । माद्यति । अष्टानां किम् । अस्यति । श्यनि किम् । शमति ॥

## ष्ठिवुक्लमुचमां शिति । ७ । ३ । ७५ ॥

एषामचो दीर्घः स्याच्छिति परे । ष्ठीवति । केचिद्द्विवादावपीमं पठन्ति । ष्ठीव्यति । ष्ठीवनमिति । तथा च चान्द्रसूत्रम् । ष्ठिवुसिवो

दीर्घश्चेति । पचो पृषोदरादित्वाद्दीर्घः तेन ष्ठेनमपि । क्रामति । दीर्घत्वमाङि चम इति वक्तव्यम् ॥ * ॥ आचामति । आङि किम् । चमति । विचमति ॥

### क्रमः परस्मैपदेषु । ७ । ३ । ७६ ॥

क्रमेर्दीर्घः स्यात्परस्मैपदे परे शिति । क्राम्यति । क्रामति । उत्क्राम । सङ्क्राम । न लुमतेति निषेधस्त्विह न । लुप्प्रत्ययनिरूपिताङ्गोद्देश्यककार्ये एव तत्प्रवृत्तेः । परस्मैपदेषु किम् । आक्रमते सूर्यः ॥

### इषुगमियमां छः । ७ । ३ । ७७ ॥

एषां छः स्याच्छिति परे । इच्छति । गच्छति । यच्छति । इषेरुदितो ग्रहणमुदितस्तौदादिकस्यैव ग्रहणार्थम् । तेनेह न । इष्यति । इष्णाति । इषाण । हलः श्नः शानज्झौ ॥

### पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । ७ । ३ । ७८ ॥

शितीति कर्मधारयः । पादीनां पिबादयः स्युरित्सञ्ज्ञकशकारादौ प्रत्यये परे ॥ पिबति । अदन्त आद्युदात्तोऽयं निपात्यते । तेन लघूपधगुणो न । आद्युदात्तत्वं च सिध्यति । जिघ्रति । धमति । तिष्ठति । मनति । प्रणियच्छति । पश्यति । ऋच्छति । धावति । शीघ्रगतावेवेममिच्छन्ति । अन्यत्र । सरति । शीयते । सीदति । इत्संज्ञकशकारादावित्युक्तेनेह । पपे । बहुव्रीहौ तु स्यादेव

दोषः । अत एवार्तिसर्त्योर्जीहोत्यादिकयोर्नेह ग्रहणम् । शपः श्लुनापहारात् । श्यनश्शः सम्भवेऽपि शकारादित्वाभावात् ॥

**ज्ञाजनोर्जा । ७ । ३ । ७९ ॥**

अनयोर्जादेशः स्याच्छिति । जानाति । जायते ॥

**प्वादीनां ह्रस्वः । ७ । ३ । ८० ॥**

शिति परे । प्वादयः क्र्यादिषु पठ्यन्ते । पूञ् पवने इत्यतः प्रभृति प्ली गतौ वृत्त इति यावत् । वृत्करणं ल्वादयो वृत्ता इत्यर्थकम् । प्वादयोपीत्येके । पुनाति । लुनाति । लुनीते । स्तृणाति स्तृणीते इत्यादि । व्री वरणे भ्री भये । भरणे इत्येके । क्षीष् हिंसायाम् । एषां त्रयाणां ह्रस्वः । केचिन्मते तु जानातीत्यत्र दीर्घनिर्देशसामर्थ्यान्न ह्रस्वः ॥

**मीनातेर्निगमे । ७ । ३ । ८१ ॥**

शिति ह्रस्वः । प्रमिणन्ति व्रतानि ॥ लोके प्रमीणाति ॥

**मिदेर्गुणः । ७ । ३ । ८२ ॥**

मिदेरिको गुणः स्यादित्संज्ञकशकारादौ । मेद्यति । मेद्यतः । मेद्यन्ति । इह आदिशित्वाभावान्नानेन गुणः । मिमिदे ॥

**जुसि च । ७ । ३ । ८३ ॥**

क्सस्याचीत्यतोऽचीत्यनुवर्तते । अजादौ जुसीगन्ताङ्गस्य गुणः स्यात् । अजुहवुः । अबिभयुः । अबिभरुः । अजागरुः । अजादौ किम् । जागृयुः । चिनुयुः । शृणुयुः । केचित्तु नाप्राप्तसार्वधातुकाश्रयङित्त्वप्रयुक्तनिषेधस्यैवापवादोयं गुणः । न तु प्राप्ताप्राप्तयासुडाश्रयङित्त्वप्रयुक्तनिषेधस्येत्याहुः ॥

## सार्वधातुकार्धधातुकयोः । ७ । ३ । ८४ ॥

अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । भवति । भविष्यति । अनयोः किम् । अग्निकाम्यति ॥

## जाग्रोऽविचिण्णल्ङित्सु । ७ । ३ । ८५ ॥

जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योन्यस्मिन्वृद्धिविषये प्रतिषेधविषये च ॥ जागरयति । जागरकः । साधुजागरी । जागर जागरम् । जागरो वर्तते । जागरितः । जागरितवान् । जजागरतुः । जागर्यात् । अविचिण्णल्ङित्सु किम् । जागृविः । जॄशॄस्तृजागृभ्यः क्विन् । अजागारि । जजागार । जागृतः । जागृथः । त्वे रयिं जागृवांसो अनुग्मन् इत्यत्र तु असंयोगाल्लिट् किदिति सिद्धे कित्वं क्वसोः कित्वप्रतिषेधविषयस्यापि गुणस्य प्रतिषेधार्थमित्याहुः ॥ ननु जागरयतीत्यादौ गुणे कृते उपधावृद्धिः कस्मान्न वृद्धिविषये गुणविधानसामर्थ्यादिति चेन्न । ह्यन्तेति सूत्रे जागृग्रहणवैयर्थ्यापत्तेरजागरीदित्यत्रापि हि त्वदुक्तरीत्या वृद्ध्यप्राप्तेः । अत्राहुः वृद्धिविषये गुणविधानसामर्थ्येनोपधावृद्धेरेवाभावः कल्प्यते न तु वृद्धिमात्रस्य चिण्णल्प्रतिषेधस्य सजातीयापेक्षत्वापकत्वादिति ॥

## पुगन्तलघूपधस्य च । ७ । ३ । ८६ ॥

पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात्सार्वधातुकार्धधातुकयोः ॥ ह्रेपयति । क्नोपयति । भेदनम् । छेदनम् । कथं भेत्ता भेत्स्यति । क्नोः कित्करणसामर्थ्येन भूतपूर्वलघूपधग्रहणात् । कुण्डिता हुण्डितेत्यादौ तु धातूपदेशावस्थायामेव नुम्प्रवृत्तेर्लघु-

त्वांशे भूतपूर्वगतिस्वीकारेऽपि उपधात्वांशेऽपि भूतपूर्वगतिस्वीकारे मानाभावात्तु न दोषः । येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् । तेन भिनत्तीत्यादावनेकव्यवहितस्येको न गुणः ॥

## नाभ्यस्तस्याचि पिति सार्वधातुके । ७ । ३ । ८७ ॥

लघूपधगुणो न स्यात् । नेनिजानि । अनेनिजम् । वेविजानि । अवेविजम् । वेविषाणि । अवेविषम् । वर्वृतीति । अभ्यस्तस्य किम् । वेदानि । अचि किम् । नेनेक्ति । पितीत्युत्तरार्थम् । सार्वधातुके किम् । निनेज । जुहवानि । अजुहवम् । योयवीति रोरवीत्यादाविगन्तस्य तु भवत्येव गुणः ॥ बहुलं छन्दसीति वक्तव्यम् ॥*॥ यस्त आनिट्यमानुषक् जुजोषत् । जुषी प्रीतिसेवनयोः । लेट् व्यत्ययेन परस्मैपदम् । तिप् इतश्च लोपः परस्मैपदेष्वितीकारलोपः । लेटोऽडाटावित्यट् । व्यत्ययेन शपः श्लुर्द्विर्वचनं गुणः ॥

## भूसुवोस्तिङि । ७ । ३ । ८८ ॥

भू सु एतयोः सार्वधातुके तिङि गुणो न स्यात् । अभूत् । अभूः । सुवै । सुवावहै । तिङि किम् । भवति । सार्वधातुके किम् । व्यतिभविषीष्ट । सविषीष्ट । सोषीष्ट । भूसुवोरिति गुणनिषेधो बोभवीति बोभोति सोषवीति सोषोतीत्यादौ यङ्लुकि भाषायां न । बोभूतु तेतिक्ते इति छन्दसि निपातनात् । अत एव यङ्लुग्भाषायामपि सिद्धः । न च यङ्लुकि अप्राप्त एव गुणाभावो निपात्यतामिति वाच्यम् । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणात् । द्विःप्रयोगो द्विर्वचनं षाष्ठमिति सिद्धान्तात् ॥

## उतो वृद्धिर्लुकि हलि । ७ । ३ । ८९ ॥

लुग्विषये उकारस्य वृद्धिः स्यात् पिति हलादौ सार्व-धातुके नत्वभ्यस्तस्य । यौति । यौषि । यौमि । नौति । स्तौति । स्नौति । क्ष्णौति । उतः किम् । एति । लुकि किम् । सुनोति । हलि किम् । यवानि । पिति किम् । युतः । इह उतो वृद्धिर्न । युयात् । भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात् । विशेषविहि-तेन ङित्वेन पित्वस्य बाधात् । नाभ्यस्तस्येत्यनुवृत्तेर्नेह । योयोति । योयवीति ॥

## ऊर्णोतेर्विभाषा । ७ । ३ । ९० ॥

वृद्धिर्वा स्याद्धलादौ पिति सार्वधातुके । ऊर्णौति । ऊर्णोति । नेह । ऊर्णवानि । ऊर्णुतः । ऊर्णुयात् । ऊर्णूयात् ॥

## गुणोऽपृक्ते । ७ । ३ । ९१ ॥

ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्य-पवादः । और्णोत् । और्णोः । हलीति वर्तमानेपि यदपृक्तग्रहणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा यस्मिन्विधिस्त-दादावल्ग्रहण इतीति वृत्तिः ॥

## तृणह इम् । ७ । ३ । ९२ ॥

तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि । तृणेक्षि । तृणेह्मि । अतृणेट् । नेह तृणहानि । तृण्ढः । येन नाप्रा-प्तिन्यायेनेम् श्नमो बाधको मा भूदिति सश्नम्को निर्देशः ॥

## ब्रुव ईट् । ७ । ३ । ९३ ॥

ब्रुवः परस्य हलादेः पित ईट् स्यात् ॥ ब्रवीति । ब्रवीषि । ब्रवीमि । नेह ब्रवाणि । ब्रूतः । ब्रूयात् । सार्वधातुकस्येत्येव । उच्यात् । आत्थेत्यत्र स्थानिवद्भावात्प्राप्तं प्रब्रवीति यत्नविधानान्न भवति ॥

## यङो वा । ७ । ३ । ९४ ॥

यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड् वा स्यात् ॥ बोभवीति । बोभोति । नेह । बोभवानि । बोभूतः । बोभूयात् ॥

## तुरुस्तुशम्यमः सार्वधातुके । ७ । ३ । ९५ ॥

एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईट् वा स्यात् ॥ नाभ्यस्तस्येत्यतोऽनुवृत्तिसम्भवे पुनः सार्वधातुकग्रहणमपिदर्थम् । तु इति सौत्रो धातुः गतिवृद्धिहिंसासु । अयं च लुग्विकरण इति स्मरन्ति । तवीति । तौति । तुवीतः । तुतः । रवीति । रौति । रुवीतः । रुतः । स्तवीति । स्तौति । स्तुवीते । स्तुते । अधिगे शमीध्वम् । अभ्यमीति । अभ्यन्ति । शम्यमोर्बहुलं छन्दसीति विकरणस्य लुक् । शमेरन्तर्भावितण्यर्थात्प्रैषे लोट् । व्यत्ययेनात्मनेपदम् । आपिशलास्तु तुरुस्तुशम्यमः सार्वधातुके छन्दसीति पठन्ति ॥ हलादेः किम् । रुवन्ति । तिङः किम् । शाम्यति । सार्वधातुके किम् । आशिषि स्तूयात् । विध्यादौ तु रुयात् । रुवीयात् ॥

## अस्तिसिचोऽपृक्ते । ७ । ३ । ९६ ॥

सिच् अस् चेति समाहारद्वन्द्वः ॥ सिच्छब्दस्य सौत्रं भत्वम् ।

अस्तीत्यव्ययेन कर्मधारयः । ततः पञ्चम्याः सोर्लुक् । विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यात् ॥ अकार्षीत् । अकार्षीः । अलावीत् । अलावीः । आसीत् । आसीः । इह त्वीरान । अभूत् । सिचो लुप्तत्वात् । अस्तेश्च भूभावेनापहारात् । तयोश्च विद्यमानत्वेन विशेषणात् । हलः किम् । येषिषि । अपृक्ते किम् । येषिष्ट ॥

**बहुलं छन्दसि । ७ । ३ । ९७ ॥**

सर्वमा इदम् ॥

**रुदश्च पञ्चभ्यः । ७ । ३ । ९८ ॥**

हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात् ॥

**अड् गार्ग्यगालवयोः । ७ । ३ । ९९ ॥**

अरोदीत् । अरोदत् । अस्वपीत् ॥ अस्वपत् । अस्वपीः । अस्वपः । अश्वसीत् । अश्वसः । प्राणीत् । प्राणः । अजक्षीत् । अजक्षत् । अजक्षीः । अजक्षः । अग्रमन्तस्यादिरित्युज्ज्वलदत्तो बभ्राम । प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वादिह यासुट् । स्यात् । पञ्चभ्यः किम् । अजागर्भवान् । गणनिर्दिष्टत्वान्नेह । अपास्वप् । यङ्लोवेतीटि तु अपास्वपीदिति भवति ॥

**अदः सर्वेषाम् । ७ । ३ । १०० ॥**

अदः परस्यापृक्तसार्वधातुकस्याडागमः स्यात्सर्वेषां मतेन ॥ आदत् । आदः । अपृक्तस्य किम् । अत्ति ।

**अतो दीर्घो यञि । ७ । ३ । १०१ ॥**

अतोऽङ्गस्य दीर्घः स्याद्यञादौ सार्वधातुके परे। भवामि। भवावः। भवामः। भविष्यामि। भविष्यावः। भविष्यामः। अतः किम्। चिनुवः। चिनुमः। यञि किम्। पचतः। सार्वधातुके किम्। अङ्गना। केशवः। अत आदिति वक्तव्ये दीर्घग्रहणं दीर्घ एव यथा स्यात्। अनन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतो मा भूत्। अपाक्षीरोदनं देवदत्त ननु पचामि भोः। केचिदत्र तिङीत्यनुवर्तयन्ति॥

सुपि च। ७। ३। १०२॥

यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्यात्। रामाभ्याम्। अतः किम्। अग्निभ्याम्। यञि किम्। वृक्षस्य।

बहुवचने झल्येत्। ७। ३। १०३॥

झलादौ बहुवचने सुपि परे अतोऽङ्गस्य एकारः स्यात्। रामेषु। रामेभ्यः। बहुवचने किम्। रामाभ्याम्। रामः। रामस्य। झलि किम्। रामाणाम्। सुपि किम्। पचध्वम्।

ओसि च। ७। ३। १०४॥

ओसि च परेऽतोऽङ्गस्यैकारः स्यात्। रामयोः। २॥

आङि चापः। ७। ३। १०५॥

आङिति टा संज्ञा प्राचाम्। आङि ओसि च परे आबन्तस्याङ्गस्यैकारः स्यात्॥ रमया। बहुराजया। कारीषगन्ध्यया। रमयोः। बहुराजयोः। कारीषगन्ध्ययोः।

संबुद्धौ च। ७। ३। १०६।

आप एकार: स्यात्सम्बुद्धौ । एङ्ह्रस्वादिति संबुद्धिलोप:
हे रमे । हे बहुराजे । हे कारीषगन्ध्ये ।

**अम्बार्थनद्योर्ह्रस्वः । ७ । ३ । १०७ ।**

अम्बार्थानां नद्यन्तानां च ह्रस्व: स्यात्सम्बुद्धौ । हे अम्ब
हे अक्क । हे अल्ल । हे कुमारि । हे गौरि । हे शार्ङ्गरवि । हे
बहुश्रेयसि । हे ब्रह्मबन्धु । हे अतिचमु । असंयुक्ता ये डलकास्त
द्वतां न ह्रस्व: । हे अम्बाडे । हे अम्बाले । हे अम्बिके ॥ मातुर्मा-
तच् पुत्रार्थमर्हते ॥ * ॥ मातृशब्दस्य मातजादेशो वक्तव्य: । ये
मातृशब्द: पुत्रार्थे पुत्रमभिधातुमुपादीयते । बहुव्रीहौ च वर्तिपदै-
रन्यपदार्थोऽभिधीयते इति तत्रैवायं संबुद्धौ मातजादेश: । गार्गी
माता यस्येति गार्गीमातृक: । तस्य संबोधनं हे गार्गीमात
नद्यृतश्चेति कप् येन नाप्राप्ते इति न्यायेन मातजा बाध्यते ।
चित्करणमन्तोदात्तार्थम् । य: पुत्र: श्लाघ्यगुणत्वात्कुलसंभूतया
मात्रा व्यपदेशमर्हति तत्र मातजादेशो नान्यत्र हे गार्गीमा-
तृक । अत्र स्वरूपकथनमात्रे तात्पर्यम् । पुत्रार्थमर्हते इत्यत्र
सापेक्षत्वेप्यत एव निपातनात्समास: ।

**ह्रस्वस्य गुणः । ७ । ३ । १०८ ।**

ह्रस्वस्य गुण: स्यात्सम्बुद्धौ । हे अग्ने । हे वायो । हे कुमारि ।
हे ब्रह्मबन्धु इत्येवमादीनां ह्रस्वविधानसामर्थ्यान्न गुण: । अन्य-
थाम्बार्थानां ह्रस्व: नदीह्रस्वयोर्गुण इत्येव सिद्धे: ।

**जसि च । ७ । ३ । १०९ ।**

ह्रस्वस्य गुणः स्याज्जसि परे । अग्नयः । वायवः ॥ जसा-दिषु छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः ॥ * ॥ अधा शत-क्रत्वो यूयम् । शतक्रतवः । पश्वे नृभ्यो यथा गवे । पशवे ।

## ऋतो ङिसर्वनामस्थानयोः । ७ । ३ । ११० ।

ङौ सर्वनामस्थाने च परे ऋदन्ताङ्गस्य गुणः स्यात् । मातरि । भ्रातरि । कर्तरि । नरि । गमलि ।शकलि । मातरौ । पितरौ भ्रातरौ । कर्तारौ । नरौ । गमलौ । शकलौ ॥

## घेर्ङिति । ७ । ३ । १११ ।

घिसंज्ञकस्य ङिति सुपि गुणः स्यात् । अग्नये । वायवे । अग्नेः । वायोः । घेः किम् । सख्ये । ङिति किम् । हरिभ्याम् । सुपि किम् । पट्वी । कुरुतः ।

## आण् नद्याः । ७ । ३ । ११२ ।

नद्यन्तात्परेषां ङितामाडागमः स्यात् । कुमार्यै । ब्रह्मबन्ध्वै । कुमार्याः । ब्रह्मबन्ध्वाः । इह परत्वादाटा नुट् बाध्यते । कुमा-र्याम् । ब्रह्मबन्ध्वाम् ।

## याडापः । ७ । ३ । ११३ ।

आपः परस्य ङिद्वचनस्य याडागमः स्यात् । रमायै बहु-राजायै । कारीषगन्ध्यायै । रमायाः । बहुराजायाः । कारीषगन्ध्यायाः । रमायाम् । बहुराजायाम् । कारीषगन्ध्यायाम् । अतिखट्वायेत्यत्र यथा न याट् भवति तथा जराया इति सूत्रेऽवोचाम ।

## सर्वनाम्नः स्याड् ढ्रस्वश्च । ७ । ३ । ११४ ।

आबन्तात्सर्वनाम्नः परस्य ङितः स्याडागमः स्यादापश्च ह्रस्वः । याटोऽपवादः सर्वस्यै । यस्यै । कस्यै । सर्वस्याः । यस्याः । कस्याः । सर्वस्याम् । यस्याम् । कस्याम् । आपः किम् । भवत्यै ।

## विभाषा द्वितीयातृतीयाभ्याम् । ७ । ३ । ११५ ।

आभ्यां परस्य ङितः स्याड् वापश्च ह्रस्वः । इदं सूत्रं त्यक्तुं शक्यम् । तीयस्य ङित्सूपसंख्यानात् । द्वितीयस्यै । द्वितीयायै । द्वितीयस्याः । द्वितीयायाः । द्वितीयस्याम् । द्वितीयायाम् । एवं तृतीयस्यै तृतीयायै ।

## ङेराम्नद्याम्नीभ्यः । ७ ३ । ११६ ।

नद्यन्तादाबन्तान्नीशब्दाच्च ङेराम् स्यात् । बहुश्रेयस्याम् । वध्वाम् । खट्वायाम् । नियाम् । उन्याम् । ग्रामण्याम् ।

## इदुद्भ्याम् । ७ । ३ । ११७ ।

नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात् । मत्याम् । धेन्वाम् ।

## औत् । ७ । ३ । ११८ ।

इदुद्भ्यामुत्तरस्य ङेरौत्स्यात् । उकारानुषङ्गनिवृत्त्यर्थः । सख्यौ । पत्यौ ।

## अच्च घेः । ७ । ३ । ११९ ।

इदुद्भ्यामुत्तरस्य ङेरौत्स्यात् घेरन्तादेशश्चाकारः । अग्नौ । वायौ । मतौ । धेनौ ।

## आङो नाऽस्त्रियाम् । ७ । ३ । १२० ।

घेः परस्याङो ना स्यादस्त्रियाम् । अग्निना । वायुना । अस्त्रियां किम् । मत्या । पुंसीति तु नोक्तम् । अमुना कुलेने-त्यसिद्धापत्तेरिति दिक् ।

इत्योरम्भट्टेन श्रीघोंडभट्टविश्वरूपात्मजेन वैजनाथभट्टविश्वरू-पापरनामधेयेन विरचितायां व्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ सप्तमाध्यायस्य तृतीयः पादः समाप्तः ।



## सप्तमाऽध्यायस्य चतुर्थः पादः ।



### णौ चङ्युपधाया ह्रस्वः । ७ । ४ । १ ।

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् । अचीकरत् । अजीहरत् । अलीलवत् । बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात्प्रागेव । ओणेरृदित्करणाल्लिङ्गात् । मा भवानिदिधत् मा भवानटिटत् । णौ किम् । अलीलवदित्यत्र वचनसामर्थ्यादन्तरङ्गावपि वृद्ध्यावौ बाधित्वा ह्रस्वः स्यात् । अदीदपदित्यत्र ह्रस्वेन पुको बाध एव स्यात् । अपीपचदित्यादौ तु नैव ह्रस्वः स्यात् । चङि किम् । कारयति । उपधायाः किम् । अचकाङ्क्षत् । इह तु वादितवन्तं प्रयोजितवानवीवदद्वीणां परिवादकेनेति णयन्ताण्णिचि पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णौ णिलोपे तस्य स्थानिवत्वादग्लोपित्वाद्वा ह्रस्वो न प्राप्नोति । णयाकृतिनिर्देशाद्भवति ।

### नाग्लोपिशास्वृदिताम् । ७ । ४ । २ ॥

णाव्ग्लोपिनः शास्तेरृदितांश्चोपधाया ह्रस्वो न स्याच्चङ्परे णौ ॥ मालामाख्यदममालत् । राजानमतिक्रान्तवानत्यरराजत् । लोमान्यनुमृष्टवानन्वलुलोमत् । स्वामिनमाख्यदसस्वामत् । गोमिनमाख्यदजुगोमत् । अशशासत् । बाधृ अबबाधत् । टुयाचृ अययाचत् । ढौकृ अडुढौकत् । लोकृ अलुलोकत् । ओणृ मा भवानोणणत् । णेरग्लोपेपि सम्बन्धस्त्वगितामपि सिद्धये । अचीकमत् ॥

## भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् । ७ । ४ । ३ ॥

एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ । अबिभ्रजत् । अबभ्राजत् । अबीभसत् । अबभासत् । अबीभषत् । अबभाषत् । अदीदिपत् । अदिदीपत् । अजीजिवत् । अजिजीवत् । अमीमिलत् । अमिमीलत् । अपीपिडत् । अपिपीडत् । भ्राजभासेत्युक्तं दित्करणमपाणिनीयमिति वृत्तिः ॥ काण्यादीनां वेति वक्तव्यम् ॥ ० ॥ णयन्ताः कणरणभणश्रणलुपहेठाः काण्यादयः षड् भाष्ये उक्ताः । हुलियवाणिलोठिलोचयश्चत्वारोऽधिकान्यासे । वाणिलोठी अप्यन्यत्र । इत्थं द्वादश । अचीकणत् । अचकाणत् ॥

## लोपः पिबतेरीच्चाभ्यासस्य । ७ । ४ । ४ ॥

पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ ॥ अपीप्यत् ॥

## तिष्ठतेरित् । ७ । ४ । ५ ॥

उपधाया इदादेशः स्यात् चङ्परे णौ ॥ अतिष्ठिपत् ॥

## जिघ्रतेर्वा । ७ । ४ । ६ ॥

उपधाया इत्वं वा स्याच्चङ्परे णौ ॥ अजिघ्रिपत् । अजिघ्रपत् ॥

## उर्ऋत् । ७ । ४ । ७ ॥

उपधाया ऋवर्णस्य स्थाने ऋद्वा स्याच्चङ्परे णौ ॥ इररारामपवादः । अचीकृतत् । अचिकीर्तत् । अवीवृतत् । अववर्तत् । अमीमृजत् । अममार्जत् । तपरत्वं दीर्घेऽपि स्थानिनि ह्रस्व एव

यथा स्यात् । अचीकृतदिति । न चाय माध्यमानः तपरत्वाभावे स्यादेशान्तरनिवृत्त्यर्थं स्वरूपमेवैतदभ्यनुज्ञायते कृते तु तपरत्वे भाव्यमानतापीत्यन्यत् ॥

नित्यं छन्दसि । ७ । ४ । ८ ॥

छन्दसि विषये णौ चङ्युपधाया ऋवर्णस्य ऋन्नित्यम् । अवीवृधत् ॥

दयतेर्दिगि लिटि । ७ । ४ । ९ ॥

दिग्यादेशेन द्वित्वबाधनमिष्यते इति वृत्तिः । दिग्ये । दिग्याते । दिग्यिरे । दयतेरिति देङ् रक्षणे इत्यस्य ग्रहणं न तु दय दानगतिरक्षणहिंसादानेष्वित्यस्य । तस्य हि लिट्याम् विहितः ।

ऋतश्च संयोगादेर्गुणः । ७ । ४ । १० ॥

ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि । किदर्थमपीदं परत्वाण्णल्यपि भवति । रपरत्वम् । उपधावृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । ऋतः किम् । चिक्षियतुः । संयोगादेः किम् । चक्रतुः । लिटि किम् । स्मृतः । स्मृतवान् । सञ्चस्करतुरित्यत्रापि यथा गुणस्तथा सुट्कात्पूर्वः अडभ्यासव्यवायेपीत्यत्रावोचाम ॥

ऋच्छत्यॄताम् । ७ । ४ । ११ ॥

तौदादिकऋच्छेर्ऋधातोॠताञ्च गुणः स्याल्लिटि ॥ आनर्छतुः । तात् प्रागुपधाया वृद्धिः । आर । आरतुः । आरुः । चकार । चकरतुः । जगार । जगरतुः ।

शृदॄप्रां ह्रस्वो वा । ७ । ४ । १२ ॥

ऋषां ह्रस्वो वा स्याल्लिटि । कित्त्वैवैतस्य फलम् । शश्रतुः । शशरतुः । दद्रतुः । ददरतुः । पप्रतुः । पपरतुः । ह्रस्ववचनमित्वनिवृत्त्यर्थम् । शशृवान् । दद्दृवान् । पपृवान् इति क्वसौ श्रवणार्थं च । गुणे एव विकल्पिते तु क्वसोः कित्वस्य प्रतिषेधविषयस्यापि गुणस्य प्रतिषेधार्थत्वस्योक्तत्वेन गुणे निषिद्धेऽपि दीर्घस्यैव श्रवणं प्रसज्येतेति दिक् ॥

## केऽणः । ७ । ४ । १३ ॥

के परेऽणो ह्रस्वः स्यात् । ज्ञका । कुमारिका । किशोरिका । अणः किम् । गोका । नौका ।

## न कपि । ७ । ४ । १४ ॥

कपि परे ह्रस्वो न स्यात् ॥ बहुकुमारीकः । बहुवधूकः । बहुलक्ष्मीकः । गोस्त्रियोरित्यपि ह्रस्वः कपि न भवति । अकृते एव समासे समासार्थलौकिकप्रक्रियावाक्ये एव कपः प्रवृत्त्या समासान्ता इति शास्त्रबलात् कबन्तस्यैव च समासत्वेन कपः प्राग्वर्तिभागस्योपसर्जनस्त्रीप्रत्ययांतसमासरूपप्रातिपदिकत्वाभावात् । अनेनैव तु न तस्यापि निषेधोऽनन्तरत्वात् । अन्यथा प्रियं ग्रामणि कुलमस्य प्रियग्रामणिक इत्यत्र ह्रस्वो नपुंसके इत्यस्यापि निषेधापत्तेः ॥

## आपोऽन्यतरस्याम् । ७ । ४ । १५ ॥

कपि आबन्तस्य ह्रस्वो वा स्यात् । बहुमालकः । बहुमालाकः ॥

ऋदृशोऽङि गुणः । ७ । ३ । १६ ॥

ऋवर्णान्तानां दृशेश्च गुणः स्यादङि । असरत् । अजरत् । जृष । जरा । अदर्शत् ॥

अस्यतेस्थुक् । ७ । ३ । १७ ॥

अङि परे । आस्थत् ।

श्वयतेरः । ७ । ३ । १८ ॥

श्वयतेरिकारस्याकारः स्यादङि । पररूपम् । अश्वत् ॥

पतः पुम् । ७ । ३ । १९ ॥

अङि परे । अपप्तत् ॥

वच उम् । ७ । ३ । २० ॥

अङि परे । अवोचत् । अवोचत ॥

शीङः सार्वधातुके गुणः । ७ । ३ । २१ ॥

क्ङिति चेत्यस्यापवादः । शेते । शयाते । शेरते । सार्वधातुके किम् । शिश्ये ॥

अयङ् यि क्ङिति । ७ । ३ । २२ ॥

शीङोऽयङादेशः स्याद्यादौ क्ङिति परे । शय्यते । शाशय्यते । प्रशय्य गतः । यीति किम् । शिश्ये । क्ङितीति किम् । शेयम् ।

उपसर्गाद् ह्रस्व ऊहतेः । ७ । ४ । २३ ॥

यादौ क्ङिति । समुह्यते । अभ्युह्यते । ब्रह्म समुह्यात् । अग्निं समुह्य । इह त्वेकादेशे कृते व्यपवर्गाभावान्न भवति । प्रोह्यते । उपोह्यते । इहाप्यण इत्यनुवृत्तेर्न भवति । आ ऊह्यते ।

ओह्यते । समोह्यते । उपसर्गात्किम् । ऊह्यते । अङ्गते: किम् । समीह्यते । यीति किम् । समूहितम् । क्ङितीति किम् । अभ्यूह्यो ऽयमर्थः ॥

एतेर्लिङि । ७ । ४ । २४ ।

उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यात् यादौ क्ङिति लिङि । निरियात् । आशीर्लिङि अकृत्सार्वेतिदीर्घे कृतेऽनेन ह्रस्वः । उभयत आश्रयणे नान्तादिवत् । अभीयात् । अणः किम् । समेयात् । समीयादिति प्रयोगस्तु मेवादिकस्य इट किट कटीत्यत्र प्रश्लिष्टस्य ।

अकृत्सार्वधातुकयोर्दीर्घः । ७ । ४ । २५ ।

अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे न तु कृत्सार्वधातुकयोः । भृशायते ॥ सुखायते । दुःखायते । कवीयति । चीयते । चेचीयते । स्तूयते । तोष्टूयते । चीयात् । चीयात् । स्तूयात् । अकृदिति किम् । चिनुयात् । क्ङितित्येव उरुया धृष्णुयेति वृत्तिः ।

च्वौ च । ७ । ४ । २६ ।

च्वौ च परे दीर्घः स्यात् । शुचीभवति । पटूस्यात् । अव्ययस्य दीर्घत्वं नेति केचित्तन्निर्मूलम् । स्वस्ति स्यादिति तु महाविभाषया च्वेरभावे सिद्धम् । स्वस्तीस्यादित्यपि पक्षे स्यादिति चेत् । अस्तु यदि नेष्यते तर्ह्यनभिधानात् च्विरेव नोत्पद्यते इत्यस्तु ।

रीङ् ऋतः । ७ । ४ । २७ ।

अकृद्यकारेऽसार्वधातुकयकारे च्वौ च परे ऋदन्तस्य रीङादेशः स्यात् । यस्येति च । पित्र्यम् । कर्त्रीयति । मात्रीयते । रेक्रीयते । चेचे-

क्रीयते । मात्रीकरोति । ऋत इति तपरः किम् । चेक्रीयते । निजेगिल्यते ।

रिङ् शयग्लिङ्क्षु । ७ । ४ । २८ ॥

शे यकि यादावसार्वधातुके लिङि च ऋतः रिङादेशः स्यात् ॥ आद्रियते । आध्रियते । क्रियते । ह्रियते । क्रियात् । ह्रियात् । भ्रियात् । रीङि प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न । यादौ किम् । भृषीष्ट । असार्वधातुके किम् । बिभृयात् । जागृयात् ॥

गुणोऽर्तिसंयोगाद्योः । ७ । ४ । २९ ॥

शे इति नानुवर्ततेऽसम्भवात् । अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्यात् यकि यादावसार्वधातुके लिङि च ॥ अर्यते । अर्यात् । स्मर्यते । स्मर्यात् । ह्वर्यते ह्वर्यात् । यादौ किम् । स्मृषीष्ट । असार्वधातुके किम् । स्मृयात् । संस्क्रियते । संस्क्रियादित्यत्र तु यथा न गुणस्तथावोचाम ॥

यङि च । ७ । ४ । ३० ॥

अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि । अरार्यते । सास्मर्यते । हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः ॥ * ॥ जेघ्नीयते । हिंसायां किम् । जङ्घन्यते ॥

ई घ्राध्मोः । ७ । ४ । ३१ ॥

यङीत्येव । जेघ्रीयते । देध्मीयते ॥

अस्य च्वौ । ७ । ४ । ३२ ॥

अवर्णस्य ईत्स्यात् च्वौ । कृष्णीकरोति । ब्रह्मीभवति । गङ्गी-स्यात् ॥ अव्ययस्य च्वावीत्वं नेति वाच्यम् ॥ * ॥ दोषाभूतमहः ।

दिवाभूता रात्रिः । अव्ययीभावस्य त्विष्यते । उपकुम्भीभूतम् । एत-
च्चाव्ययीभावश्चेति सूत्रे भाष्ये उक्तम् ॥

## क्यचि च । ७ । ४ । ३३ ॥

अस्येत्स्यात् । पुत्रीयति । खट्वीयति ॥

## अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु । ७ । ४ । ३४ ॥

क्यजन्ता निपात्यन्ते । अशनायति । उदन्यति । धनायति ।
बुभुक्षादौ किम् । अशनीयति । उदकीयति । धनीयति ॥

## न च्छन्दस्यपुत्रस्य । ७ । ४ । ३५ ॥

पुत्रभिन्नस्यावर्णान्तस्य क्यचि ईत्वदीर्घौ न ॥ मित्रयुः संस्वे-
दयुः । देवान् जिगाति सुम्नयुः । क्याच्छन्दसीत्युः । अपुत्रस्य किम् ।
पुत्रीयन्तः सुदानवः ॥ अपुत्रादीनामिति वाच्यम् ॥ * ॥ जनीयन्तो
न्वग्रवः । जनमिच्छन्त इत्यर्थः ॥

## दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति । ७ । ४ । ३६ ॥

एते क्यचि निपात्यन्ते । भाषायां तु प्रत्ययाभावाद् दुष्टी-
यति । द्रविणीयति । वृषीयति । रिषीयति ॥

## अश्वाघस्यात् । ७ । ४ । ३७ ॥

अश्व अघ एतयोः क्यचि आत्स्याच्छन्दसि । अश्वायन्तो
मघवन् ॥ मा त्वा वृका अघायवः । न च्छन्दसीति निषेधो न ईत्व-
मात्रस्य किन्तु दीर्घस्यापीत्यत्रेदमेव सूत्रं ज्ञापकम् ॥

## देवसुम्नयोर्यजुषि काठके । ७ । ४ । ३८ ॥

अनयोः क्यचि आत्स्यात् यजुषि कठशाखायाम् । देवायन्तो
यजमानाः । सुम्नायन्तो हवामहे । इह यजुःशब्दो न मन्त्रमात्र-

परः । किन्तु वेदोपलक्षणः । तेन ऋगात्मकेऽपि मन्त्रे यजुर्वेदीयक-ठशाखास्थे भवति ॥ किन्तु ऋग्वेदेऽपि भवति । स चेन्मन्त्रो यजुषि कठशाखायां दृष्टः । यजुषीति किम् । देवाञ्जिगाति सुम्नयुः । बह्वृचानामप्यस्ति कठशाखा । ततो भवतीदं प्रत्युदाहरणमिति हरदत्तः । काठके इति किम् । सुम्नयुरिदमासीत् ॥

**कव्यध्वरपृतनस्यर्चि लोपः । ७ । ४ । ३९ ॥**

सपूर्वयानि विदा कव्यतायाः । अध्वर्युं वा मधुपाणिम् । दमयन्तं पृतन्युम् ॥

**द्यतिस्यतिमास्थामित्ति किति । ७ । ४ । ४० ॥**

एषामिकारोऽन्तादेशः स्यात्तादौ किति । ईत्वद्गुणयोरपवादः । दितः । सितः । मा माङ् मेङ् मितः । स्थितः । तादौ किम् । अवदाय । किति किम् । अवदाता ॥

**शाच्छोरन्यतरस्याम् । ७ । ४ । ४१ ॥**

शितः । शातः । छितः । छातः । व्यवस्थितविभाषात्वाद्व्रते विषये श्यतेर्नित्यम् । संशितं व्रतम् । सम्यक् संपादितमित्यर्थः । संशितो ब्राह्मणः । व्रतविषयकयत्नवानित्यर्थः ॥

**दधातेर्हिः । ७ । ४ । ४२ ॥**

तादौ किति । अभिहितम् । निहितम् ॥

**जहातेश्च क्त्वि । ७ । ४ । ४३ ॥**

हित्वा । हाङस्तु हात्वा ।

**विभाषा छन्दसि । ७ । ४ । ४४ ॥**

हित्वा शरीरम् । हीत्वा वा । हात्वेति पाठे घुमास्थेतीत्वं छान्दसत्वान्न ।

### सुधितवसुधितनेमधितधिष्वधिषीय च । ७ । ४ । ४५ ॥

सु वसु नेम एतत्पूर्वस्य दधातेः क्तप्रत्यये इत्वं निपात्यते । गर्भं माता सुधितम् । वसुधितमग्नौ । नेमधिता न पौंस्या ॥ क्तिन्यपि दृश्यते ॥ * ॥ उत श्वेत वसुधितिं निरेके । धिष्व वज्रं दक्षिण इन्द्र हस्ते । धत्स्वेति प्राप्ते । सुरेता रेतो धिषीय । आशीर्लिङ् इट् इटोत् । धासीयेति प्राप्ते ॥

### दो दद्घोः । ७ । ४ । ४६ ॥

घुसंज्ञकस्य दा इत्यस्य दथ् स्यात्तादौ किति । चर्त्वम् । दत्तः । दत्तवान् । दत्तिः । दत्वा । दः किम् । धेट् धीतः । घोः किम् । दातं बर्हिः । अवदातं मुखम् । तान्तो वाऽयमादेशः । न चैवं विदत्तमित्यादावुपसर्गस्य दस्तीति दीर्घापत्तिः इति षष्ठ्याः सप्तम्यर्थत्वेन तान्तदाधातुघटितोत्तरपदे इति हि तस्यार्थ इति वाच्यम् । तकारादौ तद्विधानात् । दान्तो धान्तो वा । न च दान्तत्वे निष्ठानत्वम् । धान्तत्वे झषस्तथोरिति धत्वं शङ्क्यम् । सन्निपातपरिभाषाविरोधात् ॥

### अच उपसर्गात्तः । ७ । ४ । ४७ ॥

अच इत्यावर्तते । अजन्तादुपसर्गादुत्तरस्य दा इत्यस्य घोरचस्तः स्यात्तादौ किति ॥ चर्त्वम् । प्रत्तः । अवत्तः । अचः किम् । निर्दत्तम् । उपसर्गात्किम् । दधि दत्तम् ।

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

आदिकर्मणीत्येतत्प्रदत्तमित्यस्यैव सम्भवाद्विशेषणं च शब्दा-न्यथा प्राप्तम् । सूत्तमिति तु न प्राप्नोति । गतिश्चेत्यत्र भाष्ये सोऽस्तत्वे उपसर्गत्वप्रतिषेधादित्याहुः । द्यतेरित्वादच पुन्येतद्बाधति विप्रतिषेधेन । अवत्तं प्रत्तं जुहोति ॥

## अपो भि । ७ । ४ । ४८ ॥

अपस्तकारः स्याद्भादौ प्रत्यये परे ॥ अद्भिः । अद्भ्यः । भि किम् । अप्सु ॥ मासश्छन्दसीति वक्तव्यम् ॥ * ॥ माद्भिः । शरद्भिः ॥ स्ववस्स्वतवसोरुषसश्चेष्यते ॥ * ॥ स्ववद्भिः । अवते-रसुन् । शोभनमवो येषां ते स्ववसः तैः । तु इति सौत्रो धातुः । तस्मादसुन् । स्वं तवो येषान्तैः स्वतवद्भिः । समुषद्भि रजा यथाः मिथुनेभिः । वसेः किब्वित्यसि प्रत्यय इति हरदत्तः । पञ्चपाद्यां तु उषः किदित्युक्तम् ॥

## सः स्यार्धधातुके । ७ । ४ । ४९ ॥

सस्य तः स्यात्सादावार्धधातुके ॥ घत्स्यति । जत्स्यति । सः किम् । वक्ष्यति । सि किम् । वासः । आर्धधातुके किम् । वस्से ।

## तासस्त्योर्लोपः । ७ । ४ । ५० ॥

तासेरस्तेश्च लोपः स्यात्सादौ प्रत्यये । परे । कर्तासि । कर्तासे । त्वमसि । व्यतिसे ॥

## रि च । ७ । ४ । ५१ ॥

रादौ प्रत्यये प्राग्वत् । कर्तारौ । कर्तारः ॥

ह एति । ७ । ४ । ५२ ॥

तासस्त्योः सस्य हः स्यादेति परे । कर्ताहे । व्यतिहे । भावयामासे इत्यत्र तु तशब्दस्य एशि इट एत्वे च कृते ह एतीति हत्वं न । तासि साहचर्यादस्तेरपि व्यतिहे इत्यादौ सार्वधातुके एव एति हत्वप्रवृत्तेरित्याहुः ॥

यीवर्णयोर्दीधीवेव्योः । ७ । ४ । ५३ ॥

यिश्च इवर्णश्चेति द्वन्द्वः । यीत्यत्रेकार उच्चारणार्थः । एतयोरन्त्यस्य लोपः स्याद्यकारे इवर्णे च परे । दीध्यते । वेव्यते । आदीध्य । आवेव्य । दीधिता । दीधिष्यते । वेविता । वेविष्यते । दीधीत । वेवीत । इह तु लोपं बाधित्वा नित्यत्वादेत्वम् । दीध्ये । वेव्ये । यीवर्णयोः किम् । दीधीते । दीध्याते । दीध्यते । वेवीते । वेव्याते । वेव्यते ॥

सनि मीमाघुरभलभशकपतपदामच इस् । ७ । ४ । ५४ ॥

सीति वर्तते । एषामच इस् स्यात्सादौ सनि । वक्ष्यमाणेनाभ्यासलोपः । डुमिञ् मीञ् आभ्यां सन् । कृतदीर्घस्य मिनोतेरपि मीरूपाविशेषात् इस् सः सीति तः । मित्सति । मित्सते । मा माने । मित्सति । माङ् मेङोः मित्सते । दोदाणोः दित्सति । देङ् दित्सते । दाञ् दित्सति । दित्सते । धेट् धित्सति । धाञ् । धित्सति । धित्सते । स्कोरिति सलोपः । रिप्सते । शक्लृ शिक्षति । शक मर्षणे दिवादिः । स्वरितेत् । शिक्षति । शिक्षते । पित्सति । प्रपित्सते । सनि किम् । दास्यति । सि किम् । पिपतिषति ॥

राधो हिंसायां सनीस् वाच्यः ॥ * ॥ रित्सति । हिंसायां किम् । आरिरात्सति ॥

## आप्ज्ञप्यृधामीत् । ७ । ४ । ५५ ॥

एषामच ईत्स्यात्सादौ सनि । आप्तुमिच्छति ईप्सति । ज्ञपिः पुगन्तो मित्सञ्ज्ञः पकारान्तश्चौरादिकश्च । इडभावे हलो झलिति कित्वान्न गुणः अज्झनेति दीर्घः परत्वाण्णिलोपेन बाध्यते । अनन्त्ये सावकाशमीत्वं तु पूर्वविप्रतिषेधात् । ज्ञीप्सति । अर्धितुमिच्छति । रपरत्वं चत्वम् । ईर्त्सति । सनि किम् । आप्स्यति । सि किम् । जिज्ञपयिषति । अर्दिधिषति ॥

## दम्भ इच्च । ७ । ४ । ५६ ॥

दम्भेरच इत्स्यादीच्च सादौ सनि । हलन्ताच्चेत्यत्र हल्ग्रहणं जातिपरमित्युक्तम् । तेन सनः कित्वान्न लोपः । धिप्सति । धीप्सति । सि किम् । दिदम्भिषति ॥

## मुचोऽकर्मकस्य गुणो वा । ७ । ४ । ५७ ॥

सादौ सनि । मोक्षते मुमुक्षते वा वत्सः स्वयमेव । अकर्मकस्य किम् । मुमुक्षति वत्सं कृष्णः ॥

## अत्र लोपोऽभ्यासस्य । ७ । ४ । ५८ ॥

सनि मीमेत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात् । तथा चैवोदाहृतम् । अभ्यासस्येत्येतच्चाधिकृतं वेदितव्यम् । आ अध्यायपरिसमाप्तेः । सनिमीमेत्याद्यनुवृत्त्यैव सिद्धेऽत्र ग्रहणं विषयावधारणार्थम् । अत्रैवाभ्यासलोपो भवति सन्वद्भावात्प्राप्तो न भवति ।

अमीमपत्। अदीदपत्। अजिज्ञपत्। इत्यादयोऽपि सन्वद्भावेन तु न भवन्ति। मीमादीनां हि धातूनामच इत्वादयो विधीयन्ते। न च धातुकार्यं प्रति सन्वद्भावोऽस्ति। अभ्यासकार्यविषयत्वात्तस्य सर्वस्याभ्यासस्यायं लोप इष्यते। तदर्थमेव केचिदत्रग्रहणं वर्णयन्ति। अत्राभ्यासत्वेन यो निर्ज्ञातस्तस्य लोप इत्यर्थसङ्गतेरिति दिक्॥

## ह्रस्वः ७।४।५९॥

अभ्यासस्याचो ह्रस्वः स्यात्। चच्छतुः। डुढौके। तुचौके। ऊखतुः। ऊखुरित्यत्र तु सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्ध्रस्वः प्राप्तो न तु भवति सकृत्प्रवृत्तत्वात् आङ्गत्वाद्धि पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घः वार्णादाङ्गं बलीय इति न्यायात् परत्वाच्च॥

## हलादिः शेषः।७।४।६०॥

अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते। जग्लौ। मम्लौ। पपाच। पपाठ। अभ्यासस्येति जातिपरो निर्देशः तेन आट आटतुः आनच आनचतुरित्यादौ टकारादिनिवृत्तिः सिध्यति क्वचिदभ्यासे आदेर्हलः सत्त्वमाश्रित्य सर्वत्रानादेर्लोपविधानात्॥

## शर्पूर्वाः खयः।७।४।६१॥

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते अन्ये हलो लुप्यन्ते। हलादिः शेषस्यापवादः। चुश्च्योत। तस्थौ। पस्पर्द्धे। उचिच्छिषतीत्यत्र तु उछेस्तुक् श्चुत्वम्। पूर्वत्रासिद्धीयमद्विर्वचन इति चकाभ्यां सहितस्येटो द्वित्वम्। हलादिः शेषः। निमित्तापाये नैमित्तिकापाय

इति त्वनित्यम् । च्क्षोरिति सतुक्कग्रहणाज्ज्ञापकात् प्रकृतिप्रत्ययापत्तिवचनाद्वा ॥

**कुहोश्चुः । ७ । ४ ६२ ॥**

अभ्यासकवर्गहकारयोश्चवर्गादेशः स्यात् । चकार । चखान । जगाम । जघास । चुकुवे । जहार । जहौ ॥

**न कवतेर्यङि । ७ । ४ । ६३ ॥**

कवतेरभ्यासस्य चुत्वं न स्याद्यङि । कोकूयते । कौतिकुवत्योस्तु चोकूयते । यङ्लुकि चोकवीति चोकोति । यङि किम् । चुकुवे ॥

**कृषेश्छन्दसि । ७ । ४ । ६४ ॥**

यङि अभ्यासस्य चुत्वं न । करीकृष्यते । छन्दसि किम् । चरीकृष्यते ॥

**दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेलर्ष्यापनीफणत्संसनिष्यदत्करिक्रदत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च ।७।४।६५॥**

एते ऽष्टादश निपात्यन्ते । तत्र दाधर्तीति धृङो धारयतेर्वा श्लौ धृङो यङ्लुकि वा परस्मैपदमभ्यासस्य दीर्घत्वं णिलुक् च यथायथमप्राप्तं निपात्यते। दर्धर्तीत्यत्र यङ्लुक्पक्षे दाधर्तीति निपातनप्राप्तदीर्घाभावः । श्लुपक्षे तु रुगपि । दर्धर्षीत्यत्र तु यङ्लुक्पक्षे न किंचिन्निपात्यं किंतु श्लावेव । भवतेर्यङ्लुगन्तस्य गुणाभावः तेन भाषायां गुणो लभ्यते । तिजेर्यङ्लुगन्तात्तङ् । ऋयतेर्लिटि हलादिःशेषापवादो रेफस्य लत्वं इत्वाभावश्च निपात्यते । अलर्षि युध्मसु-

जकृत्पुरन्दर । सिपा निर्देशो न तन्त्रम् । अलर्ति दक्ष उत । फणतेरा-ङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमो निपात्यते । अन्वा-पनीफणत् । स्यन्देः संपूर्वस्य यङ्लुकि शतरि अभ्यासस्य निक् धातुस-कारस्य षत्वम् । न चात्र संपूर्वता तन्त्रम् अन्यथापि हि दृश्यते आसनि-ष्यदितीति वृत्तिः । करोतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य चुत्वाभावः । क्रन्देर्लुङि द्विवचनं अभ्यासस्य चुत्वाभावो निगागमश्च । कनिक्रद-ज्जनुषम् । अक्रन्दीदित्यर्थः । बिभर्तेर्यङ्लुगन्तस्य शतरि अभ्यासस्य जश्त्वाभावः । बिभ्रद्भरिभ्रदोषधीषु । ध्वरतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य विगागमः धातोर्ऋकारलोपश्च । जसन्तमेतत् । दविध्वतो रश्मयः सूर्यस्य । द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य संप्रसारणा-भावोऽत्वं विगागमश्च । दविद्युतद्दीद्यच्छोशुचानः । तरतेः शतरि श्लौ अभ्यासस्य रिगागमः षष्ठ्येकवचनान्तमेतदिति वृत्तिः जसन्तमिति कश्चित् । त्वपेः शतरि श्लौ द्वितीयैकवचने रीगागमो अभ्यासस्य । वरीवृजदिति वृजेः शतरि श्लावभ्यासस्य रीक् । मर्मृज्य इति मृजेर्लिटि णलि अभ्यासस्य रुक् धातोश्च युक् ततो मृजेर्वृद्धिर्न भवत्यलघूपधत्वात् । लघूपधगुणे प्राप्ते वृद्धिरारभ्यते इति वृत्तिः । वृद्ध्यभावोपि छान्दसत्वादिति कश्चित् । गमेराङ्पूर्वस्य लटि श्लाव-भ्यासस्य चुत्वाभावो नीगागमश्च । वह्यंतो वेदाग नीगंन्ति कर्णम् । इतिशब्द एवंप्रकाराणामन्येषामपि संग्रहार्थः ॥

## उरत् । ७ । ४ । ६६ ॥

अभ्यास ऋवर्णस्यात्स्यात्प्रत्यये परे । रपरत्वं हलादिः शेषः । चकार । ववृते । चच्कृदतुः । नर्नर्ति । प्रत्यये किम् । वव्रश्च ॥

## द्युतिस्वाप्योः संप्रसारणम् । ७ । ४ । ६७

अनयोरभ्यासस्य संप्रसारणं स्यात् । दिद्युते । दिद्युताते । दिद्योतिषते । दिद्युतिषते । व्यदिद्युतदित्यपि वत्ताऽदाहृतम् । सुष्वापयिषति ॥

## व्यथो लिटि ७ । ४ । ६८ ॥

व्यथोऽभ्यासस्य संप्रसारणं स्याल्लिटि । हलादिःशेषापवादः । थस्य हलादिः शेषेण निवृत्तिः । अत्र यद्वक्तव्यं तल्लिट्यभ्यासस्येत्यत्रोक्तम् । विव्यथे । लिटि किम् । वाव्यथ्यते ॥

## दीर्घ इणः किति । ७ । ४ । ६९ ॥

इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयुः । किति किम् । इयाय । इययिथ । इयेथ ॥

## अत आदेः । ४ । ७० ॥

अभ्यासस्यादेरतो दीर्घः स्यात् । एकादेशापवादः । आट । आटतुः । आनृधतुः । आदेः किम् । पपाच । लिटीत्येव । अराति ॥

## तस्मान्नुड् द्विहलः । ७ । ४ । ७१ ॥

द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् ॥ आनर्द्द । आनर्च । नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते तेन द्विहल्त्वादिह नुट् । आनृजे । इह तु द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । अत आदेरित्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम् । तेन दीर्घाभावादिह न नुट् । आञ्छि आयामे । आञ्छ । तपरकरणं मुखसुखार्थमिति मते तु नुट् । आनाञ्छ ॥

## अश्नोतेश्च । ७ । ४ । ७२ ॥

दीर्घादभ्यासावर्णात्परस्य नुट् स्यात् । आनशे । अश्नातेस्तु आश ॥

## भवतेरः । ७ । ४ । ७३ ॥

भवतरेभ्यासोकारस्य अः स्याल्लिटि । बभूव । बभूवतुः । बभूवुः । बभूवे । अनुबभूवे । लिटि किम् । बुभूषति । बोभूयते ।

## ससूवेति निगमे । ७ । ४ । ७४ ॥

सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वं निपात्यते ॥ गृष्टिः ससूव स्थविरम् । सुषुवे इति भाषायाम् ॥

## णिजां त्रयाणां गुणः श्लौ । ७ । ४ । ७५ ॥

णिज् विज् विष् एषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । वेवेक्ति । वेवेष्टि । श्लौ किम् । निनेज ॥

## भृञामित् । ७ । ४ । ७६ ॥

भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । बिभर्ति । मिमीते । जिहीते । त्रयाणां किम् । जहाति । श्लौ किम् । बभार ॥

## अर्तिपिपर्त्योश्च । ७ । ४ । ७७ ॥

अभ्यासस्य इकारोन्तादेशः स्यात् श्लौ । बहुलं छन्दसीत्येव सिद्धे अर्तिपिपर्त्योश्चेतीत्वविधानादयं धातुर्भाषायामपि । उरदत्वम् । हलादिः शेषः । इत्वम् । अभ्यासस्यासवर्णे इतीयङ् इयर्ति । पिपर्ति । पिपूर्तः । पिपूर्यात् । ह्रस्वान्तोऽयमिति केचित् ।

पिपृतः । पिपृयात् । पाणिनीयमते तु तं रोदसी पिपृतमित्यादौ छान्दसत्वं शरणम् । श्लौ किम् । आर । पपार ॥

## बहुलं छन्दसि । ७ । ४ । ७८ ॥

अभ्यासस्य इकारः स्याच्छन्दसि श्लौ । पूर्णां विवष्टि । वशेरेतद्रूपम् । सचेः गर्भं माता सिषक्ति । घृ जिघर्म्यग्निं हविषा घृतेन । हृ अयं स्रुवो अभिजिहर्ति होमान् । न च भवति ददातीत्येवं ब्रूयात् ॥

## सन्यतः । ७ । ४ । ७९ ॥

अभ्यासस्यात इकारः स्यात्सनि । पिपक्षति । पिपासति । चिच्छादयिषति । अधीषिषति । प्रतीषिषति । सनि किम् । पपाच । अतः किम् । लुलूषति । तपरकरणं किम् । पापच्यतेः सन् । पापचिषते ॥

## ओः पुयण्ज्यपरे । ७ । ४ । ८० ॥

सनि परे यदङ्गं तदवयवस्य अभ्यासोवर्णस्य इत्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । पिपविषते । पिपावयिषति । बिभावयिषति । मिमावयिषति । यियविषति । यियावयिषति । रिरावयिषति । लिलावयिषति । जिजावयिषति । जु गतौ सौत्रो धातुः । जुचङ्क्रम्येत्यत्र निर्दिष्टः । अयमेव वर्णप्रत्याहारजकारग्रहो लिङ्गं णौ द्वित्वात्प्रागच आदेशो नेतीत्युक्तम् । ओः किम् । पापचिषते । पुयण्जीति किम् । नुनावयिषति । तुतावयिषति । चुच्चावयिषति । पुस्फारयिषति । ऊर्णुनावयिषति । अपरे किम् । बुभूषति ।

## स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा । ७ । ४ । ८१ ॥

एषामभ्यासोकारस्य इत्वं वा स्यादवर्णपरे धात्वक्षरे परे । सिस्रावयिषति । सुस्रावयिषति इत्यादि । अपरे इत्येव । सुस्रूषति । शुश्रूषते ॥

## गुणो यङ्लुकोः ७ । ४ । ८२ ॥

अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च । चेचीयते । लोलूयते । चोच्छूद्यते । जोहवीति । चोक्रुशीति । चेच्छिदीति ॥

## दीर्घोऽकितः । ७ । ४ । ८३ ॥

अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च । पापच्यते । पापचीति । यायज्यते । यायजीति । अकितः किम् । यंयम्यते । यंयमीति । बहुव्रीहिश्चायम् । न विद्यते किद्यस्मिन्नित्यर्थः । तेन हाकोपि हाङ्वत् जाहेतीति दीर्घः सिद्धः । अनन्तरस्येति न्यायेन प्रतिपदोक्तपरिभाषया चाभ्यासनिमित्तकित एव ग्रहणमिति चाच्छायत इत्यादौ न दोषः । नन्वजन्ताभ्यासस्य दीर्घ इत्यर्थे नुग्रुगादौ कृतेऽजन्तत्वाभावान्नीकि विशेषाभावाद्रिकि रीग्विधानेनैव सिद्धेरिविधिसामर्थ्यादेव तदभावसिद्धेः किमकित इत्यनेनेति चेन्न । अभ्यासविकारविधौ वैयधिकरण्यान्वयज्ञापनार्थत्वात् । तेन द्युतेः सनि द्वित्वेऽन्तरङ्गत्वात्तुकि चिच्छासतीत्यादावभ्यासह्रस्वेत्त्वसिद्धिः । न चैवमप्यपवादत्वान्नीगादिभिर्दीर्घबाधे व्यर्थमेव तदिति वाच्यम् । अभ्यासविकारे बाधका न बाधन्ते इत्यर्थस्यापि ज्ञापनात् । तेषां सति सम्भवे युगपदेव प्रवृत्तिः । यौगपद्यासम्भवे क्रमेणैव तत्रान्यत्र

बाधकप्रवृत्त्युत्तरं बाध्यप्रवृत्त्यभावः । प्रकृते तु तस्मिन्कृतेपि प्राप्ति-योग्यं बाध्यं भवत्येव । यत्र तु बाधकप्रवृत्त्युत्तरं बाध्यस्य प्रवृत्त्य-योग्यता तत्र पूर्वं बाध्यस्य प्रवृत्तिरनन्तरं बाधकस्य प्रवृत्तिरिति । अत एव मीमांसतेऽचीकरदित्यादावित्वे कृते दीर्घ इति दिक् ॥

**नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् । ७ । ४ । ८४ ॥**

एषामभ्यासस्य नीगागमः स्याद्यङ्लुकोः । अकित इत्युक्तेर्न दीर्घः । वनीवच्यते । वनीवञ्चीति । सनीस्रस्यते सनीस्रसीतीत्यादि ॥

**नुगतोऽनुनासिकान्तस्य । ७ । ४ । ८५ ॥**

अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात् यङ्लुकोः । नुगित्यनेनानुस्वारो लक्ष्यते स च पदान्तवद्वाच्यः । वा पदान्तस्येति यथा स्यात् । यय्यँम्यते । यंयम्यते । यय्यँमीति । यंय-मीति । तन्तन्यते । तन्तनीति । जङ्गम्यते । जंगमीति । रंरम्यते । रंरमीति । अतः किम् । तेतिम्यते । तपरत्वसामर्थ्याद्भूतपूर्वदीर्घस्यापि न । भाम क्रोधे । बाभाम्यते । अनुनासिकान्तस्य किम् । पापच्यते इहान्तग्रहणं न कर्तव्यम् । तदन्तविधिना सिद्धेः । तत्क्रियते अन्तस्यानुस्वारस्य यो धर्मः स यथा स्यादिति एवं चानुनासिका-न्तस्येति पृथक्पदे अनुनासिकेति लुप्तषष्ठीकम् ॥ एवं च पदान्तव-द्वाच्य इति सिद्धमिति पदमञ्जर्यां स्पष्टम् ॥

**जपजभदहदशभञ्जपशां च । ७ । ४ । ८६ ॥**

एषामभ्यासस्य नुक् स्याद्यङ्लुकोः । गर्हितं जपति जंजप्यते इत्यादि । दंशिरयं लुप्तनकारो निर्दिष्टः तेन यङ्लुक्यपि नकारलोपो

भवति । दंदश्यते दंदशीतीति वृत्तिः । पश गतौ । सोऽयं दन्त्यान्तोऽयमिति स्पश बाधनस्पर्शनयोरिति धातौ माधवः ॥

**चरफलोश्च । ७ । ४ । ८७ ॥**

चरफलोरभ्यासस्यातो नुक् स्याद्यङ्लुकोः ॥

**उत्परस्यातः । ७ । ४ । ८८ ॥**

चरफलोरभ्यासात्परस्यात उत्स्यात् यङ्लुकोः । हलि चेति दीर्घः । चंचूर्यते । चञ्चूर्यते । चञ्चुरीति । पफुल्यते । पम्फुल्यते पंम्फुलीति । परस्य किम् । अभ्यासस्य मा भूत् । अतः किम् । अलोन्त्यस्य मा भूत् । उदिति तपरत्वान्न गुणः हलि चेति दीर्घस्तु स्यादेव । तस्यासिद्धत्वेन तपरत्वनिवर्त्यत्वायोगात् । चंचूर्ति ॥

**ति च । ७ । ४ । ८९ ॥**

चरफलोरत उत्स्यात्तादौ प्रत्यये । चूर्तिः । फुल्लः । फुल्लवान् प्रफुल्लः । प्रफुल्तिः ॥

**रीगृदुपधस्य च । ७ । ४ । ९० ॥**

ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्लुकोः । वरीवृत्यते । वरीवृतीति । पुग्न्तादित्वान्न गुणः । नरीनृत्यते । नरीनृतीति । गृहू ग्रहणे । जरीगृह्यते । जरीगृहीति । गृहाहीत्येस्तु यङ्लुकि नैवं किन्तु जागृहीति जागाढि यद्यपि तसादौ ङिन्निमित्तं संप्रसारणं तथापि तस्य बहिरङ्गत्वेनासिद्धत्वान्न रीगादयः । जागृढः । जागृहति जरीगृधीति जरीगृध्यते । उभयत्र ऋत्वम् । चलीक्लृप्यते । चलीक्लृपीति । रीगृत्वत इति वक्तव्यम् ॥ * ॥

वरीवृश्च्यते । परीपृच्छ्यते । बरीभृज्ज्यते । एतेषां यङ्लुकि वरीवृ-श्चीतीत्यादिरूपाणि न भवन्ति किंतु वाव्रश्चीति । वाव्रष्टि । पाप्र-च्छीति । पाप्रष्टि । बाभ्रज्जीति । बाभ्रष्टि । तथादावपि ङिन्निमित्तं यहि-ज्येति सम्प्रसारणं न भवति । श्तिपा निर्देशात् । तेन वाव्रष्टः पाप्रष्टः बाभ्रष्टः । वाव्रश्चमः । च्छ्वोः शूडि ति शः पाप्रश्मः बाभ्रज्ज्मः इत्या-दीनि ऋत्वतो यङ्लुक्यपि । रीक् तु तृवमृत्रादीनामुदाहर्तव्यः । तरीतृह्यते । तरीतृणीति । मरीमृज्यते । मरीमृजीतीत्यादि ।

## रुग्रिकौ च लुकि । ७ । ४ । ९१ ॥

ऋदुपधस्याङ्गस्याभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युर्यङ्लुकि ॥ वर्वृतीति । वरिवृतीति । वर्वर्ति । वरिवर्ति । वरी-वर्ति । अवर्वृतीत्३ । अवर्वर्त्३ । सिपि दश्चेति रुत्वपक्षे अवर्वाः । गणनिर्दिष्टत्वादङ् न । अवर्वर्तीत्३ । जर्गृहीति३ । जर्गर्ढि३ । जर्गृढः३ । जर्गृहति३ । अजर्घट्३ । जर्गृधीति३ । जर्गर्द्धि३ । जर्गृद्धः । जर्-धति । जर्गृधीषि । जर्घर्त्सि । अजर्गृधीत्३ । ईडभावे हल्ङ्या-दिलोपः । भष्भावः । जश्त्वचर्त्वे । अजर्घर्त् । अजर्गृधाम् । सिपि दश्चेति पक्षे रुत्वम् । अजर्घाः । अजर्गर्धीत्३ । अजर्गर्धिष्टाम् । मर्मृज्यत मर्मृज्यमानास इत्युपसंख्यानम् ॥

## ऋतश्च । ७ । ४ । ९२ ॥

ऋदन्तस्याङ्गस्याभ्यासस्यापि तथा । चर्करीति३ । चर्कर्ति३ । चर्कराञ्चकार । चर्करिता । अचर्करीत् । अचर्कः । आशिषि रिङ् । चर्क्रियात् । अचर्कारीत् । अनैयङ्लुकि द्वित्वेऽभ्या-सस्योरदत्वं रपरत्वम् । हलादिः शेषः । रुक् । रिग्रीकौ तु । अभ्यास-

स्यासवर्ण इतीयङ् । अरर्ति । अरियर्ति । अररीति । अरियरीति । अरर्तः । अरियृतः । झि अत् यण् । हलो रोरि लोपः । न च तस्मिन्कर्तव्ये यणः स्थानिवत्त्वम् । पूर्वत्रासिद्धे तन्निषेधात् । आरति । अरियति । अरराञ्चकार । अरियराञ्चकार । अररिता । अरियरिता । अररिष्यति । अरियरिष्यति । अररीतु । अरियरीतु । अरर्तात् । अरियृतात् । आररीत् । आरियरीत् । आरर्ताम् । आरियृताम् आररुः । आरियरुः । आरः । आरियरः । आररीः । आरियरीः । अरर्यात् । अरियृयात् । आशीर्लिङि श्तिपा निर्देशाद् गुणोऽर्तीति गुणो न-रिङ् रलोपः दीर्घः । आरियात् । अरिरियात् । आरारीत् । आरियारीत् । आररिष्यत् । आरियरिष्यत् । ऋतश्चेति तपरत्वान्नेह । कॄ विक्षेपे । चाकरीति । तातरीति । चाकर्ति । तातर्ति । तातीर्तः । तातिरति । तातीर्हि । तातराणि । अतातरीत् । अतातः । अतातीर्ताम् । अतातरुः । अतातारीत् अतातारिष्टामित्यादि ॥

## सन्वल्लघुनि चङ्परेऽनग्लोपे । ७ । ४ ९३ ॥

चङ्परे इति बहुव्रीहिः ॥ स चाङ्गस्येति च पदद्वयमप्यावर्तते । अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत् । तत्परं यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्य सनीव कार्यं स्यात् णावग्लोपेऽसतीति । अथवाङ्गस्येति नावर्तते । चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत् । पदमञ्जर्यां तु चङ्परे इत्यत्यन्तावयवेन न विद्यतेऽग्लोपो यस्मिन् परतस्तादृशे चङ्परे यदङ्गं तस्य योऽभ्यासस्तस्येत्यादि व्याख्यानम् । सन्यत इत्याद्युक्तं चङ्परेऽपि तथा भवति । अचीकरत् । अदीपचत् । अचीकमत । अपीपचत् । अजीगमत् ।

मूक् । अमीमवत् । अयीयवत् । अरीरवत् । अलीलवत् । अजीजवत् । असिस्रवत् । असुस्रवत् इत्यादि । पुयणज्यपरे इत्येव । नेह । अतूतवत् । और्णूनवत् । अपुस्फुरत् । सन्वति किम् । अनन्तवत् । अररक्षत् । राजयते अरराजत् । ऋदित्वान्नोपधाह्रस्वः ; जागरयतेः अजजागरत् । लुङि चङि जाग्रोऽवीति गुणः । सर्वत्रैव लघोरानन्तर्यमभ्यासे नास्तीति येन नाव्यवधानं तेनैव व्यवहितेऽपीत्येकेन वर्णेन व्यवधाने वचनप्रामाण्याद्भवितव्यं न पुनरनेकवर्णसंघातेन कथमपित्वणादिति । आचार्यप्रवृत्तिर्ज्ञापयति भवति संयोगव्यवहितानामित्वमिति यदयं तद्बाधनार्थं स्मरत्यादीनामत्वं विदधाति । चङ्परे किम् । अहं पपच । परग्रहणं किम् । चङ्येव केवले मा भूत् । अचकमत । अनग्लोपे किम् अचकथत् । दृषदमाख्यत् अददृषत् ।

## दीर्घो लघोः । ७ । ४ । ९४ ॥

लघोरभ्यासस्य दीर्घः स्यात्सन्वद्भावविषये । अचीकरत् । अचूचुरत् । लघोः किम् । अबिभ्रजत् । अवीवददवूचुरदित्यादौ णयन्ताणिणिचि तु पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णौ णिलोपे तस्य स्थानिवत्त्वादग्लोपित्वाद्वा सन्वद्भावो दीर्घत्वञ्च न प्राप्नोति व्याकृतिनिर्देशाद्भवति । ननु चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यर्थे औन्दिददाटिटदित्यादौ दीर्घापत्तिः । चङ्परे णौ यदङ्गमौन्दिद् आटिट् इति तदीयोऽभ्यासो हि चङमादाय णिलोपस्य स्थानिवत्त्वेन णिमादाय वा लघुपर इति चेन्न चङ्णिभिन्नस्यैव लघोर्ग्रहणात् । अयमेव भाष्यप्रयोगश्चात्र प्रमाणमिति दिक् ।

संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते ।
तत्रैव दीर्घः सन्वच्च नानेकाच्त्विति माधवः ॥ १ ॥
चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते ।
किं त्वस्यावयवः कश्चित्तस्मादेकाच्त्विदं द्वयम् ॥ २ ॥
वस्तुतोऽङ्गस्यावयवो योऽभ्यास इति वर्णनात् ।
ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे ॥ ३ ॥
चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया ।
णौ विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥ ४ ॥
इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात् ।
णेरग्लोपेऽपि सम्बन्धस्त्वगितामपि सिद्धये ॥

**अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् । ७ । ४ । ९५ ॥**

एषामभ्यासस्याकारोऽन्तादेशः स्याच्चङ्परे णौ । इत्वापवादः । असस्मरत् । अददरत् । तपरत्वसामर्थ्यादत्र न दीर्घः । अतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् ।

**विभाषा वेष्टिचेष्ट्योः । ७ । ४ । ९६ ॥**

अभ्यासस्यात्वं वा स्याच्चङ्परे णौ । अववेष्टत् । अविवेष्टत् । अचचेष्टत् । अचिचेष्टत् ।

**ई च गणः । ७ । ४ । ९७ ॥**

गणेरभ्यासस्य ईत् स्याच्चङ्परे णौ चादत् । अजीगणत् । अजगणत् ।

इत्योरम्भट्टेन श्रीधोडभट्टविश्वरूपात्मजेन वैजनाथभट्टविश्वरूपापरनामधेयेन विरचितायां श्रीव्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ सप्तमाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥

श्रीगणेशाय नमः ।

# अष्टमाध्यायस्य प्रथमः पादः ।

## सर्वस्य द्वे । ८ । १ । १ ॥

एतच्च पदस्येत्यतः प्रागधिकृतं वेदितव्यम् । वक्ष्यति नित्यवीप्सयोरिति नित्येऽर्थे वीप्सायां च यद्वर्तते तस्य सर्वस्य द्वे भवतः पचति २ । ग्रामो २ रमणीयः । इदं तु स्थाने द्विर्वचनमत एव पीनं पीनमित्यादौ स्थानिवत्त्वेन प्रातिपदिकत्वाद्ङ्यादिसिद्धिः । द्विःप्रयोगत्वे तु समासग्रहणस्य नियमेनाप्रातिपदिकत्वान्न स्यात् । न चैवमग्नेऽग्ने इत्यादावन्त्यावयवे पदकार्यसिद्धिर्न स्यात् द्वे इति द्विवचनेन नानान्तरपदत्वस्यापि स्वीकारात् स्थानिवत्त्वकृतपदत्वस्य समुदायेऽपि सत्त्वादाम् पचसि २ देवदत्तेत्यादावेकान्तरतासिद्धिरिति दिक् । पूर्वत्रासिद्धीयमद्विर्वचने इति वक्तव्यम् ॥ * ॥ द्रोग्धा द्रोग्धा-द्रोढा द्रोढा । ढत्वघत्वयोरसिद्धत्वादकृतयोरेव द्वित्वं प्राप्नोति पश्चात्तद्विकल्पे सत्यनिष्टमपि स्यात्तन्मा भूदिति वचनमिदम् ॥

## तस्य परमाम्रेडितम् । ८ । १ । २ ॥

द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् । चोर चोर घातयिष्यामि त्वाम् । आम्रेडितप्रदेशा आम्रेडितं भर्त्सने इत्येवमादयः ॥

## अनुदात्तं च । ८ । १ । ३ ॥

द्विरुक्तस्य परं रूपमनुदात्तं स्यात् । दिवे दिवे ॥

## नित्यवीप्सयोः । ८ । १ । ४ ॥

पदस्येति वक्ष्यमाणमिहापकृष्यते । आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्विर्वचनं स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च । पचति पर्चति । भुक्त्वा भुक्त्वा । वीप्सायाम् । वृक्षं वृक्षं सिञ्चति देवदत्तः । ग्रामो ग्रामो रमणीयः । पदस्येति किम् । नित्यतायां विधीयमानं द्विर्वचनं धातुमात्रस्य मा भूत् । सर्वस्येति किम् । स्वादिष्विति पदसंज्ञामादाय वृक्षाभ्यामित्यादौ प्रकृतिभागमात्रस्य मा भूदित्याहुः । प्रपचति प्रपचतीत्यादौ तु द्वित्वसिद्धये सगतिकस्येति वक्तव्यम् । सगतिकस्य द्वित्वे एकपदं नास्त्येव स्थानिनः पदत्वाभावेनादेशेऽपि तस्य दौर्लभ्यात् । द्विःप्रयोगपक्षे तु प्रथमगतिं विहायावशिष्टस्य समुदायस्य पदत्वं प्राप्तं तस्मिन्सत्यपि न क्षतिरित्याहुः । यत्तिङन्तं नित्यतया प्रकर्षेण च युक्तं ततः कृतद्विर्वचनात्प्रकर्षप्रत्यय इष्यते पचति २ तरामिति इह त्वाढ्यतरमाढ्यतरमानयेति प्रकर्षयुक्तस्य वीप्सायोग इष्यते ॥

## परेर्वर्जने । ८ । १ । ५ ॥

परि परि वङ्गेभ्यो वृष्टो देवः । वङ्गान्परिहृत्येत्यर्थः । परेर्वर्जने वा वचनम् । परि वङ्गेभ्यो वृष्टो देवः । समासे तु समासेनैव वर्जनस्योक्तत्वान्नैव भवति । परि त्रिगर्तं वृष्टो देवः ॥

## प्रसमुपोदः पादपूरणे । ८ । १ । ६ ॥

एषां द्वे स्तः पादपूरणे । प्र प्रायमग्निः । सं समिद्युवसे । उपोप मे परामृश । किन्नोदुदु हर्षसे । पादपूरणे किम् । प्र देवं देव्याधिया । भाषायामनर्थकस्य प्रयोगाभावाच्छन्दस्येवेदम् ।

## उपर्यध्यधसः सामीप्ये । ८ । १ । ७ ॥

उपर्युपरि ग्रामम् । ग्रामस्योपरिष्टात्समीपदेशे इत्यर्थः । अध्यधि सुखम् । सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः । अधोऽधो लोकम् । लोकस्याधस्तात्समीपदेशे इत्यर्थः । सामीप्ये किम् । उपरि चन्द्रमाः । कथं तर्हि उपरि शिरसो घटं धारयतीति अत्राहुः । आनन्तर्यमात्रमिह विवक्षितं न तु सामीप्यमतो वस्तुतस्तत्सत्त्वेऽपि न द्वित्वम् । विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणम् । अत्रोपक्षोपक्रमं तदाद्याचिख्यासायामिति सन्नन्तप्रयोगो ज्ञापक इति ॥

## वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सन भर्त्सनेषु । ८ । १ । ८ ॥

असूयायाम् । सुन्दर सुन्दर वृथा ते सौन्दर्यम् । संमतौ देव देव वन्द्योऽसि । कोपे । दुर्विनीत । दुर्विनीत इदानीं ज्ञास्यसि । कुत्सने धानुष्क धानुष्क वृथा ते धनुः । भर्त्सने । चोर चोर घातयिष्यामि त्वाम् ॥

## एकं बहुव्रीहिवत् । ८ । १ । ९ ॥

द्वे इत्यनुवर्तते । तच्चानुवाद्यसमर्पकम् । द्विरुक्त एकशब्द बहुव्रीहिवत्स्यात् । तेन सुब्लोपपुंवद्भावौ । एकैकमक्षरम् । इह द्वयोरपि सुपो लुकि सति बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्समुदायात्सुप् । एकैकयाहुत्या । इह पूर्वभागे पुंवद्भावादवग्रहे विशेषः न बहुव्रीहावित्यत्र पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहिलाभार्थम् तेनातिदिष्टबहुव्रीहौ सर्वनामतास्त्येवेति प्राञ्चः । वस्तुतस्तु भाष्यमते प्रत्याख्यातमेव तत् सूत्रमतेऽपि बहुव्रीह्यर्थेऽलौकिके विग्रहे निषेधकं न बहुव्रीहाविति तेनातिदेशशङ्कैव नास्ति । एकैकस्मै देहि ॥

## आबाधे च । ८ । १ । १० ॥

पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च । गतगतः । विरहात्पीड्यमानस्येयमुक्तिः । बहुव्रीहिवद्भावात्सुब्लुक् । गतगता । इह पुम्वद्भावः । नन्वेवं न न करोति सु सु जागर्तीत्यत्र न लोपो नञ इति नलोपो नञ्सुभ्यामित्यन्तोदात्तत्वं च स्यादिति चेन्मैवम् उभयथापि वनं समासे इत्यतः समासग्रहणानुवृत्त्यपकर्षाभ्यां मुख्यसमासस्यैव ग्रहणादित्याहुः । एवं धूर्धूः पथि पंथा इत्यादौ समासान्तोपि समासाच्च तद्विषयादित्यतः समासादित्यनुवर्तमाने समासांता इति पुनः समासग्रहणात्समासाधिकारविहितसमासस्यैव ग्रहणान्नेति बोध्यम् ॥

## कर्मधारयवदुत्तरेषु । ८ । १ । ११ ॥

इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यम् । प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि । अधिकारेणैव सिद्धे उत्तरेष्विति स्पष्टार्थम् ॥

## प्रकारे गुणवचनस्य । ८ । १ । १२ ॥

सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत् । कर्मधारयवदुत्तरेष्वित्यधिकारात् तेन पूर्वभागस्य पुंवद्भावः समासस्येत्यंतोदात्तत्वं च । पटुपट्वी । पटुपटुः । पटुसदृशः ईषत्पटुरिति यावत् । इह द्वित्वेन जातीयरो बाधो नेष्यते इति वामनः । अन्यथा ब्राह्मणजातीय इत्यादौ अगुणवचने गुणवचनेपि भेदरूपेर्थे सावकाशो जातीयर् गुणवचनेषुसादृश्ये परेण द्वित्वेन बाध्येतेति भावः । जयादित्यस्तु जातीयर्विधौ विशेष एव प्रकारशब्दार्थ इत्याह गुणोपसर्जनद्रव्यवाचिनः केवलगुणवाचिनश्चेह गृह्यन्ते । शुक्लशुक्ल

रूपम् । शुक्लशुक्लः पटः । ननु प्रकारे सर्वेषां गुणवचनत्वाद् गुणवच-नग्रहणानर्थक्यम् । तत्सामर्थ्यान्मुख्यवृत्त्या गुणपराणामेव द्वित्वम् । नत्वन्येषामित्याकरः । तेन सिंहो माणवक इत्यादौ न द्वित्वम् । नव नवं प्रीतिरहो करोतीत्यत्र तु वीप्सायां द्वित्वम् । अनेन तु द्वित्वे सुब्लुक् स्यात् । यथा नवनवा वनवायुभिरादद इति पुंवद्भावः । कथं भीतभीत इव शीतमयूख इति भारविः । इव शब्देन सादृश्यस्योक्ततया इह प्रकारे द्वित्वायोगात् । भीतेभ्यो भीत इति कथं चिद्व्याख्येयम् । तेनातिभीत इति फलितम् । यत्त आधिक्ये द्वे इति वार्तिकेन भीतभीतादौ द्वित्वमिति दुर्घटादिभिरुक्तम् । तदत्तिरभसोक्तिमात्रम् । तादृशवचनानुपलम्भात् । कथं खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्येति मेघदूतः । एकस्यापि खेदावस्थासु क्षयावस्थासु च भेदं परिकल्प्य वीप्सा बोध्या । अथ कथं मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वामिति मेघदूतः । मन्दमन्दमुदितः प्रययौ खमितिवल्लुक् प्राप्तेः वीप्सार्थस्य चासम्भवादिति चेत्सत्यम् । एकं मन्दपदमतिशयलक्षकं कमलानि कमलानीतिवत् । आनुपूर्व्ये द्वे वाच्ये ॥ * ॥ एकस्यैकमेव मूलमितरेषां तूपरि संनिवेशापेक्षो गौणो मूलव्यपदेशः । न चैकरूपं भागानां स्थौल्यम् । किन्तु यथामूलमुपचीयते स्थौल्यम् । एकजातीयानां पदार्थानामेकरूपगुणाद्यन्वये च वीप्सेति वाप्साभावादारम्भः । मूले मूले स्थूलः ॥ मूले मूले पथि विटपिनामित्यादौ तु वीप्सायामेव द्वित्वम् ॥ स्वार्थेऽवधार्यमाणेनेकस्मिन् द्वे भवत इति वक्तव्यम् ॥ * ॥ अस्मात्कार्षापणादिह भवद्भ्यां माषं माषं देहि । स्वार्थे एतद्द्विर्वचनं न तु वीप्सा-

याम् । अनेकमाषसमुदायः कार्षापणः । अत्र हि द्वावेव माषौ दीयेते । न तु सर्वे कार्षापणसम्बन्धिनो माषाः । वीप्सायां च ग्रामो ग्रामो रमणीय इत्यादौ सन्निहितस्यार्थस्य न कस्यचिद्वर्जन-मस्ति । इह तु वर्जनमस्तीति वीप्साभावादारम्भः । न चात्रैकशेष-प्रसक्तिः । भिन्नार्थत्वात् । तथाहि । इह । भवद्भ्यां माषौ देही-त्युक्ते एकैकं देहीत्यर्थो न गम्यते । किन्तु प्रत्येकं माषद्वयं देहीति माषं माषं देहीति तूक्ते एकैकदानप्रतीतिः । अनवधार्यमाणे किम् । अस्मात्कार्षापणादिह भवद्भ्यां माषं देहि माषौ माषांश्च देहि । अत्र यथेष्टदाने तात्पर्यादवधारणाभावः । अनेकास्मिन्किम् । अस्मा-त्कार्षापणादिह भवद्भ्यां माषं देहि । माषमेव देहीत्यत्र तात्पर्यादु-पावधारणमस्ति । आदरेण भये । च प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः । यावद्भिः शब्दैः संबोध्योऽर्थमवगच्छति तावतां प्रयोक्त-व्यत्वात् ॥ सर्पः २ ॥ बुध्यस्व २ । सर्पः ४ । बुध्यस्व३ । क्रियास-मभिहारे च लुनीहि लुनीहि इत्येवायं लुनाति । नित्यवीप्सयो-रिति सिद्धे भृशार्थे द्वित्वार्थमिदम् । पौनः पुन्येऽपि लोटा सह समु-च्चित्य द्योतकतां लब्धुं वा ॥ आभीक्ष्ण्ये द्वे भवत इति वक्त-व्यम् ॥ * ॥ भुक्त्वा भुक्त्वा व्रजति । भोजं भोजं व्रजति । नित्यवीप्सयोरिति क्रियासमभिहारे इति वा सिद्धमत्र द्वित्वमित्या-हुः ॥ डाचि बहुलं द्वे भवत इति वक्तव्यम् ॥ * ॥ पटपटाकरोति पटपटायते । डाचीति विषयसप्तमीयम् । तेनानुत्पन्ने एव डाच्यकृत-टिलोपस्य पटदित्यादेर्द्विर्वचनम् । ततोऽव्यक्तानुकरणादिति डाच् । ततष्टिलोपः । ततो नित्यमाम्रेडिते डाचीति तकारपकारयोः पररूपं पकारः । यदि तु डाज्विधावनेकाच इत्येव सूच्यते । तदा डाचीति

परस्परमप्येव द्वित्वे सुवचेत्यवधेयम् ॥ बहुलोक्तेरव्यक्तानुकरणाड-न्यस्य डाचि न द्वित्वम् ॥ द्वितीयाकरोति । तृतीयाकरोति । शंबाकरोति ॥ पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम् ॥ * ॥ पूर्वं पूर्वं पुष्प्यति । प्रथमं प्रथमं पच्यते । भिन्नार्थत्वात् द्विर्वचनेनातिशायिको न बाध्यते इत्याहुः । तथाहि । पूर्वतरं भुङ्क्ते इत्युक्ते किमात्मसाध्यक्रियान्तरापेक्षो भोजनस्य पूर्वत्वातिशयोऽथ भोक्त्रन्तरसाध्यभोजनापेक्ष इति सन्देहः । पूर्वं पूर्वं भुंक्ते इत्यस्मात्तु भोक्तृभ्य अन्येभ्यः पूर्वं भुङ्क्ते इत्यर्थः प्रतीयते । एवं पूर्वतरं पुष्प्यतीत्युक्ते किमात्मनिष्ठकिसलयितताद्यपेक्षः पुष्पितत्वस्य पूर्वत्वातिशयोऽथान्यनिष्ठपुष्पितत्वापेक्ष इति सन्देहः । पूर्वं पूर्वं पुष्प्यतीत्यस्मात्तु पुष्पितृभ्य अन्येभ्यः पूर्वं पुष्प्यतीत्यर्थः प्रतीयते । अत एवाद्यादिविवक्षायामिति केचित्पठन्ति । आदेरादिविवक्षायामित्यर्थः । यत्त्विदं वचनं नावश्यकम् । एकस्य पूर्वशब्दस्यातिशयलक्षणयाप्युपपत्तेरिति तन्न । लक्षणया सिद्धवचनप्रत्याख्यानस्यायुक्तत्वात् । डतरडतमयोः समसम्प्रधारणायां स्त्रीनिगदभावे द्वे भवत इति वक्तव्यम् ॥ स्त्रीशब्देन स्त्रीलिङ्गः शब्दः निगद्यतेऽसौ निगदः । नौगदेत्यप् । स्त्रिया निगदः स चासौ भावः भूतिः ऋद्धिः सम्पत् । आढ्यतेति । तत्र च स्त्रीलिङ्गशब्दाभिधेये भावे वर्तमानयोर्डतरडतमान्तयोर्द्वे भवतः । आढ्यत्वादिना समेन तुल्येन गुणेन सम्प्रधारणायां निरूपणायां विषये इत्यर्थः । उभाविमावाढ्यौ । कतरा कतरानयोराढ्यता । सर्वे इमे आढ्याः । कतमा कतमा एषामाढ्यता । उभाविमावाढ्यावित्युक्ते ऽनेकप्रकाराढ्यत्वसम्भवात्प्रतिपत्ता किं कृतमनयोराढ्यत्वमिति सन्दिहानः पृच्छति । कतरा कत-

रेति स्वार्थे चैतद्द्विर्वचनम्। डतरडतमाभ्यां स्त्रीनिगदभावाच्चा-न्यथापि दृश्यते इति वृत्तिः। उभाविमावाढ्यौ कोदृश्यनयो-राढ्यता। उभाविमावाढ्यौ। कतरः कतरोऽनयोर्विभवः॥ कर्मव्य-तिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्॥ * ॥ बहुलग्रहणा-दन्यपरयोर्न समासवत् इतरशब्दस्य तु नित्यम्॥ असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः॥ * ॥ अन्योन्यं विप्रा नमन्ति। अन्योन्यौ। अन्योन्यान्। अन्योन्येन कृतम्। अन्योन्यस्मै दत्त-मित्यादि। अन्योन्येषां पुष्करैरामृशन्त इति माघः। एवं परस्परम्। अत्र कस्कादित्वाद्विसर्जनीयस्य सः। इतरेतरं इतरेतरेणेत्यादि॥ स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वाच्यः॥ * ॥ अन्यो-न्याम्। अन्योन्यम्। इतरेतरामितरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः। अत्र केचित्। आमादेशो द्वितीयायां एव भाष्यादौ तथैवोदाहृतत्वात्। तेन स्त्रीनपुंसकयोरपि तृतीयादिषु पुंवदेव रूप-मित्याहुः। अन्ये तूदाहरणस्य दिङ्मात्रत्वात्सर्वविभक्तीनामादेश-माहुः॥

> द्वन्द्वये टाबभावः क्लीबे चाद्विरहः स्वमोः।
> समासे सोरलुक् चेति सिद्धं बाहुलकात्त्रयम्॥

तथाहि। अन्योन्यं परस्परमित्यत्र दलद्वये टाप् प्राप्तः न च सर्वनाम्नो वृत्तिमात्रे इति पुंवद्भावः। अन्यपरयोरसमासवद्भावात्। न च द्विर्वचनमेव वृत्तिः। यां यां प्रियां प्रैक्षत कातरेत्यादावतिप्रस-ङ्गात्। अन्योन्यमितरेतरमित्यत्र चाडुतरादिभ्य इत्यदड् प्राप्तः। अन्योन्यसंसक्तमहस्त्रियामम्। अन्योन्याश्रयः। परस्परानिषादु-

श्यम् । अनुगुपरस्परैरित्यादौ सोर्लुक् च प्राप्तः । सर्वं बाहुलकबलेन समाधेयम् । प्रकृतवार्तिकभाष्योदाहरणं स्त्रियामिति सूत्रे अन्यो-न्यसंश्रयत्वेतदिति भाष्यं चात्र प्रमाणमिति ॥

**अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् । ८ । १ । १३ ॥**

प्रियप्रियेण ददाति । प्रियेण वा । सुखसुखेन । सुखेन वा । द्विर्वचने कर्मधारयवद्भावात्सुब्लुक् पुनस्तदेव वचनम् । अतिप्रियमपि वस्तु अनायासेन ददातीत्यर्थः । अकृच्छ्रे किम् । प्रियः शत्रुः । सुखो रथः ।

**यथास्वे यथायथम् । ८ । १ । १४ ॥**

यथास्वमिति वीप्सायामव्ययीभावः । योऽयमात्मा । यच्चा-त्मीयं तद्यथास्वं तस्मिन्यथाशब्दस्य द्वे क्लीबत्वं च निपात्यते । यथायथं ज्ञाता यथास्वभावमित्यर्थः । यथात्मीयमिति वा ज्ञातेत्यस्य तृन्नन्तत्वात् षष्ठी न । तृचि तु यथायथस्य ज्ञातेत्येव ॥

**द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयो-गाभिव्यक्तिषु । ८ । १ । १५ ॥**

द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वञ्चोत्तरपदस्य नपुं-सकत्वं च निपात्यते सप्तस्वर्थेषु । तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम् । इतरे विषयभूताः । द्वन्द्वं मन्त्रयते । रहस्यमित्यर्थः । मर्यादा स्थित्यनतिक्रमः । आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ते माता पुत्रेण मिथुनं गच्छति । पौत्रेण प्रपौत्रेणापीति मर्यादार्थः । व्युत्क्र-मणंपृथगवस्थानम् । द्वन्द्वं व्युत्क्रान्ताः । द्विवर्गसम्बन्धेन पृथगवस्थिताः ।

द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति । द्वन्द्वं सङ्कर्षणवासुदेवौ अभिव्यक्तौ । साहचर्येणेत्यर्थः । योगविभागादन्यत्रापीष्यते । द्वन्द्वं युद्धान्यवर्तन्त ।

**पदस्य । ८ । १ । १६ ॥**

**पदात् । ८ । १ । १७ ॥**

**अनुदात्तं सर्वमपादादौ । ८ । १ । १८ ॥**

इत्यधिकृत्य ।

**आमन्त्रितस्य च । ८ । १ । १९ ॥**

पदात्परस्यापादादिस्थस्यामन्त्रितस्य सर्वस्यानुदात्तः स्यात् । प्रागुक्तस्य षाष्ठस्यामन्त्रिताद्युदात्तस्यापवादोऽयमाष्टमिक आमन्त्रित-निघातः । इमं मे गङ्गे यमुने सरस्वति । अपादादौ किम् । शुतुद्रि स्तोमम् ।

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयो-र्वान्नावौ । ८ । १ । २० ॥**

पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वा-न्नावौ स्तस्तौ चानुदात्तौ ॥

**बहुवचनस्य वस्नसौ । ८ । १ । २१ ॥**

उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः । वान्नावोरपवादः ॥

**तेमयावेकवचनस्य । ८ । १ । २२ ॥**

उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ॥

**त्वामौ द्वितीयायाः । ८ । १ । २३ ॥**

द्वितीयैकवचनान्तयोस्त्वा मा एतौ स्तः ॥

श्रीशस्त्वावतु मापीह दत्तात्ते मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ १ ॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ॥
सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥ २ ॥

पदात्परयोः किम् । वाक्यादौ मा भूत् । त्वां पातु मां पातु । अपादादौ किम् । वेदैरशेषैः संवेद्योऽस्मान् कृष्णः सर्वदावतु । स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेव । नेह । इति युष्मत्पुत्रो ब्रवीति । इत्यस्मत्पुत्रो ब्रवीति । समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः । वाक्यलक्षणञ्चैकतिङ्वाक्यमिति समर्थसूत्रे उक्तव्यम् । तेनेह न । ग्रथं दण्डोहरानेन । ओदनं पच तव भविष्यति । इह तु स्यादेव । नद्यास्तिष्ठति कूले । शालीनां ते ओदनं दास्यामीति । एते वान्नावादय आदेशा अनन्वादेशे वा वक्तव्याः । अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति । धाता तव भक्तोऽस्तीति वा । तस्मै ते नम इत्येव ॥

## न चवाहाहैवयुक्ते । ८ । १ । २४ ॥

चादिपञ्चकयोगे नैते आदेशाः स्युः । हरिस्त्वां मां च रक्षतु । कथं त्वां मां वा न रक्षेदित्यादि । युक्तग्रहणात्साक्षाद्योगेऽयं निषेधः । परम्परासम्बन्धे तु आदेशः स्यादेव । हरो हरिश्च मे स्वामी ॥

## पश्यार्थैश्चानालोचने । ८ । १ । २५ ॥

अचाक्षुषज्ञानार्थैर्धातुभिर्योगे एते आदेशा न स्युः । चेतसा त्वां समीक्षते । परम्परासम्बन्धेऽप्ययं निषेधः । भक्तस्तव रूपं ध्यायति । आलोचने तु भक्तस्त्वा पश्यति चक्षुषा ।

## सपूर्वायाः प्रथमाया विभाषा । ८ । १ । २६ ॥

विद्यमानपूर्वात्प्रथमान्तात्परयोरन्वादेशेऽप्येते आदेशा वा स्युः । भक्तस्त्वमप्यहम् । तेन हरिस्त्वां त्रायते स माम् । त्वा मेति वा ।

## तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः । ८ । १ । २७ ॥

तिङन्तात्पदाद्गोत्रादीन्यनुदात्तान्येतयोः । पचति गोत्रम् । गोत्रं स्वकुलं पीडयतीत्यर्थः । एवं हि कुत्सा भवति । पचति पचति गोत्रम् । अनेकार्थत्वात्करोत्यर्थे पचिः । विवाहादौ गोत्रं पुनः पुनः सुखाकरोतीत्यर्थः । एवं प्रवचनप्रहसनप्रकथनप्रत्यायनादयः कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणम् । तथाहि योगविभागः कार्यः । कुत्सनाभीक्ष्ण्ययोरिति । गोत्रादीनीति वर्तते । परिभाषेयम् । यानि कुत्सनाभीक्ष्ण्यविषयाणि तान्येवात्र शास्त्रे गोत्रादीनीत्यर्थः । यत्र गोत्रादिपदघटितवाक्येन कस्यचित्कुत्सा बोध्यते । क्रियागतमाभीक्ष्ण्यं वातानीति यावत् । तेनान्यत्रापि चर्चाचदिवेत्यादौ गोत्रादिग्रहणे कुत्सनादावेव कार्यं ज्ञेयम् । तिङः किम् । कुत्सितं गोत्रम् । गोत्रादीनि किम् । पचति पापम् । कुत्सेति किम् । खनति गोत्रं समेत्य कूपम् । गोत्रं समेत्य कूपं खनतीत्यर्थः ॥

## तिङ्ङतिङः । ८ । १ । २८ ॥

अतिङन्तात्पदात्परं तिङन्तं निहन्यते ॥ अग्निमीडे ॥ तिङ् किम् । नीलमुत्पलम् । अतिङः किम् । पचति भवति । पाककर्तृकम् भवनमर्थः । अयमभिप्रायः । आख्यातं सविशेषणं वाक्यम् ।

आख्यातमित्येकत्वं चाविवक्षितम् । अर्थैक्यादेकं वाक्यमित्यर्थं इति वार्तिककारस्तु एकतिङ्वाक्यमिति मन्यते ॥

न लुट् । ८ । १ । २९ ॥

लुडन्तं न निहन्यते । श्वः कर्ता ॥

निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् । ८ । १ । ३० ॥

एतैर्निपातैर्युक्तं तिङंतं नानुदात्तम् । यदादयो निपातत्वादाद्युदात्ताः । सर्वनाम्नो यच्छब्दस्य तु न ग्रहणम् ॥ यत्रयद्योः पृथक् ग्रहणात् ॥ यदादार्थे च हेतौ च विचारे यदि चेच्चणः ॥

हंत हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥

कच्चित्प्रश्ने निषेधे च प्रशंसायां कुवित् स्मृतः ॥

नेन्निषेधे । यत्रेत्याधारे । यदग्ने स्यामहं त्वम् । युवा यदी कृथः । हंत करोति । कुविदङ्ग आसन् । नेद्देवमायुनजन्नच देवाः ॥ युनजन्निति लेटि रूपम् । स चेद्भुङ्क्ते । चणिति चेदर्थे णित् । समुच्चयादौ त्वणित् । इन्द्रश्च मृलयाति नः । इन्द्रश्चेदस्मान्सुखयेदित्यर्थः । अचित्तिभिश्चकृमा कच्चित् । यद्याप्यचेतैरेव परभूतैर्योगे निषेधो नान्यैरित्यर्थकयद्वितुपरमिति वक्ष्यमाणनियमान्निषेधो न प्राप्नोति तथापि छान्दसत्वेनात्र नियमाप्रवृत्तिरित्याहुः । पुत्रासो-यत्र पितरो भवन्ति । निपातैः किम् । यत्कूजति शकटम् । इणः शतरि रूपम् । ननु प्रतिपदोक्तत्वाद्यदादिभिर्निपातैः साहचर्याच्च निपात एव ग्रहीष्यते । सत्यम् । अत्र प्रकरणे क्वचिन्न्यायाप्रवृत्तिज्ञापनार्थत्वात् तेन यावद्यथाभ्यामिति सूत्रे वत्वन्तस्याव्ययस्य च

यावच्छन्दस्य ग्रहणमिति स्पष्टमाकरे ॥ युक्तग्रहणं किम् । अन्यत्र साक्षादन्वितैरेतैः परंपरासंबद्धे मा भूत् । यत्र क्व च ते मनो दक्षं दधस उत्तरम् । यत्रेत्यस्योत्तरमित्यनेन साक्षात्संबन्धः । दध धारणे अनुदात्तेत् ॥

### नह प्रत्यारम्भे । ८ । ३१ ॥

नहेति निपातसमुदायो निषेधे वर्तते । पूर्वं भुङ्क्ष्वेत्युक्ते कर्तव्यतयोपन्यस्तस्य भोजनादेरवज्ञानेऽवज्ञातुरुपालिप्सया पुनः क्रोधेनोपहासेन वा यत्र प्रतिषेधयुक्तं पृच्छ्यते स प्रत्यारम्भः । प्रति-षेधयुक्त आरम्भ इत्यर्थः । नहेत्यनेन युक्तं तिङन्तं नानुदात्तम् । न ह भोक्ष्यसे । प्रत्यारम्भे किम् । नह वैतस्मिन् लोके दक्षिणमिच्छति ।

### सत्यं प्रश्ने । ८ । १ । ३२ ॥

सत्ययुक्तं तिङन्तं नानुदात्तं प्रश्ने ॥ सत्यं भोक्ष्यसे । प्रश्ने किम् । सत्यमिद्वा उ तं वयमिन्द्रं स्तवाम ॥

### अङ्गाऽप्रातिलोम्ये । ८ । १ । ३३ ॥

अङ्गेत्यनेन युक्तं तिङन्तं नानुदात्तम् ॥ अङ्ग कुरु । अप्रा-तिलोम्ये किम् । अङ्ग कूजति वृषलः । अनभिप्रेतकर्मा कुर्वन् प्राति-लोमो भवति ॥

### हि च । ८ । १ । ३४ ॥

हियुक्तं तिङन्तं नानुदात्तम् । आहि ष्मा याति या हि रुहतम् । अवधारणे हि शब्दः ॥ स्मशब्दो निपातत्वादाद्युदात्तः ।

छान्दसे दीर्घत्वषत्वे । अप्रातिलोम्ये इत्येव । नेह । हि कूज मूषल । अथ:मर्थे हिशब्द: ॥

### छन्दस्यनेकमपि साकाङ्क्षम् । ८ । १ । ३५ ॥

हीत्यनेन युक्तं साकाङ्क्षमनेकमपि नानुदात्तम् । अपिना एकमपि । अनृतं हि मत्तो वदति पाप्मा नचैनं युनाति । हियंत इत्यर्थे । यतोऽयं मत्तोऽनृतं वदति अत: पाप्मा पापं न युनाति न व्याप्नोति । अनृतवदनदोषेण न युज्यते इत्यर्थ: । युञ् बन्धने इत्यस्य रूपं युनातीत्याहु: तिङन्तद्वयमपि न निहन्यते । अग्निर्हि पूर्वमुदजयत्तमिन्द्रो नूदजयत् । अथाद्यमजयदित्यट्स्वरेणाद्युदात्तम् । अपरं निहतमेव । अथ हेतुहेतुमद्भावद्योतको हिरित्यनेकमपि तिङन्तं हियुक्तम् । तत्र पूर्वेण सर्वस्य निघातनिषेधे प्राप्ते क्वचिदेकस्य क्वचिदनेकस्येत्येतदर्थमिदम् । छन्दसि दृष्टानुविधानाद्यथाप्रयोगं व्यवस्था ॥

### यावद्यथाभ्याम् । १८ । १ । ३६ ॥

आभ्यां योगे तिङन्तं नानुदात्तम् । यावद्भुङ्क्ते । सकलं भुङ्क्ते इत्यर्थ: । यथाचित्कण्वमावतम् । वतुर्वतस्यापि यावच्छब्दस्य ग्रहणात् यावदस्य नेद:सरोजनेभ्य: कृणवत् इत्यत्र कृणवदित्यस्य लेङन्तस्य निघातप्रतिषेध: सिद्ध: । परेणापि योगे भवति । देवदत्त: पचति यावत् देवदत्त: पचति यथेतिवृत्ति: ।

### पूजायां नानन्तरम् । ८ । १ । ३७ ॥

यावद्यथाभ्यां युक्तं तिङन्तं पूजायां न नानुदात्तम् । प्रतिषेधप्रतिषेधोऽयम् । यावत्पचति शोभनम् । यथा पचति शोभनम् । पूजायां

किम् । यावद्भुङ्क्ते । यथा भुङ्क्ते । अनन्तरं किम् । यावद्देवदत्तः पचति शोभनम् । पूर्वेणाच निघातः प्रतिषिध्यते ।

## उपसर्गव्यपेतं च । ८ । १ । ३८ ॥

पूर्वेणानन्तरमित्युक्तम् । उपसर्गव्यवधानार्थं वचनम् । यावत्प्रपचति शोभनम् । यथा प्रपचति शोभनम् । अनन्तरमित्येव । यावद्देवदत्तः प्रपचति शोभनम् ।

## तुपश्यपश्यताहैः पूजायाम् । ८ । १ । ३९ ॥

एभिर्युक्तं तिङन्तं न निहन्यते पूजायाम् । माणवकस्तु भुङ्क्ते शोभनम् । पश्य माणवको भुङ्क्ते शोभनम् । पश्यत माणवको भुङ्क्ते शोभनम् । आदह स्वधामनु पुनर्गर्भत्वमेरिरे । पूजायां किम् । पश्य मृगो धावति । तत्त्वकथनमेतत् । पूजायामिति वर्तमाने पुनः पूजाग्रहणमनन्तरग्रहणस्यानिघातनिषेधस्य चानुवृत्तिनिवृत्त्यर्थम् । निषेधानुवृत्तौ तु निपातैर्यद्यदीत्यस्य प्रतिषेधः संभाव्येत ॥

## अहो च । ८ । १ । ४० ॥

एतद्योगे तिङन्तं नानुदत्तं पूजायाम् । अहो देवदत्तः पचति शोभनम् । पृथग्योगकरणमुत्तरार्थम् ।

## शेषे विभाषा । ८ । १ । ४१ ॥

अहो इत्यनेन युक्तं तिङन्तं वानुदात्तमपूजायाम् । अहो कटं करिष्यति । असूयावचनमेतत् । शेषग्रहणं स्पष्टार्थम् । पूर्वेच चानुकृष्टत्वादेव पूजायामित्यस्य निवृत्तेर्योगविभागसामर्थ्याच्च । पूजायां नित्यं तदभावे विकल्प इति व्यवस्थोपपत्तेः ।

पुरा च परीप्सायाम् । ८ । १ । ४२ ॥

पुरेत्यनेन युक्तं तिङन्तं नानुदात्तं त्वरायाम् । अधीष्व मा-णवक पुरा विद्योतते विद्युत् । निकटागामिन्यत्र पुराशब्दः विद्योत-नात्प्रागध्ययनं समापयितुमतस्त्वदुपन्यासेन त्वरितमधीष्वेति गम्यते । परीप्सायां किम् । न तेनस्म पुराधीयते । चिरातीतेऽत्र पुरा ।

नन्वित्यनुज्ञैषणायाम् । ८ । १ । ४३ ॥

नन्वित्यनेन युक्तं तिङन्तं नानुदात्तमनुप्रार्थनायाम् । ननु गच्छामि भोः । अनुजानीहि मां गच्छन्तमित्यर्थः । अन्विति किम् । अकार्षीः कटं त्वम् । ननु करोमि । पृष्टप्रतिवचनमेतत् । नन्वित्य-स्यैकनिपातत्वं ज्ञापयितुमितिशब्दः ।

किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् । ८ । १ । ४४ ॥

क्रियाप्रश्ने वर्तमानेन किंशब्देन युक्तं तिङन्तं नानुदात्तम् । किं द्विजः पठत्याहोस्विद्गच्छति । क्रियेति किम् । साधनप्रश्ने मा भूत् । किं भक्तं पचत्यपूपान्वा । प्रश्ने किम् । किं पठति । क्षेपोऽयम् । अनुपसर्गं किम् । किं प्रपचति । उत प्रकरोति । अप्रतिषिद्धं किम् । किं द्विजो न पचति ।

लोपे विभाषा । ८ । १ । ४५ ॥

किमोऽप्रयोगे पूर्वविषये उक्तं वा । देवदत्तः पचत्याहोस्वि-त्पठति ।

एहि मन्ये प्रहासे लृट् । ८ । १ । ४६ ॥

एहि मन्ये इत्यनेन युक्तं लृडन्तं नानुदात्तं क्रीडायाम् । गत्यर्थलोटा लृडित्यनेनैव सिद्धे नियमार्थोऽयमारम्भः । एहि मन्ये युक्ते

प्रहासे एव नान्यत्रेति। एहि मन्ये भक्तं भोक्ष्यसे न हि भोक्ष्यसे भुक्तं तन्त्वतिथिभिः। प्रहासे किम्। एहि मन्ये ओदनं भोक्ष्यसे। अप्रहासेपि वैयधिकरण्यादुत्तमप्रयोगः। एहि त्वमोदनं भोक्ष्यसे इत्यहं मन्ये इत्यर्थः। भोक्ष्यसे इत्यस्य निघातो भवत्येव। उत्तमस्यातंत्र-त्वादेहि मन्यसे ओदनं भोक्ष्ये सुष्ठु मन्यसे इत्यत्रापि नियमादनि-घाताभाव इति केचिदाहुः।

## जात्वपूर्वम्। ८। १। ४७॥

अविद्यमानपूर्वं यज्जातु तेन युक्तं तिङन्तं नानुदात्तम्। जातु भोक्ष्यसे। अपूर्वं किम्। कटं जातु करिष्यति।

## किंवृत्तं च चिदुत्तरम्। ८। १। ४८॥

अविद्यमानपूर्वं चिदुत्तरं यत्किंवृत्तं तेन युक्तं तिङन्तं नानु-दात्तम्। विभक्त्यन्तं डतरडतमान्तं किमो रूपं किंवृत्तम्। कश्चिद् भुङ्क्ते। कतरश्चित् कतमश्चिद्वा। चिदुत्तरं किम्। को भुङ्क्ते। अपू-र्वमित्येव। रामः किंचित्पठति।

## आहो उताहो चाऽनन्तरम्। ८। १। ४९॥

आहो उताहो इत्याभ्यामपूर्वाभ्यां युक्तं तिङन्तं नानुदा-त्तम्। आहो उताहो वा भुङ्क्ते। अनन्तरमित्येव। शेषे विभाषां वक्ष्यति। अपूर्वेति किम्। देव आहो भुङ्क्ते।

## शेषे विभाषा। ८। १। ५०॥

आभ्यां युक्तं व्यवहितं तिङन्तं वानुदात्तम्। आहो देवः पचति। अपूर्वाभ्यामित्येव। तेनायमाहो देवो वर्षतीत्यत्र निहतमेव।

**गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् । ८ । १ । ५१ ॥**

गत्यर्थानां लोटा युक्तं तिङन्तं नानुदात्तम् यत्रैव कारके लोट् तत्रैव लृडपि चेत् । आगच्छ देव ग्रामं द्रक्ष्यसि । उह्यन्तां दत्तेन शालयः रामेण भोक्ष्यंते । गत्यर्थेति किम् । पच देव ओदनं भोक्ष्यसेऽन्नम् । लोटा किम् । आगच्छेर्देव ग्रामं द्रक्ष्यस्येनम् । लृट् किम् । आगच्छ देव ग्रामं पश्यस्येनम् । न चेदिति किम् । आगच्छ देव ग्रामं पिता ते ओदनो भोक्ष्यते । सर्वेति किम् । आगच्छ देव ग्रामं त्वं चाहं च द्रक्ष्याव एनमित्यत्रापि निघातनिषेधो यथा स्यात् । यल्लोडन्तस्य कारकं तच्चान्यच्च लृडन्तेनोच्यते ।

**लोट् च । ८ । १ । ५२ ॥**

लोडन्तं गत्यर्थलोटा युक्तं नानुदात्तम् । आगच्छ देव ग्रामं पश्य । गत्यर्थेति किम् । पच देवौदनं भुङ्क्ष्वैनम् । लोट् किम् । आगच्छ देव ग्रामं पश्यसि । न चेत्कारकं सर्वान्यदित्येव । आगच्छ देव ग्रामं पश्यत्वेनं रामः । सर्वग्रहणात्त्विह स्यादेव ग्रामं त्वं चाहं च पश्याव । योगविभाग उत्तरार्थः ॥

**विभाषितं सोपसर्गमनुत्तमम् । ८ । १ । ५३ ॥**

लोडन्तं गत्यर्थलोटा युक्तं वानुदात्तं न चेत्कारकं सर्वान्यत् । प्राप्तविभाषेयम् । आगच्छ देव ग्रामं प्रविश । सोपसर्गे किम् । आगच्छ देव ग्रामं पश्य । अनुत्तमं किम् । आगच्छानि देव ग्रामं प्रविशानि ।

**हन्त च । ८ । १ । ५४ ॥**

हन्तेत्यनेन युक्तमनुत्तमं लोडन्तं वानुदात्तम् । हन्त प्रविश ।

सोपसर्गमित्येव । हन्त कुरु । निपातैर्यदिति निघातप्रतिषेधः । अनुत्तमं किम् । हन्त प्रभु भजावहै ।

**आम एकान्तरमामन्त्रितमनन्तिके । ८ । १ । ५५ ।**

आमः परमेकपदान्तरितमामन्त्रितं नानुदात्तमनन्तिके यन्न सन्निहितं नापि दूरं तत्रेत्यर्थः । अत एवोदाहरणे प्लुतैकश्रुती न । आम् पचसि देवदत्त । आमन्त्रितत्वादाद्युदात्तत्वम् । आम् भो देवदत्तेत्यत्र नामन्त्रित इत्यविद्यमानवत्त्वनिषेधादेकान्तरत्वम् । आमः किम् । शाकं पचसि देवदत्त । एकान्तरं किम् । आम्प्रपचसि देवदत्त । आमन्त्रितं किम् । आम् पचति देवदत्तः । अनन्तिके किम् । आम् पचसि देवदत्त । अत्रान्तिकत्वान्नैकश्रुतिः । किन्तु निघात एव । भाष्येऽनन्तिकं दूरमिति पक्षांतरमप्युक्तम् तत्र सामर्थ्यादेकश्रुतेर्निषेधः । अन्यथा निघातस्यैकश्रुत्या बाधितत्वादिदं व्यर्थमेव स्यात् । अत एव तस्यादित उदात्तमर्द्धह्रस्वमित्यारभ्य नवसूत्र्याः स्वस्थानादुत्कर्षेण अ अ इत्यतः प्राक् स्थापनेनैकश्रुतेरसिद्धत्वेपि तदभावोपि बोध्यः । प्रकरणाच्च निघातस्यापि निषेधः । अन्यथैकश्रुतिप्रकरणे एव नाम एकांतरमिति वदेत् तेनैकश्रुतौ निषिद्धायां निघातोपि न भवति । प्लुतोदात्तत्वस्य तु नायं प्रतिषेधः । अस्मिन्पक्षे आम एकान्तरे ऐकश्रुत्यप्रतिषेध इति वार्तिकादिति दिक् ।

**यद्धितुपरं छन्दसि । ८ । १ । ५६ ॥**

तिङन्तं नानुदात्तम् । उदसृजो यदङ्गिरः । इन्द्रवो यामुशन्तिहि । आख्यास्यामि तु ते । निपातैर्यदिति हिचेति तुपश्येति च सिद्धे नियमार्थमिदम् । एतैरेव परभूतैर्योगे नान्यैरिति । जाये

स्वारोह।वेहि । एहीति गत्यर्थलोटा युक्तस्य लोडन्तस्य निघातो भवति ।

चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ।८।१।५७॥

एषु षट्सु परतस्तिङन्तं नानुदात्तम् । देवः पचति च न । देवः पचति चित् । देवः पचतीव । देवः पचति गोत्रम् । देवः पचतिकल्पम् । देवः पचति पचति । अगतेः किम् । देवः प्रपचति चन । अनेन गतिशब्देनोपसर्गस्यैव ग्रहणमिष्यते । नेह । शुक्लीकरोति चन । अत्र निघातः प्रतिषिध्यत एव । कुत्सनाभीक्ष्ण्ययोरेव गोत्रादीनीत्युक्तम् । नेह । सुखिकरोति गोत्रम् । अत्र निघात एव ।

चादिषु च । ८ । १ । ५८ ॥

न च वाहेति सूत्रनिर्दिष्टाश्चादय इह गृह्यन्ते । संनिकृष्टत्वात् । चवाहाहैवेषु परेषु तिङन्तं नानुदात्तम् । देवः पचति च खादति च । खादतीत्यस्य न निघातप्रसंगः । नानावाक्यत्वात् । समुच्चयविकल्पयोरनेकधर्मत्वात्परन्तद्युक्तिः । अगतेरित्येव । देवः प्रपचति च प्रखादति च । प्रथमस्य च वा योगे इति निघातः प्रतिषिध्यते । तत्रागतेरित्यस्य पूर्वसूत्रे चानुकृष्टत्वान्निवृत्तेः । द्वितीयं तु निहन्यत एव ।

चवायोगे प्रथमा । ८ । १ । ५९ ॥

चवेत्याभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता ॥ गाश्च चारयति वीणां च वादयति । इतो वा सातिमीमहे । उत्तरवाक्ययोरनुषंजनीयतिङन्तापेक्षयेयं प्राथमिकी । योगे किम् । पूर्वभूतयोरपि योगे निघातप्रतिषेधो यथा स्यात् । प्रथमाग्रहणं तु द्वितीयादेस्तिङन्तस्य

निषेधाभावार्थम् तथापि योगोऽस्त्येव । चवायोगो हि समुच्चये विकल्पे वा सति भवति सह्यनेकस्य धर्मः ।

## हेति क्षियायाम् । ८ । १ । ६० ॥

हयुक्ता प्रथमा तिङन्तविभक्तिर्नानुदात्ता धर्मव्यतिक्रमे । स्वयं ह रथेन याती ३ उपाध्यायं पदातिं गमयति । क्षियाशीरिति प्लुतः ।

## अहेति विनियोगे च । ८ । १ । ६१ ॥

अहयुक्ता प्रथमा तिङन्तविभक्तिर्नानुदात्ता नानाप्रयोजनके नियोगे क्षियायां च ॥ त्वमह ग्रामं गच्छ । त्वमह रथेनारण्यं गच्छ क्षियायाम् । स्वयमह रथेन याती ३ उपाध्यायं पदातिं नयति ।

## चाहलोप एवेत्यवधारणम् । ८ । १ । ६२ ॥

च अह एतयोर्लोपे प्रथमा तिङ्विभक्तिर्नानुदात्तेवेत्येतच्चेदवधारणार्थं प्रयुज्यते । देव एव ग्रामं गच्छतु देव एवारण्यं गच्छतु । ग्रामं चारण्यं च गच्छत्वित्यर्थः । देव एव ग्रामं गच्छतु । राम एवारण्यं गच्छतु । ग्रामं केवलं अरण्यं केवलं गच्छत्वित्यर्थः । इहाह लोपः स च केवलार्थः । समानकर्तृके चशब्दस्य लोपः । नानाकर्तृके त्वहशब्दस्य । अवधारणं किम् । देव क्वेव भोक्ष्यसे । देव क्वेव अध्येष्यसे । न क्वचिदित्यर्थः । अनवक्लृप्तावेवः ।

## चादिलोपे विभाषा । ८ । १ । ६३ ।

चवाहाहेवानां लोपे प्रथमा तिङ्विभक्तिर्वानुदात्ता । चलोपे शुक्ला व्रीहयो भवन्ति । श्वेता गा आज्याय दुहन्ति । समानकर्तृके चलोप इति नियमो ऽवधारणार्थैवशब्दप्रयोगे एव । न तु सर्वत्रेत्य-

स्त्यत्र चलोप इति पाक्षिको निघाताभावोऽत्र भवति । इन्द्र वाजेषु नोऽवेत्यत्र तु चलोपेऽपि अवेत्यस्य निघात एव । अस्य निषेधस्य वैकल्पिकत्वात् । अनन्तरनिघाताभावस्य नोदाहरणम् । वानीपि व्रीहिभिर्यजेत । यवैर्यजेत ॥

### वैवावेति च छन्दसि । ८ । १ । ६४ ॥

वै वाव इत्याभ्यां युक्ता प्रथमा तिङ्विभक्तिर्वानुदात्ता ॥ अहर्वै देवानामासीत् । रात्रिर्वा असुराणामासीत् । अयं वाव हस्त आसीत् । नेतर आसीत् । वै स्फुटार्थे अवधारणायां च वावेति प्रसिद्धौ स्फुटार्थे च ।

### एकान्याभ्यां समर्थाभ्याम् । ८ । १ । ६५ ॥

आभ्यां युक्ता प्रथमा तिङ्विभक्तिर्वानुदात्ता छन्दसि । अजामेकां जिन्वति । प्रजामेकां रक्षति । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति । समर्थाभ्यां किम् । एको देवानुपातिष्ठत् । एक इति संख्यापरं नान्यार्थम् ।

### यद्वृत्तान्नित्यम् । ८ । १ । ६६ ॥

इह यत्र पदे यच्छब्दस्तत्सर्वं गृह्यते न तु विभक्त्यन्तं डतरडतमन्तं च यदो रूपं तदन्ततः परं तिङन्तं नानुदात्तम् । यो भुङ्क्ते । यदध्यङ् वायुर्वाति । अत्र व्यवधानेऽपि कार्यं स्यात् ॥ वा याथाकाम्ये इति वक्तव्यम् ॥ * ॥ याथाकाम्यं यथेष्टं प्रवृत्तिदेशकालावनपेक्ष्य तत्र गम्यमाने वा निघातप्रतिषेधः । यत्र क्वचन यजते ॥

### पूजनात्पूजितमनुदात्तम् । ८ । १ । ६७ ॥

काष्ठादिभ्य: इति वक्तव्यम् काष्ठादयोऽद्भुतपर्याया: पूजनवचना भवन्ति । उत्तरसूत्रे तिङ्ग्रहणादिदं सुबन्तविषयम् । पूजनवचनेभ्य: काष्ठादिभ्य: पूजितवचनमनुदात्तम् । काष्ठाध्यापक: ॥ मलोपश्च वक्तव्य: ॥ * ॥ दारुणाध्यापक: । दारुणाभिरूपक: । अज्ञाताध्यापक: । अध्यापनमाभिरूप्यं च दारुणादिशब्देन विशेष्यते इति दारुणादिशब्दस्य क्रियाविशेषणत्वान्नपुंसकत्वं कर्मत्वं च यथा ग्रामं गत इत्यादौ गुणभूताया अपि क्रियाया: साधनेन योगस्तथाच विशेषणेनापीति । दारुणं यदध्यापनं तत्करोतीति बोधे णैअधिकारयत्वात्समासाभावान्मलोपो विधीयते । एवं च दारुणमध्यापक इति प्रयोगो नैव भवति । वृत्तिकारास्तु असमासे नैव मलोप इष्यते । केन तर्हि समासो भवति । मयूरव्यंसकादित्वात् । कस्मादिह न भवति । दारुणमध्यापक इति समासान्तोदात्तत्वापवाद एतत्समासे इष्यते । मलोपश्चेत्यनेनापि अयमेव विषय आख्यायते । यत्र विभक्तेरभावान्मकारो न श्रूयते तत्रानुदात्तत्वमितीत्याहु: ॥ पूजनादित्येव संबन्धिशब्दत्वात्पूजितग्रहणे सिद्धे पूजितग्रहणमनन्तरपूजितलाभार्थम् । एतदेव ज्ञापकमत्र प्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्यमाश्रीयते इति तेन पूर्वसूत्रे व्यवहितेऽपि कार्यसिद्धि: । पूजनात्किम् । दारुणाध्यापक: । दारुणसंज्ञक इत्यर्थ: । काष्ठादिभ्य: किम् । शोभनाध्यापक: ।

## सगतिरपि तिङ् ।८।१।६८॥

पूजनेभ्य: काष्ठादिभ्य: परं सगतिकमपि वाऽगतिकं च तिङन्तं पूजितमनुदात्तम् । यत्काष्ठं प्रपचति । यत्काष्ठं पचति । यद्दारुणं पचति । इह मलोपो न । पूर्वसूत्रसन्नियोगशिष्टत्वात्तस्य च सुबन्त-

विषयत्वस्योक्तत्वात् । एतदर्थमेवागतिकस्य निघातार्थमपिग्रहणम् । अनेनैवागतिकस्य निघाते क्रियमाणे तु मलोपः स्यात् । तिङ्ङतिङ इति निघातस्य निपातैर्यदिति निषेधे प्राप्ते विधिरयम् । सगतिरिति सह शब्दस्तुल्ययोगे । तेन गतिरपि निहन्यते । अत्रापि गतिग्रहणेना-सगतिग्रहणमिष्यते ॥ * ॥ नेह । यत्काष्ठं शुक्लीकरोतीति । यत्क्रियायुक्तादि वेत्यत्र भाष्ये स्पष्टम् ।

## कुत्सने च सुप्यगोत्रादौ । ८ । १ । ६९ ॥

इतः प्रभृति पदादित्यधिकारो निवृत्तः । कुत्सने च सुबन्ते परे सगतिरगतिरपि तिङनुदात्तः । पचति पूति । प्रपचति पूति । पचति मिथ्या । प्रपचति मिथ्या । पूतिशब्दः कुत्सन-वाची क्रियाविशेषणत्वान्नपुंसकत्वम् । कुत्सने किम् । प्रपचति शोभ-नम् । सुपि किम् । पचति क्लिश्नाति । पाकक्रियाकर्तृकः क्लेश इत्यर्थः । अगोत्रादौ किम् । पचति गोत्रम् ॥ क्रियाकुत्सने इति वाच्यम् ॥ * ॥ कर्तुः कुत्सने मा भूत् । पचति पूतिर्देवदत्तः ॥ पूतिश्चानुबन्ध इति वाच्यम् ॥ * ॥ तेनायं चकारानुबन्धत्वादन्तोदात्तः । अयं भावः । पूतिरयमिति सामानाधिकरण्यदर्शनात्पूतिशब्दो न क्तिन्न-न्तो नापि क्तिजन्तोऽसंज्ञात्वात्तस्मादव्युत्पन्नं प्रातिपदिकम् । तत्र प्रातिपदिकस्वरेणान्तोदात्तत्वे सिद्धे निघातनिमित्तस्यैव तस्यान्तो-दात्तत्वं यथा स्यादन्यत्र त्वाद्युदात्तत्वमिति वचनमित्याहुः । नन्वाद्युदात्तत्वं लक्षणाभावात्कथं स्यात् । एवं तर्हि पचेः क्तिचि क्तिबन्तो बाहुलकादुत्पाद्यः । तत एव गुणाभावोऽपि बोध्य इती-त्याहुः ॥ वा बह्वर्थमनुदात्तमितिवाच्यम् ॥ * ॥ पचन्ति पूति ।

यदि त्वत्र पदादित्यनुवर्तेत। देवदत्तो यत्पचति पूतीत्यत्रैव तिङन्तस्य निघातः स्यान्न तु पचति पूतीत्यत्र। इदानीं तु यत्पचतिपूतीत्यादावपीदं परत्वात्प्रतिषेधान्बाधते॥

## गतिर्गतौ। ८। १। ७०॥

अनुदात्तः। अभ्युद्धरति। अभिसंहरति। गतिः किम्। दत्तः प्रपचति। गतौ किम्। आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः।

## तिङि चोदात्तवति। ८। १। ७१॥

गतिरनुदात्तः। यत्प्रपचति। यच्छुक्लीकरोति। अत्र द्वि श्चित्त्वेऽपि चित्स्वरो येन नाप्राप्तिन्यायेन निपातादुदात्तत्वमेव बाधते न त्वेतम्। तिङ्ग्रहणमुदात्तवतः परिमाणार्थम्। अन्यथा हि यं प्रति गतिस्तत्र धाताववोदात्तवति स्यात्। इह तु प्रत्यये उदात्तवति न स्यात्। यत्प्रकरोतीति। उदात्तवति किम्। प्रपचति।

## आमन्त्रितं पूर्वमविद्यमानवत्। ८। १। ७२॥

स्पष्टम्। अग्ने तव देवास्मान्पाहि। अग्ने नय। अग्न इन्द्र वरुण। इह युष्मदस्मदोरादेशास्तिङन्तनिघात आमन्त्रितनिघातश्च न। सर्वदा रक्ष देव न इत्यत्र तु देवेत्यस्याविद्यमानवद्भावेऽपि ततः प्राचीनं रक्षेत्येतदाश्रित्यादेशः। एवमिमन्मे गङ्गे यमुने सरस्वतीति मन्त्रे यमुने इत्यादिभ्यः प्राचीनामन्त्रिताविद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्य सर्वेषां निघातः।

## नामन्त्रिते समानाधिकरणे सामान्यवचनम्। ८। १। ७३॥

विशेष्यं समानाधिकरणे विशेषणे आमन्त्रिते परे नाविद्यमानवत्स्यात्॥ हरे दयालो नः पाहि। अग्ने तेजस्विन्। अग्ने

चातः । सामान्यवचनं किम् । पर्यायेषु मा भूत् । अघ्न्ये देवि सरस्वति सामान्यवचनम् ।

विभाषितं विशेषवचने । ८ । १ । ७४ ॥

अत्र भाष्यकृता बहुवचनमिति पूरितम् । सामान्यवचनमिति च पूर्वसूत्रे योजितम् । आमन्त्रितान्ते विशेषणे परे पूर्वं बहुवचनान्तमविद्यमानवद्वा । देवीः षडुर्वीरुरु नः कृणोत । अत्र देवीनां विशेषणं षडिति । तस्मिन्परे देवीरित्यामन्त्रितं नाविद्यमानवत् । तेन षडित्यस्य निघातो वैकल्पिकः । देवाः शरण्याः । इह द्वितीयस्य निघातो वैकल्पिकः ॥

इत्योरम्भट्टेन श्रीधोंडभट्टविश्वरूपात्मजेन वैद्यनाथभट्टविश्वरूपापरनामधेयेन विरचितायां व्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ अष्टमस्याध्यायस्य प्रथमः पादः समाप्तः ॥



# अष्टमाऽध्यायस्य द्वितीयः पादः ।



## पूर्वत्रासिद्धम् । ८ । २ । १ ॥

आ आध्यायपरिसमाप्तेरधिकारोऽयम् । तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् । हर एहि । विष्ण इह । श्रिया उद्यतः । गुरा उत्कः । इह लोपः शाकल्यस्येति लोपशास्त्रस्यासिद्धत्वान्न स्वरसन्धिः । अमुष्मै । अमुष्मात् । इह मुत्वस्यासिद्धत्वात् स्मायादयो भवन्ति । मनोरथः । मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वं बाधित्वा परत्वाद्रोरीति लोपे प्राप्ते पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव ॥ गुडलिण्मान् । गुडलिहोऽस्य सन्तीति मतुप् । अत्र ढत्वस्यासिद्धत्वाज्झय इति वत्वं न भवतीति दिक् ॥

## नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति । ८ । २ । २ ॥

सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र । राजाश्व इत्यादौ । सुब्विधिशब्देन सुप्त्वव्याप्यधर्मावच्छिन्नोद्देश्यकविधेरेव ग्रहणम् । अन्यथा दण्डिष्वित्यादौ षत्वरूपसुब्विधावप्यसिद्धत्वविधानार्थत्वापत्त्या वैरूप्यापत्तेः । सुब्विधौ । राजभ्याम् । राजभ्यः । राजभिः । अत्र नलोपस्य नलोपः सुबित्यसिद्धत्वादात्वमेत्वमैस्त्वं च न भवति । स्वरविधौ । पञ्चार्मम् । अत्र दिक्संख्ये संज्ञायामिति समासे नलोपे कृते अवर्णान्तं पूर्वपदं जातमित्यर्मे चावर्णं द्व्यच् त्र्यजिति पूर्वपदाद्युदात्तत्वं प्राप्तं

नलोपस्यासिद्धत्वान्न भवति । संज्ञाविधौ पञ्च सप्त ब्राह्मण्य: । अत्र नलोपे कृतेऽपि ष्णान्ता षडिति षट्सञ्ज्ञां प्रति नलोप: सुप्स्वरेति नलोपस्यासिद्धत्वान्न षट्स्वस्रादिभ्य इति टाप् न भवति । कृति किम् । वृत्रहच्छत्रम् । छे चेति तुक् स्यादेव ।

## न मुने । ८ । २ । ३ ॥

नाभावे कर्तव्ये कृते च मुभावो नासिद्ध: स्यात् ॥ अमुना । कृतेपि नाभावे मुभावस्यासिद्धत्वनिषेधात्सुपिचेति दीर्घो न भवति ।

## उदात्तस्वरितयोर्यण: स्वरितोऽनुदात्तस्य ।८।२।४॥

उदात्तस्थाने स्वरितस्थाने च यो यण् तत: परस्यानुदात्तस्य स्वरित: स्यात् ॥ अभ्यभि हि । अभिरुपसर्गश्चाभिर्जेमित्युक्त: फिष इत्यन्तोदात्त: । नित्यवीप्सयोरिति द्वित्वम् । अनुदात्तं चेति परोऽनुदात्त: । पूर्वस्य यणि उदात्तयण: परत्वात्स्वरित: । स्वरितयण: । खलप्व्याशा खलं पुनातीति क्विप् । उपपदसमास: । कृदुत्तरप्रकृतिस्वरेणान्तोदात्तत्वम् ङौ परत: । ओ:सुपीति यणादेश: । तस्मात्परस्य ङे: सुप्त्वादनुदात्तस्योदात्तयणो हल्पूर्वादित्युदात्तत्वे प्राप्ते नोङ्धात्वोरिति निषिद्धेऽनेन स्वरितस्तस्य यणि तत: पराशाशब्दाद्याकारस्यानेन स्वरित: । आशाशब्द: आशाया अद्रिगाव्या चेदिति फिट्सूत्रेणान्तोदात्त: । आशाशब्दप्रथमाकारे जातस्यास्य स्वरितस्य त्रैपादिकत्वेनासिद्धत्वात् । शाशब्दाकारस्य शेषनिघातो न । नन्विकारस्यानिकयणं प्रति स्वरितस्यासिद्धत्वात्स्यानिन्येव यण् प्रवृत्त इति नास्य स्वरितयण: परत्वम् । न चोजढदित्यादौ

अन्तरङ्गत्वात् ठन्वादिषु कृतेषु हलशब्दबुध्या ठशब्दे द्वित्वं प्रवर्तते यथा तथात्र स्वरितबुद्ध्यभावेऽपि । वस्तुतः स्वरितस्यानिकयणः सत्वाददोषइति वाच्यम् । वाक्यसंस्कारपक्षे स्वरितयणोरेककालप्रवृत्तिकत्वेन तथा वक्तुमशक्यत्वात् । न च स्वरितयण इत्याश्रयात्सिद्धत्वम् । अतिप्रसङ्गात् । उदात्तादनुदात्तस्येति विहितस्यापि सिद्धत्वापत्तेः । तथा च प्रत्यग्निरित्यादावपि एतत्प्रवृत्त्यापत्तिः । न च नोदात्तस्वरितोदयमिति निषेधः । अनन्तरस्येति न्यायेनोदात्तादनुदात्तस्येति स्वरितस्यैव तेन निषेधात् । अन्यथा खलप्व्याशान्यग्निमित्यादावप्यस्य निषेधापत्तिः । अत एव तित्स्वरितं स्वरितो वानुदात्ते इत्यादीनां न निषेध इति चेन्न । योगविभागेन भाष्ये एव समाधानात् । उदात्तयणः । उक्तोर्थः । ततः स्वरितयणः । इह पूर्वसूत्रमनुवर्तते । उदात्तयण इत्येवं निर्वृत्तस्वरितस्यानिकयणः परस्येत्यर्थः । एवं चास्यैवाश्रयात्सिद्धत्वं नान्यस्येति न दोषः । यद्वा इह स्वरितग्रहणं न करिष्यते । खलप्व्याशा इत्यादावप्युदात्तयण परत्वादेव सिद्धम् । न च स्वरितयणा व्यवधानं स्वरविधौ व्यञ्जनस्याविद्यमानवत्वात् । न चैवं सत्यग्ने इत्यादौ वेदेत्यकारकारे पठ्यमानस्वरितासंगतिः । तत्र हि सन्तीतीकारस्योदात्तादनुदात्तस्येति स्वरितत्वम् । तत्र सन्तीति प्रत्ययस्वरेणाद्युदात्तं तेन शेषनिघातः । अग्ने इत्यामन्त्रितानुदात्तमिति वाच्यम् । सशब्दाकारमाश्रित्योदात्तादनुदात्तस्येत्येवाग्निशब्दाकारस्य स्वरितसिद्धेः । न च स्थानिवद्भावादचा व्यवधानम् । पूर्वत्रासिद्धीये तन्निषेधात् । एतेन द्वितीयपक्षोऽयुक्तः । स्थानिवद्भावेनाचा व्यवधानात् । व्यञ्जनस्य ह्यविद्यमानवत्त्वं नत्वच इति वृत्त्युक्तमपास्तम् । स्वरे कर्तव्ये

लोपाजादेश एव न स्थानिवदिति निगमस्तु स्वरविधौ नेति प्रतिपदोक्तस्यैव निषेधस्य न तु पूर्वत्रासिद्धीयत्वप्रयुक्तस्येत्याहुः । केचित्तु एकपदाश्रयत्वादन्तरङ्गं स्वरितपदद्वयाश्रयस्तु यण् बहिरङ्गः । ततोऽसिद्धं बहिरङ्गमन्तरङ्ग इति यणोऽसिद्धत्वात्पूर्वत्रेति निर्दिष्टविषयाभावाद्यणसिद्धत्वप्रसङ्गः स्वरितस्य नास्तीत्याहुः ॥ उदात्तस्वरितयोरिति किम् । वेदी आशा वेद्याशा । शार्ङ्गरव्याशा । अनुदात्तस्येति किम् । कुमार्यत्र । अत्रेत्ययमाद्युदात्तो लित्स्वरेण ।

## एकादेश उदात्तेनोदात्तः । ८ । २ ५ ॥

उदात्तेन सहैकादेश उदात्तः स्यात् । वोश्वाः क्वावर मरुतः । अवरशब्दः स्वाङ्गशिटामित्याद्युदात्तः । उदात्तयोरेव स्थानित्वे आन्तरतम्यादेव सिद्धम् । अन्यतरस्यानुदात्तत्वे स्वरितत्वे वा सिद्धं तूभयान्तर्यादिति न्यायेनान्तरतम्यात्स्वरिते प्राप्ते विधिरयम् । यदि तु तस्यादित इति सूत्रभाष्ये सुब्रह्मण्याशब्देन स्वरितान्तेनोमित्युदात्तस्यैकादेशः स्वरितस्तस्य न सुब्रह्मण्यामित्यनेनोदात्त इत्युक्तेरत्र सूत्रे ऽनुदात्तस्येत्यस्यानुवृत्तिर्लभ्यते इत्युच्यते । तदा क्वावरमिति बह्वृचानामुदात्तपाठश्छान्दसत्वाद्बोध्य इत्याहुः उदात्तेनेति किम् । पचन्ति । लसार्वधातुकानुदात्तत्वे कृते द्वयोरनुदात्तयोरयमेकादेशः ॥

## स्वरितो वानुदात्ते पदादौ । ८ । २ । ६ ॥

अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात् । पक्षे पूर्वसूत्रेणोदात्तः । वीऽदं ज्योतिर्हृदये । विर्निपातत्वादाद्युदात्तः । इदम्शब्दः फिट्स्वरेणान्तोदात्तः । अस्य श्लोको

दिवीयते। दिवीति विभक्तिरूपिदं पदादीत्युदात्ता। ईङो दिवा-
देरीयत इति तिङ इति निहतम्। व्यवस्थितविभाषात्वाद्ध्रस्वे-
कारयोः स्वरितः। दीर्घप्रवेशे तूदात्तः। किन्तु यद्यपि गाङ्गेऽनूपे
इत्यत्रायमेकादेशः स्वरितो वेति भाष्ये उक्तम्। गङ्गाया इदमिति
तस्येदमित्यण्। प्रत्ययस्वरेणान्तोदात्तः। ततो ङिः सुप्त्वादनु-
दात्तः। तयोरेकादेश उदात्तः। अपोऽनुगतमनूपमिति प्रादिसमासः।
तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरे प्राप्ते अनोरप्रधानकनीयसी
इत्युत्तरपदमन्तोदात्तं शेषनिघातस्तथापि वेदे एङः पदान्तादिति
पूर्वरूपे स्वरित एव। तेऽवदन्। सोऽयमागात्। उक्तं च प्रातिशाख्ये

इकारयोश्च प्रश्लेषे क्षैप्राभिनिहतेषु च।
उदात्तपूर्वरूपेषु शाकल्यस्यैवमाचरेदिति॥

ह्रस्वेकारयोः प्रश्लेषे क्षैप्रसन्धिषु चाभिनिहतसन्धिषु च अविशेषेण
उदात्तपूर्वरूपेषु अनुदात्तोत्तररूपेषु शाकल्यस्य मते स्वरितः कार्य इति
तदर्थः। एवमिति स्वरितनिर्देशः। सुचीव घृतं यो जान्विन्द्रते हरी ते
वर्धन्तस्वत वस इति क्रमेणोदाहरणानीति तद्भाष्यकृतः। सन्धि-
विशेषस्य क्षैप्र इति संज्ञा तद्विशेषस्याभिनिहितेति प्रातिशाख्ये। द्विती-
यपटले स्थितं हि एङःपदान्तादित्यादिरभिनिहितसन्धिः। ह्रस्वद्व-
यस्यानिकसवर्णदीर्घगुणवृद्ध्यादिः प्रश्लिष्टसन्धिः। दीर्घद्वयस्यानिक-
सवर्णदीर्घयणादिः क्षैप्रसन्धिरित्युक्तम्। स्वरितग्रहणं शक्यमकर्तुम्।
वानुदात्ते पदादावित्येवोदात्ते विकल्पिते आन्तर्यतः पक्षे स्वरित-
सिद्धेः। न चानेन स्वरितेन वर्ज्यमानता मा भूदित्यर्थं स्वरितविधा-
नमिति वाच्यम्। पदद्वयाश्रयत्वेनैकादेशस्य बहिरङ्गासिद्धत्वेनान्त-
र्यत आगतस्य तदाश्रितस्य स्वरितस्यापि बहिरङ्गासिद्धत्वेन

तेन सहैकपदविषयस्वरं परिगार्थ्यानुदात्तम्पदमित्यस्यैकवाक्यताया अभावेनैव वर्ज्यमानताया अभावसिद्धेः अतएव क्रियमाणेपि स्वरितग्रहणे कन्यानूपे इत्यत्र वर्ज्यमानता न । कन्याशब्दः कन्याराजन्यमनुष्याणामन्त इत्यन्तस्वरितः। ततः स्वरितानुदात्तयोरेकादेशः आंतर्यतः स्वरित इति स्पष्टं भाष्यकैयटयोः । अनुदात्ते किम् । देवदत्तोऽत्र । पदादौ किम् । वृक्षौ ॥ एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्यः । वृक्षेयिदम् । एकादेशस्वरस्य सिद्धत्वादान्तर्यत उदात्त अयादेशो भवति । गाङ्गे ऽनूपे गांगे । इत्येकादेशस्वरस्य सिद्धत्वादेङः पदान्तादित्येकादेशः स्वरितो वेति पक्षे स्वरितः । अन्यथैकादेशं प्रत्युदात्तत्वासिद्धत्वे आन्तर्यकृतस्वरितबुद्धिसत्वात्स्वरितानुदात्तयोरेकादेशः स्वरित एव स्यात् । न तु कदाचिदुदात्तः । तुदती । एकादेशस्वरस्य सिद्धत्वात् शतुरनुमो नद्यजादीत्यन्तोदात्तान्ङीप्येव स्वरो भवति । तुदन्ति । एकादेशस्वरस्य सिद्धत्वाच्छेषनिघातो भवति । ब्राह्मणास्तुदन्ति । एकादेशस्वरस्य सिद्धत्वात्तिङ्ङतिङ इति निघातः सिध्यति अन्यथा तस्यासिद्धत्वात्पूर्वं निघाते पश्चादेकादेशस्योदात्तत्वं जायमानं प्रयोगे श्रूयते । अन्तरङ्ग इत्युक्तेः । प्रपचतीतीत्यादावेकादेशस्य पूर्वान्तवत्वात्तिङि चोदात्तवतीति न । सोमसुत्पचतीतीत्यादावीकारस्य तिङ्ङतिङ इति निघातश्च न । एतच्च वचनं शतुरनुम इत्यनुम् प्रतिषेधाज्ज्ञापकात्सिद्धम् । अनुम्प्रतिषेधो हि तुदन्ती इत्यादावुदात्ताभावार्थः । यद्येकादेशस्वरोऽसिद्धः स्यात्तदा तद्वैयर्थ्यं स्पष्टमेव ॥ संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्यः ॥ हरिवो मेदिनं त्वा ॥ हरिशब्दान्मतुपि छन्दसीर इति वत्वे नुमि संयोगांतलोपे मतुवसोरिति रुत्वे उत्वे गुणः ॥ सिज्लोप एकादेशे सिद्धो वक्तव्यः ॥

अलावीत् । इट ईटीति सिज्लोपस्य सिद्धत्वात्सवर्णदीर्घो भवति । षत्वादेशे किम् । अलविढ्वम् । इटि कर्तव्ये धिचेति सलोपोऽसिद्ध एव । निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः * ॥ वृक्णः । वृक्णवान् । निष्ठादेशस्य सिद्धत्वाज्झल्परत्वाभावाद्व्रश्चेति षत्वं न भवति संयोगादिलोपकुत्वे तु भवत एव । स्वरप्रत्यययो-रुदाहरणम् । क्षीबः । क्षीबिकः । अनुपसर्गात्फुल्लक्षीबेति निपा-तितः क्षीबशब्दः । अत्र निष्ठाच द्व्यजनादिति निष्ठान्तस्य द्व्यचो वि-धीयमानमाद्युदात्तत्वं नोङ्धात्वोरिति च न प्राप्नोति । निष्ठादेशस्य सिद्ध-त्वाद्भवति । इदं चेट्सहितस्य निष्ठातकारस्य लोपो निपात्यत इति पक्षे यदा तु तकारमात्रस्य लोपो निपात्यते तदा नेदं प्रयोजन-मिति व्यर्थं तयोर्ग्रहणम् । तदेव चेड्विधिग्रहणं क्षीबे कृशे उल्लाघे चेड्व्यावृत्त्यर्थम् ॥ प्लुतविकारस्तुग्विधौ सिद्धो वक्तव्यः ॥ * ॥ अग्ना३ इ च्छत्रम् । पटा३ उ च्छत्रम् । प्लुतविकारस्य सिद्धत्वाच्छे चेति तुग्भवति । प्लुतविकारस्य सिद्धत्वेऽपि प्लुतस्य सिद्धत्वाभावाद-ग्निची इत् सोम सूर्इत् इत्यत्र ह्रस्वस्य पितीति तुग्भवत्येव ॥ श्चुत्वं धुटि सिद्धं वाच्यम् ॥ * ॥ अटतीत्यट् श्चोतति इह धुट् न । श्चोततिरुपदेशे सादिः । अत एव श्चुत्वस्य धुटि सिद्धत्वेऽपि तुक्यसिद्धत्वात्सन् श्चोततीत्यत्र शितुग्न भवति ॥

## नलोपः प्रातिपदिकान्तस्य । ८ । २ । ७ ॥

पदस्येति वर्तते । नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे । प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः स्यात् ॥ राजा । राजभ्याम् । राजभिः । राजत्वम् । राजता । राजतरः । राजतमः ।

प्रातिपदिकग्रहणं किम् । अहन् । पदस्य किम् । राजानौ । राजानः ॥

## न ङिसंबुद्ध्योः । ८ । २ । ८ ॥

नस्य लोपो न स्यान्ङौ सम्बुद्धौ च । ङौ तु छन्दस्युदाहरणम् । सुपां सुलुगिति ङेर्लुक् । निषेधसामर्थ्यान्प्रत्ययलक्षणम् । परमे व्योमन् । संबुद्धौ । हे राजन् ॥ ङावुत्तरपदे प्रतिषेधो वक्तव्यः ॥ * ॥ चर्मणि तिला अस्य चर्मतिलः । ब्रह्मनिष्ठः । संबुद्धौ नपुंसकानां नलोपो वा वक्तव्यः ॥ हे ब्रह्म । हे ब्रह्मन् ॥

## मादुपधायाश्च मतोर्वोऽयवादिभ्यः । ८ । २ । ९ ॥

मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जात्परस्य पदावयवस्य मतोर्मस्य वः स्यात् ॥ किम्वान् । ज्ञानवान् । विद्यावान् । लक्ष्मीवान् । लक्ष्मीवन्तौ । यशस्वान् । भास्वान् । यवादेस्तु यवमान् । भूमिमान् । मादुपधायाः किम् । अग्निमान् । नृमतोऽपत्य नामेत इत्यत्र त्ववर्णोपधत्वेपि वृद्धेर्बहिरङ्गासिद्धत्वान्न भवति ॥

## झयः । ८ । २ । १० ॥

झयन्तान्मतोर्मस्य वः स्यात् । अपदान्तत्वान्न जश्त्वम् । विद्युत्वान् । उदश्वित्वान् । मरुत्वान् । दृषद्वान् ॥

## संज्ञायाम् । ८ । २ । ११ ॥

मतोर्मस्य वः । अहीवती । मुनीवती ।

## आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती । ८ । २ । १२ ॥

एते षट् संज्ञायां निपात्यन्ते । आसन्नशब्दस्यासन्दीभावः ।

आसन्दीवान्ग्रामः । अन्यत्रासन्नवान् । अस्थिशब्दस्याष्ठीभावः । अष्ठीवान् शरीरैकदेशः । अस्थिमानन्यत्र । चक्रशब्दस्य चक्रीभावः । चक्रीवान्नाम राजा । चक्रवानन्यत्र । कक्ष्यायाः सम्प्रसारणम् । कक्षीवान्नाम ऋषिः कक्ष्यावानन्यत्र । लवणशब्दस्य रुमण्भावः । रुमण्वान्नाम पर्वतः । लवणवानन्यत्र । चर्मणो नलोपाभावो णत्वं च । चर्मण्वती नाम नदी । चर्मवत्यन्यत्र ।

## उदन्वानुदधौ च । ८ । २ । १३ ॥

उदकस्य उदन्भावो मतौ उदधौ च संज्ञायां च । उदन्वान्समुद्रः ऋषिश्च ।

## राजन्वान् सौराज्ये । ८ । २ । १४ ॥

राजन्वती भूः । राजवानन्यत्र ।

## छन्दसीरः । ८ । २ । १५ ॥

इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः स्यात् ॥ हरिवते हर्यश्वाय गीर्वान् ॥ बहुलमिति वक्तव्यम् ॥ * ॥ नेह सप्तर्षिमन्तम् । पृथीवीमन्तम् ।

## अनो नुट् । ८ । २ । १६ ॥

अन्नन्तान्मतोर्नुट् स्यात् छन्दसि । अक्षण्वन्तः । अस्थन्वन्तं यदनस्था । अस्थिदधीत्यत्र छन्दस्यपि दृश्यते इत्यनङ् । वत्वदृष्ट्या नुटोऽसिद्धत्वान्मतोर्वत्वम् । नुटस्तु निर्दिश्यमानत्वाभावादपि न ।

## नाद्घस्य । ८ । २ । १७ ॥

नान्तात्परस्य घस्य नुट् छन्दसि । सुपथिन्तरः । दस्युह-

न्तमः ॥ भूरिदाव्नस्तुड् वक्तव्यः ॥ * ॥ भूरिदावत्तराजनः । ईद्रथिनः । रथीतरः । रथीतमः । रथीनां नुडपवाद ईकारो विधीयते स च नलोपे कृते इकारस्य विधेयः यदि तु नलोपापवादो नकारस्य स्थाने विधीयेत तदा तस्यासिद्धत्वादेकादेशो न स्यात् ॥

## कृपो रो लः । ८ । २ । १८ ॥

कृप उ इति छेदः । कृपेति लुप्तषष्ठीकम् । तच्चावर्तते । कृपेर्यो रेफस्तस्य लः स्यात् । कृपेरृकारस्यावयवो यो रः रेफसदृशस्तस्य च लकारसदृशः स्यात् ॥ कल्पते । चक्लृपे । अचीक्लृपत् । चलीक्लृप्यते ॥ कृपणादीनां प्रतिषेधो वक्तव्यः ॥ * ॥ कृपणः । कृपाणः । कृपा । कृपीटम् ॥ बालमूललघ्वलमङ्गुलीनां वा लो रमापद्यत इति वक्तव्यम् ॥ * ॥ बालः । बारः । मूलम् । मूरम् । लघुः । रघुः । अलम् । अरम् । अङ्गुलिः । अङ्गुरिः । संज्ञाछन्दसोर्वा कपिलकादीनां रस्य लो वक्तव्यः ॥ * ॥ कपिलकाः । कपिरकाः । तिल्पिलिकम् । तिपिरिकम् । कल्मषम् । कर्मषम् । लोमानि । रोमाणि । पांसुलम् । पांसुरम् । कल्म । कर्म । शुक्लः । शुक्रः ।

## उपसर्गस्यायतौ । ८ । २ । १९ ॥

अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् ॥ प्लायते । पलायते । पल्ययते । निस्दुसोरुत्वस्यासिद्धत्वान्न लत्वम् । निरयते दुरयते । निर्दुरोस्तु निलयते । दुलयते । प्रत्यय इति त्विणो रूपम् ।

## ग्रो यङि । ८ । २ । २० ॥

गिरते रेफस्य लत्वं स्याद्यङि । गर्हितं गिरति जेगिल्यते । यङि किम् । गीर्यते ।

## अचि विभाषा । ८ । २ । २१ ॥

गिरतेरेफस्य लत्वं वा स्यादजादौ । गिरति । गिलति । निगाल्यते । निगार्यते । व्यवस्थितविभाषेयम् । तेन प्राण्यङ्गे गल इति नित्यं गर इति विषे नैव ।

## परेश्च घाङ्कयोः । ८ । २ । २२ ॥

परे रेफस्य लो वा स्याद्घशब्दे अङ्कशब्दे च । पलिघः । परिघः । पल्यङ्कः । पर्यङ्कः । इह तरप्तमपौ घ इति कृत्रिमस्य न ग्रहणम् । व्याख्यानात् ॥ योगे चेति वक्तव्यम् ॥ * ॥ परियोगः । पलियोगः ॥ सञीति प्रकृत्य लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि वक्तव्यानि ॥ * ॥ सञिति सनः सकारमारभ्य आ महिङो ङकारेण प्रत्याहारः । गिरौ । गिरः इत्यत्राचि विभाषेति लत्वं न पयो धावतीत्यत्र धिचेति सलोपो न । द्विष्टरां द्वौ वादौ द्विः सुच्प्रत्ययः । परिपूर्णत्वाद्द्वारद्वयस्य प्रकर्षप्रत्ययः । तदन्तात्किमेत्तिङव्ययेत्याम् प्रत्ययः । अत्र ह्रस्वादङ्गादिति सुचो लोपो न । दृषत्स्थानमित्यत्र झलो झलीति सलोपो न । काष्ठशक्स्थातेत्यत्र स्कोरिति कलोपो न । कुञ्चेत्यत्र चोः कुः झलीति जकारस्य कुत्वं न । धुर्य इत्यत्र हलि चेति दीर्घो न । एतत्प्रयोजनानामन्यथासिद्धिस्तु भाष्यकैयटयोः स्पष्टा ॥

## संयोगान्तस्य लोपः । ८ । २ । २३ ॥

संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात् ॥ गोमान् । यवमान् । श्रेयान् । भूयानित्यत्र तु रुत्वं परमप्यसिद्धत्वात्संयोगान्तलोपं न बाधते । जश्त्वे हि नाप्राप्ते तदारभ्यते इति तस्य बाधनं

भवति । संयोगान्तस्य किम् । यशः । पयः ॥ संयोगान्तलोपे संयोगादिलोपे च यणः प्रतिषेधो वाच्यः ॥ * ॥ दध्यत्र । मध्वत्र । वाक्यर्थम् । वास्यर्थम् । न वा झलो लोपात् झलोझलीत्यतो झल्-ग्रहणस्योहापकर्षेण षष्ठ्या विपरिणामेन च यणो लोपाभावः । स्कोरित्यत्रापि पञ्चम्यन्तानुवृत्त्या झलः पूर्वयोः स्कोर्लोपविधानाद्यणपूर्वयोर्लोपाभावः । बहिरङ्गलक्षणत्वाद्वा एकपदाश्रयेन्तरङ्गे लोपे कर्तव्ये पदद्वयाश्रयस्य बहिरङ्गस्य यणोऽसिद्धत्वाल्लोपाभावः ।

## रात्सस्य । ८ । २ । २४ ॥

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य ॥ रेफस्य विसर्गः । मातुः । पितुः । नेह । ऊर्जः क्विप् । ऊर्क् । मृजेर्लङि । न्यमार्ट् ।

## धि च । ८ । २ । २५ ॥

धादौ प्रत्यये सलोपः स्यात् ॥ एधिताध्वे । आशाध्वम् । अलविध्वम् । अलविढ्वम् । धिचेति सलोपः सिच एवेत्येके । चकाद्धि । चकाधीत्येवेति तु भाष्यम् ।

## झलो झलि । ८ । २ । २६ ॥

झलः परस्य सस्य लोपः स्याज्झलि ॥ असैद्धाम् । अवात्ताम् । वसेः सिचः सलोपस्यासिद्धत्वात्सः स्यार्धधातुके इति सस्य तकारः । अभित्त । अच्छित्त । झलः किम् । अमंस्त । झलि किम् । अभित्साताम् ।

## ह्रस्वादङ्गात् । ८ । २ । २७ ॥

सिचो लोपः स्याज्झलि ॥ अभृत । अकृत । अकृथाः । ह्रस्वात्किम् । अच्योष्ट । अङ्गात्किम् । अलाविष्टाम् । झलि किम् । अकृषाताम् ।

## इट ईटि । ८ । २ । २८ ॥

इटः परस्य सस्य लोपः स्यादीटि परे । अलावीत् । अपावीत् । अदेवीत् । असेधीत् । आतीत् । इटः किम् । अकार्षीत् । ईटि किम् । अलाविष्टाम् ।

## स्कोः संयोगाद्योरन्ते च । ८ । २ । २९ ॥

पदान्ते झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात् । भ्रस्जेः । भृट् । भृड् । भृष्टः । भृष्टवान् । मस्जेः । मग्नः । मग्नवान् । तट् । तड् । गोरट् । गोरड् । तष्टः । तष्टवान् । तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तु स्कोरिति न प्रवर्तते । णिलोपस्य स्थानिवद्भावात् । पूर्वत्रासिद्धीये न स्थानिवदिति तु न । तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति निषेधात्संयोगान्तलोप एव । तक् । तग् । गोरक् । गोरग् । स्कोरिति कलोपं प्रति कुत्वस्यासिद्धत्वात्संयोगान्तलोपः । पिपक् । पिपग् । एवं विवक् । विवग् । दिधक् । दिधग् । स्कोः किम् । नर्नर्त्ति । संयोगाद्योः किम् । पयः । शक् । अन्ते किम् । तक्षिता ।

## चोः कुः । ८ । २ । ३० ॥

चवर्गस्य कवर्गः स्याज्झलि पदान्ते च ॥ पक्ता । पक्तुम् । त्यक्ता । त्यक्तुम् । वाक् । ऊर्क् । षत्वविधौ राजिसाहचर्यात् टुभ्राजृ दीप्ताविति फणादिरेव गृह्यते । न तु एजृ भेजृ भ्राजृ दीप्ताविति । तस्य कुत्वमेव । विभ्राक् । विभ्राग् । विभ्राग्भ्यामित्यादि ॥

## हो ढः । ८ । २ । ३१ ॥

हस्य ढः स्याज्झलि पदान्ते च । सोढा । सोढव्यम् । वोढा ।

वोढव्यम् । जगत्वचर्त्वम् । लिट् । लिड् । विश्ववाट् । तुराषाट् । तुरं सहत इत्यर्थे छन्दसि सह इति ण्विः । लोके तु साहयतेः क्विप् अन्येषामपीति पूर्वपदस्य दीर्घः । सहेः साडः स इति षत्वम् ।

**दादेर्धातोर्घः । ८ । २ । ३२ ॥**

धातोरित्यावर्तते । तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयति । उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च । दग्धा । दग्धुम् । काष्ठधक् । उपदेशे किम् । अधोगित्यत्र यथा स्यात् । दामानिहमात्मन इच्छति दामलिह्यति । ततः क्विप् । दामलिट् । अत्र मा भूत् ।

**वा द्रुहमुहष्णुहष्णिहाम् । ८ । २ । ३३ ॥**

एषां हस्य वा घः स्याज्झलि पदान्ते च । द्रोग्धा । द्रोढा । ध्रुक् । ध्रुट् । मोग्धा । मोढा । मुक् । मुट् । स्नोग्धा । स्नोढा । स्नुक् । स्नुट् । स्नेग्धा । स्नेढा । स्निक् । स्निट् ।

**नहो धः । ८ । २ । ३४ ॥**

नहो हस्य धः स्याज्झलि पदान्ते च । नद्धा । नद्धुम् । उपानत् । उपानद् ।

**आहस्थः । ८ । २ । ३५ ॥**

झलि परे । चर्त्वम् । आत्थ । आदेशान्तरकरणं झषस्तथोर्धोऽध इत्यस्य निवृत्त्यर्थम् । झलि किम् । आहथुः । आह । आहतुः ॥ आहुः ॥ हृग्रहोर्भश्छन्दसि हस्येति वक्तव्यम् ॥ * ॥ गृभाय जिह्वया मधु । छन्दसि शायजपीति शायच् । गृभ्णामि ते मघवा जभार ।

## व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।८।२।३६॥

व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते च । व्रष्टा । व्रष्टुम् । मूलवृट् । भ्रष्टा । भ्रष्टुम् । धानाभृट् । स्रष्टा । स्रष्टुम् । रज्जुसृट् । मार्ष्टा । मार्ष्टुम् । कांस्यपरिमृट् । यष्टा । यष्टुम् । देवेट् । राट् । विभ्राट् । राजभ्राजोः पदान्तार्थं ग्रहणं झलादिराभ्यामिटा व्यवधीयते । केचित्तु राष्टि भ्राष्टिरिति क्तिन्नन्तमिच्छन्तीति वृत्तिः । प्रष्टा । प्रष्टुम् । शब्दप्राट् । लिश् । लेष्टा । लेष्टुम् । विश् । वेष्टा । वेष्टुम् । सन्नन्तात्क्विप् । षत्वस्यासिद्धत्वात्संयोगान्तस्य लोपः । व्रश्चेतिषः । जश्त्वचर्त्वे । विविड् । विविट् ॥

## एकाचो बशो भष् झषन्तस्य स्ध्वोः ।८।२।३७॥

धातोरवयवो य एकाच् झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात्सकारे ध्वशब्दे परे पदान्ते च ॥ एकाचो धातोरिति सामानाधिकरण्येनान्वये तु इह न स्यात् ॥ गर्दभमाचष्टे गर्दभयति । ततः क्विप् णिलोपः । गर्धप् । झलीति निवृत्तम् । स्ध्वोर्ग्रहणसामर्थ्यात् । तेनेह न । दुग्धम् । दोग्धा । व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः । जश्त्वचर्त्वे । बुध् । भोत्स्यते । अभुत्ध्वम् । भुत् । भुद् । भुद्भ्याम् । भुत्सु । गुह् । घोक्ष्यते । अघूढ्वम् । घुट् । दुह् । धुक्षे । धुग्ध्वे । धुक्ष्व । धुग्ध्वम् । अधोक् । अधुग्ध्वम् । धुक् । धुग् । धुग्भ्याम् । धुक्षु । अजर्घाः । बन्ध् । अभान्त्सीत् । असिद्धवदित्यत्र तु पूर्वत्रासिद्धमिति भष्भावात्पूर्वं झलि सिज्लोपः । प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न । प्रत्य-

यलक्षणं प्रति सिज्लोपस्यासिद्धत्वात् । एकाचः किम् । दामलिट् । बशः किम् । क्रोत्स्यति । झषः किम् । दास्यति । धकारविशिष्टधकारग्रहणं किम् । दादर्द्धि । दध धारणे । यङ्लुकि लोटि हुझल्भ्यो हेर्धिः ।

## दधस्तथोश्च । ८ । २ । ३८ ॥

द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथयोः स्ध्वोश्च परतः ॥ वचनसामर्थ्यादालोपो न स्थानिवदिति वामनमाधवौ । वस्तुतस्तु पूर्वत्रासिद्धे न स्थानिवत् । धत्तः । धत्थः । धत्से । धद्ध्वे । धत्स्व । धद्ध्वम् । झषन्तस्य किम् । दधाति ।

## झलां जशोऽन्ते । ८ । २ । ३९ ॥

पदान्ते झलां जशः स्युः । वागत्र । लिडत्र । अग्निचिदत्र । त्रिष्टुबत्र ।

## झषस्तथोर्धोऽधः । ८ । २ । ४० ॥

झषः परयोस्तथोर्धः स्यान्न तु दधातेः । लब्धा । अलब्धाः । दोग्धा । अदुग्धाः । लेढा । अलीढाः । बोद्धा । अबुद्धाः । धत्वे कृते । झलां जश् झशीति जश्त्वम् । अधः किम् । धत्तः । धत्थः ।

## षढोः कः सि । ८ । २ । ४१ ॥

षस्य ढस्य च कः स्यात्सकारे परे । यक्ष्यति । अयक्ष्यत् । पिपक्षति । लिह । लेक्ष्यति । अलेक्ष्यत् । लिलिक्षति । सि किम् । पिनष्टि । लेढि ।

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः । ८ । २ । ४२ ॥

रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यान्निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य च ॥ शॄ हिंसायाम् । ऋत इत् । रपरः । णत्वम् । शीर्णः । बहिरङ्गत्वेन वृद्धेरसिद्धत्वान्नेह । कृतस्यापत्यं कार्तिः । भिन्नः । छिन्नः । रदाभ्यां किम् । कृतम् । तः किम् । चरितम् । मुदितम् । पूर्वस्य किम् । निष्ठाया एव दकारस्य मा भूत् । भिन्नवद्भ्याम् ॥

## संयोगादेरातो धातोर्यण्वतः । ८ । २ । ४३ ॥

निष्ठातस्य नः स्यात् । द्राणः । ग्लानः । संयोगादेः किम् । यातः । आतः किम् । च्युतः । प्लुतः । धातोः किम् । निर्यातः । यण्वतः किम् । स्नातः ॥

## ल्वादिभ्यः । ८ । २ । ४४ ॥

एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः । ज्या ग्रहि जीनः ॥ ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः ॥ * ॥ तेन नत्वम् । कीर्णिः । गीर्णिः । लूनिः । धूनिः । पूनिः ॥ दुग्वोर्दीर्घश्च ॥ * ॥ दुगतौ । दूनः । टु दु उपतापे इत्ययं तु न गृह्यते । सानुबन्धकत्वात् । मृदुतया दुतयेति माघः । गूनः । पूञो विनाशे । पूना यवाः विनष्टा इत्यर्थः । पूतमन्यत् ॥ सिनोतेर्ग्रासकर्मकर्तृकस्य ॥ * ॥ सिनो ग्रासः । ग्रासेति किम् । सिना पाशेन सूकरी । कर्मकर्तृकेति किम् । सितो ग्रासो देवदत्तेन ।

## ओदितश्च । ८ । २ । ४५ ॥

भुजो भुग्नः । टुओश्वि गतिवृद्ध्योः । यजादित्वात्सम्प्रसारणम् । तस्य हल इति दीर्घः । उच्छूनः । ओहाक् प्रहीणः ॥

दिवाद्यन्तर्गणाः स्वादय ओदितः ॥ ७ ॥ सूनः । दूनः । ओदित्त्वमध्ये डीङः पाठसामर्थ्यान्नेट् । उड्डीनः ॥

**क्षियो दीर्घात् । ८ । २ । ४६ ॥**

दीर्घात्क्षियो निष्ठातस्य नः स्यात् । प्रक्षीणः सः । क्षीणवान् । निष्ठायामण्यदर्थे इति दीर्घः । दीर्घात्किम् । अक्षितमसि मा मे क्षेष्ठाः । क्षितमिति भावे क्तः । बहिरङ्गत्वेन वृद्धेरसिद्धत्वान्नेह । क्षितस्यापत्यं क्षैतिः ॥

**श्योऽस्पर्शे । ८ । २ । ४७ ॥**

श्यैङो निष्ठातस्य नः स्यादस्पर्शे । द्रवमूर्तिस्पर्शयोरिति सम्प्रसारणे हल इति दीर्घः । शीनं घृतम् । अस्पर्शे किम् । शीतं जलम् ॥

**अञ्चोऽनपादाने । ८ । २ । ४८ ॥**

अञ्चो निष्ठातस्य नः स्यान्न त्वपादाने । समक्नः । अनपादाने किम् । उदक्तमुदकं कूपात् । व्यक्तमिति त्वञ्जे रूपम् ॥

**दिवोऽविजिगीषायाम् । ८ । २ । ४९ ॥**

दिवो निष्ठातस्य नः स्यादविजिगीषायाम् । द्यूनः । क्षीण इत्यर्थः । विजिगीषादौ तु द्यूतम् । विजिगीषया हि तच्चेष्टाः पात्यन्ते इति गम्यते विजिगीषा ॥

**निर्वाणोऽवाते । ८ । २ । ५० ॥**

अवाते इति छेदः । निःपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्ता न । निर्वाणोऽग्निर्मुनिर्वा । वाते तु निर्वातो वातः ।

**शुषः कः । ८ । २ । ५१ ॥**

निष्ठातस्येत्येव। शुष्कः॥

**पचो वः। ८। २। ५२॥**

पक्वः।

**क्षायो मः। ८। २। ५३॥**

क्षामः।

**प्रस्त्योऽन्यतरस्याम्। ८। २। ५४॥**

निष्ठातस्य मो वा स्यात्। प्रस्तीमः। प्रस्तीतः। प्रेति किम्। स्त्यानः॥

**अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः। ८। २। ५५॥**

ञिफला। फुल्लः। निष्ठातस्य लत्वं निपात्यते। क्तवत्वेकदेशस्यापीदं निपातनमिष्यते। फुल्लवान्। क्षीबादिषु तु क्तप्रत्ययस्यैव तलोपः। तस्याबिट्त्वात्प्राप्तस्येटोऽभावश्च निपात्यते। क्षीबो मत्तः। कृशस्तनुः। उल्लाघो नीरोगः। अनुपसर्गात्किम्। प्रफुल्लतः। तिचेत्युत्वम्। प्रक्षीबितः। प्रकृशितः। प्रोल्लाघितः। कथं तर्हि लोध्रद्रुमं सानुमतः प्रफुल्लमिति फुल्ल विकसने पचाद्यच्। कथं परिकृश इति। परिशब्दोयं क्रियान्तरयोगात्कृशिम्प्रत्यनुपसर्ग एव। परिगतः कृशः परिकृश इति। यद्यपि फुल्लादयः पचाद्यचि इगुपधलक्षणे च के सिध्यन्ति। तथापि सूत्रं तु फुल्लतादिनिवृत्त्यर्थम्। फुल्लवानिति रूपस्य निष्ठा च व्यञ्जनादिकार्यस्य च सिध्यर्थम्॥ उत्फुल्लसंफुल्लयोरुपसंख्यानम्॥

**नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्। ८। २। ५६॥**

एभ्यो निष्ठातस्य नो वा ॥ नुन्नः । नुत्तः । भिद विचारणे रौधादिक एव गृह्यते । उन्दिना पाठेन साहचर्यात् । विन्नः । वित्तः । वेत्तेस्तु विदितः । विद्यतेर्विन्नः । उन्दी उन्नः । उत्तः । त्राणः । त्रातः । घ्राणः । घ्रातः । ह्रीणः । ह्रीतः ॥

**न ध्याख्यापॄमूर्छिमदाम् । ८ । २ । ५७ ॥**

एभ्यो निष्ठातस्य नत्वं न । ध्यातः । ख्यातः । पूर्तः । मुर्छा । राल्लोपः । मूर्तः । मदी । मत्तः ॥

**वित्तो भोगप्रत्यययोः । ८ । २ । ५८ ॥**

विन्दतेर्निष्ठातस्य निपातोऽयं भोग्ये प्रतीते चार्थे । वित्तं धनम् । वित्तः पुरुषः । अनयोः किम् । विन्नः । विभाषागमहनेति कृत्यैः वेट्कत्वादिह नेट् ॥

**भित्तं शकलम् । ८ । २ । ५९ ॥**

भिन्नमन्यत् ।

**ऋणमाधमर्ण्ये । ८ । २ । ६० ॥**

ऋधातोः क्ते तकारस्य नत्वं निपात्यते आधमर्ण्ये व्यवहारे ॥ ऋतमन्यत् ।

**नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि । ८ । २ । ६१ ॥**

सदेर्नञ्पूर्वान्निपूर्वाच्च निष्ठायां नत्वाभावो निपात्यते । न सत्तमञ्जसा । निषत्तमस्य चरतः । असन्नं निषण्णमिति प्राप्ते । उन्देर्नञ्पूर्वस्यानुत्तं । एतन्निपातनसामर्थ्याद्भाषायां नञ्पूर्वे नुदविदोन्द-

चेति विकल्पो नेत्याहुः । प्रतूर्नमिति त्वरतेः । तुर्वीत्यस्य वा । सूर्तमिति सृ इत्यस्य । उत्वं च । गूर्नमिति गुरी इत्यस्य ॥

## क्विन्प्रत्ययस्य कुः । ८ । २ । ६२ ॥

क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात्पदान्ते ॥ प्राङ् । प्रत्यङ् । युङ् । क्रुङ् । तादृक् । तादृग् । घृतस्पृक् । घृतस्पृग् । कुत्वस्यासिद्धत्वाद् व्रश्चेति षः । तस्य जश्त्वेन डः । तस्य कुत्वेन गः । तस्य चर्त्वेन पक्षे कः । षन्तापवादत्वात्कुत्वेन खकार इति कैयटहरदत्तादिमते तु चर्त्वाभावपक्षे ख एव श्रूयते । न तु गः । जश्त्वं प्रति कुत्वस्यासिद्धत्वात् । यद्यपि कुत्वं जश्त्वस्याप्यपवादस्तथापि शस्थानिकजश्त्वस्यैव न तु खस्थानिकस्यापि । दिगादिभ्यो यदिति निर्देशान्नासिद्धत्वमिति वा बोध्यम् । कुः क्विन्यत इति न्यासेन दृष्ट इत्यध्याहारेण च बहुव्रीहिफले सिद्धे प्रत्ययग्रहणेनान्यपदार्थांशे वीप्सागर्भबहुव्रीहिणा लब्धं तादृशादिक्विन्नन्तविषयं लक्षणमचरितार्थमिति तयोर्भाव इत्याहुः ॥ क्विन्प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात् क्विप्यपि कुत्वम् । स्पृक् । स्पृग् । षडगकाः प्राग्वत् । विश्वसृड् । देवेड् इत्यादौ तु यथा कुत्वं न भवति तथा पदादिसूत्रे प्रपञ्चितम् ।

## नशेर्वा । ८ । २ । ६३ ॥

नशेः कवर्गोऽन्तादेशो वा स्यात्पदान्ते ॥ नक् । नग् । नट् । नड् । नग्भ्यां नड्भ्यामित्यादि ।

## मो नो धातोः । ८ । २ । ६४ ॥

धातोर्मस्य नः स्यात्पदान्ते । नत्वस्यासिद्धत्वान्नलोपो न ।

प्रशाम्यतीति प्रशान् । प्रतान् । प्रदान् । प्रशान्भ्यामित्यादि । अनुनासिकस्य क्वीति दीर्घः । मः किम् । भिद् । छिद् । धातोः किम् । इदम् । किम् । पदस्य किम् । प्रशामौ । प्रशामः ॥

म्वोश्च । ८ । २ । ६५ ॥

मान्तस्य धातोर्नकारादेशः स्यान्मकारे वकारे च परे । णत्वम् । चङ्क्रण्वहे । चङ्क्रण्महे । दिवादेः परस्मैपदिनः । चङ्क्रण्व । चङ्क्रण्म । जङ्गन्म । जङ्गन्वः । जङ्गन्मः । अपदान्तार्थ आरम्भः ॥

ससजुषो रुः । ८ । २ । ६६ ॥

पदान्तस्य सस्य सजुष्शब्द च रुः स्यात् । जश्त्वापवादः । यशः । पयः । अग्निः । वायुः । सह जुषते इति सजूः । परमसजूः । सजूर्भ्याम् । रुत्वं प्रति षत्वस्यासिद्धत्वात्ससजुषोरिति रुत्वम् । पिपठीः । चिकीः ॥

अवयाः श्वेतवाः पुरोडाश्च । ८ । २ । ६७ ॥

एते सम्बुद्धौ कृतदीर्घा निपात्यन्ते । चादुक्थशाः ।

अहन् । ८ । २ । ६८ ॥

अहन्नित्यस्य रुः स्यात्पदान्ते । अहोभ्याम् । अहोभिः ।

रोऽसुपि । ८ । २ । ६९ ॥

अन्हो रेफादेशः स्यान्न तु सुपि । रोरपवादः । अहरहः । अहर्गणः । अहर्भाति । असुपि किम् । अहोभ्याम् । अत्राहन्निति रुत्वम् ॥ रूपरात्रिरथन्तरेषु रुत्वं वाच्यम् ॥ * ॥ अहोरूपम् । गतमहो रात्रिरेषा । एकदेशविकृतस्यानन्यत्वादहोरात्रः । अहो रथ-

न्तरम् ॥ अहरादीनां पत्यादिषु वा रेफो विसर्गापवादः ॥ * ॥ अहर्पतिः । गीर्पतिः । धूर्पतिः । पक्षे विसर्गोपध्मानीयौ । इह अहः अहोभ्यामित्यादौ रुत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्ते अहन्नित्यावर्त्य नलोपाभावं निपात्य द्वितीयेन रुर्विधेयः । तदन्तस्यापि रुत्वरत्वे । दीर्घाण्यहानि यस्मिन्निदाघे स दीर्घाहा निदाघः । इह हल्ङ्यादिलोपे कृते प्रत्ययलक्षणेनासुपीति निषेधाद्रुत्वाभावे रुः । तस्यासिद्धत्वान्नान्तलक्षण उपधादीर्घः । संबुद्धौ तु हे दीर्घाहो निदाघ ।

**अम्नरूधरवरित्युभयथा छन्दसि । ८ । २ । ७० ॥**

रुर्वा रेफो वा । अम्न एव । अम्नरेव । अम्नस्शब्द ईषदर्थे । ऊधएव । ऊधरेव । अव एव । अवरेव । अवो रक्षणं छन्दसि भाषायां च ॥ प्रचेतसो राजन्युपसंख्यानम् ॥ * ॥ प्रचेता राजन् । प्रचेतो राजन् ॥

**भुवश्च महाव्याहृतेः । ८ । २ । ७१ ॥**

रुर्वा रेफो वा छन्दसि । भुव इति । भुवरिति । महाव्याहृतेः किम् । भुवो विश्वेषु सवनेषु । भवतेश्छन्दसि । लुङ् लङ् लिट इति वर्तमाने लङ् सिप् शप् अगुणश्छान्दसः । तत एवाडभावः । भुवस् इत्येतदव्ययमन्तरिक्षवाचि महाव्याहृतिः ।

**वसुस्रंसुध्वंस्वनडुहां दः । ८ । २ । ७२ ॥**

वसुः प्रत्ययः । तेन तदन्तं ग्राह्यम् । ससजुषोरिति सूचान्त्सेत्यनुवर्तते । तच्च वसोरेव विशेषणम् । न तु स्रंसुध्वंसोरव्यभिचारात् । नाप्यनडुहः । असम्भवात् । सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । विद्वद्भ्याम् । विद्वद्भिः । पपिवद्भ्याम् । पपिवद्भिः । सान्तेति किम् । विद्वान् । पपिवान् । नाप्राप्तस्य रुत्वस्या-

यमपवादो न तु प्राप्ताप्राप्तस्य संयोगान्तलोपस्य । उखास्रत् । पर्णध्वत् । उखास्रद्भ्याम् । पर्णध्वद्भ्याम् । अनडुद्भ्याम् । अनडुत्सु । स्वनडुत् । होढ इति ढत्वस्यापवादः । इह तु नुम्विधिसामर्थ्याद्दत्वं न । अनड्वान् । हे अनड्वन् । पदान्ते किम् । स्रस्तम् । ध्वस्तम् ।

## तिप्यनस्तेः । ८ । २ । ७३ ॥

पदान्तस्य सस्य दः स्यात्तिपि नत्वस्तेः । अचकात् । अचकाद् । अशात् । तिपि किम् । चकासेः क्विपि चकाः । अनस्तेः किम् । सलिलं सर्वमा इदम् । आ इति लङि तिप्यस्तेरूपम् । बहुलं छन्दसीति ईर्न ।

## सिपि धातोरुर्वा । ८ । २ । ७४ ॥

पदान्तस्य सस्य रुः स्याद्वा । जश्त्वेन पक्षे दः । अचकाः । अचकात् । अशाः । अशात् । धातुग्रहणं रुग्रहणं चोत्तरार्थम् ।

## दश्च । ८ । २ । ७५ ॥

धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा । भिद् । अवेः । अवेत् । अभिनः । अभिनत् । जश्त्वस्यासिद्धत्वाभावाद्दिश्चापि । असृणः । असृणत् ।

## र्वोरुपधाया दीर्घ इकः । ८ । २ । ७६ ॥

रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात्पदान्ते । गीः । धूः । पूः । आशीः । वग्रहणमुत्तरार्थम् । उपधायाः किम् । अभिभर्भवान् । अभ्यासेकारस्य मा भूत् । इकः किम् । सत्वेव भकारा-

कारस्य मा भूत् । धातोः किम् । अग्निः । वायुः । पदस्य किम् । गिरौ गिरः

## हलि च । ८ । २ । ७७ ॥

रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि । आस्तीर्णम् । दीव्यति । सीव्यति । गिरमिच्छति गीर्यति । धातोरित्येव । नेह । चतुर इच्छति चतुर्यति । दिवमिच्छति दिव्यति । इह पुरमिच्छति पुर्यतीति माधवोक्तं प्रत्युदाहरणं तच्चिन्त्यम् । पुर्गिरोः साम्यात् । दीव्यतीति दीर्घस्तु प्राचः प्रामादिक एव । इकः किम् । स्मर्यते भव्यम् । अपदान्तार्थोऽयमारम्भः ।

## उपधायां च । ८ । २ । ७८ ॥

धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात् ॥ ऊर्दते । कूर्दते । हूर्छति । मूर्छिता । तूर्विता । हलि किम् । चिरिणोति । जिरिणोति । इह कस्मान्न भवति । रोर्यितुः । रिर्युः । वीगत्यादिषु विव्यतुः । विव्युः । यणादेशस्य स्थानिवद्भावादसिद्धत्वाद्वा बहिरङ्गलक्षणत्वेन हल्परौ रेफवकारौ न भवतः । चतुर्थिता दिव्यितेत्यत्र तु असुपीत्यनुवर्त्य सुपः परो यो हल् तत्परयोः र्वोर्दीर्घो न भवतीत्यर्थान्न दीर्घः । बहिरङ्गलक्षणत्वादतो लोपस्य धातोरुपधाभूतौ रेफवकारौ न भवत इति वा । उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति क्रियोर्गियोरित्यादिषु हलि चेति न दीर्घः ॥

## न भकुर्छुराम् । ८ । २ । ७९ ॥

भस्य कुर्छुरोश्चोपधाया दीर्घो न स्यात् ॥ धुरं वहति

धुर्यः । कुर्वन्ति । कुर्यात् । छुर्यात् । कुर् शब्दे । कुर्यात् । अत्र तु नभकुर्छुरामिति निषेधो न करोतेरेव तत्र ग्रहणादित्याहुः ।

## अदसोऽसेर्दादु दो मः । ८ । २ । ८० ॥

अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । उ इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः । आन्तरतम्याद्ध्रस्वव्यञ्जनयो ह्रस्वो दीर्घस्य दीर्घः ॥

## एत ईद्बहुवचने । ८ । २ । ८१ ॥

अदसो दात्परस्यैत ईत्स्याद्दस्य च मो बह्वर्थोक्तौ । पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चान्मुत्वमीत्वे । अमू । अमी । अमुम् । अमू । अमून् । मुत्वे कृते घिसंज्ञायां नाभावः । अमुना । अमूभ्याम् । अमीभिः । अमुष्मै । अमूभ्याम् । अमीभ्यः । अमुष्मात् । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमुयोः । अमीषु । स्त्रियां तु त्यदाद्यत्वं टाप् । अमूम् । अमूः । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै । अमुष्याः । अमुयोः । अमूषाम् । अमुष्याम् । अमुयोः । अमूषु । क्लीबे तु अमू । अमूनि । शेषं पुंवत् । असेः किम् । अदः इच्छति अदस्यति । अदोऽत्र । अदः । दात्किम् । अमुया । अमुयोः । अलोन्त्यस्य मा भूत् । बह्वर्थोक्ताविति किम् । अमी इत्यत्रापि यथा स्यात् । पारिभाषिकबहुवचनग्रहणे तु अमीभ्य इत्यादावेव स्यात् । अमुमञ्चतीति विग्रहे अदस् अञ्च इतिस्थिते विष्वग्देवयोरित्यद्र्यादेशे अदद्रि अञ्च् इति स्थिते यणि मुत्वम् । अमुमुयङ् । अमुमुयञ्चौ अमुमुयञ्चः । अमुमुयञ्चम् । अमुमुयञ्चौ । अमुमुईचः । अमु-

मुईचा । अमुमुयभ्यामित्यादि । मुत्वस्यासिद्धत्वान्न यण् । अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषामाश्रित्य परस्यैव मुत्वं वदतां मते अदमुयङ् । अः सेः सकारस्य स्थाने यस्य स असिरिति व्याख्यानात् त्यदाद्यत्वविषये एव मुत्वं नान्यत्रेति पक्षे अदद्यङ् । अदद्र्यञ्चौ । उक्तं च ॥

अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥ इति ।

## वाक्यस्य टेः प्लुत उदात्तः । ८ । २ । ८२ ॥

इत्यधिकृत्य ।

## प्रत्यभिवादेऽशूद्रे । ८ । २ । ८३ ॥

अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात् । अभिवादये देवदत्तोऽहम् । भो आयुष्मानेधि देवदत्ता ३ । स्त्रियां न । अभिवादये गार्ग्यहम् । भो आयुष्मती भव गार्गि । नाम गोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते । नेह आयुष्मानेधि ॥ भोराजन्यविशां वेति वाच्यम् ॥ * ॥ आयुष्मानेधि भोः ३ । आयुष्मानेधीन्द्रवर्मं३न् । आयुष्मानेधीन्द्रपालिता३ ।

## दूराद्धूते च । ८ । २ । ८४ ॥

दूरात्सम्बोधने वाक्यस्य टेः प्लुतः स्यात् । सक्तून् पिब देवदत्ता३ ।

## हैहेप्रयोगे हैहयोः । ८ । २ । ८५ ॥

एतयोः प्रयोगे दूराद्धूते यत्र तत्र हैहयोरेव प्लुतः स्यात् । हे३ राम । राम हे३ ।

**गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् । ८ । २ । ८६ ॥**

दूराद्धूते यद्वाक्यं तस्य ऋद्भिन्नस्यानन्त्यस्यापि गुरोर्वा प्लुतः स्यात् । दे३वदत्त । देवदा३त्त । देवदत्त३ । गुरोः किम् । वकारादकारस्य मा भूत् । अनृतः किम् । कृष्णा३ । एकैकग्रहणं पर्यायार्थम् । इह प्राचामिति योगो विभज्यते । तेन सर्वः प्लुतो विकल्पते ।

**ओमभ्यादाने । ८ । २ । ८७ ॥**

ओम्शब्दस्य प्लुतः स्यादारम्भे । ओ३म् । अग्निमीळे पुरोहितम् । अभ्यादाने किम् । ओमित्येकाक्षरम् ।

**ये यज्ञकर्मणि । ८ । २ । ८८ ॥**

ये३ यजामहे । यज्ञेति किम् । ये यजामहे इति पञ्चाक्षरमिति स्वाध्यायकाले मा भूत् । ये यजामहे इत्यत्रैवायं प्लुत इष्यते । नेह ये देवासो दिव्येका दशस्थेति ।

**प्रणवष्टेः । ८ । २ । ८९ ॥**

त्रिमात्र ओकार ओङ्कारो वा प्रणव इति भाष्यादौ स्पष्टम् । यज्ञकर्मणि टेः प्रणव आदेशः स्यात् । अपां रेतांसि जिन्वतो३म् । देवान् जिगाति सुम्नयो३ । टेः किम् । हलन्ते अन्त्यस्य मा भूत् । अन्यथा वाक्यस्य टेरिति टिग्रहणानुवृत्तावपि अलोऽन्त्यस्येति वचनाट्टेर्योऽन्त्यो हल् तस्यौकारः स्यात् । प्लुतत्वेन प्रणवस्य व्यभिचाराभावादविशेषणात्सञ्ज्ञया च विधानेऽचपरिभाषोपस्थानात् । अथाप्युपरञ्जकतया प्लुतेन विशेषणसम्भवादच्परिभाषोपस्थित्या टिनाज्विशेष्यते तथापि टेर्योऽच् तस्य स्यान्न तु सर्वस्य टेः । ओङ्कारस्त्वभ्रुत्समुदायत्वात् प्लुतो न भवतीति सर्वस्य टेर्वाक्यस्य टेरित्यधिकारा-

त्सिध्यति । केचित्तु टिस्थानिकस्यैवौकारस्य प्रणवसंज्ञाविधानाट्टिग्रहणमनर्थकमिति प्रतिपन्नाः ॥

## याज्यान्तः । ८ । २ । ९० ॥

याज्या नाम ये याज्याकाण्डे पठ्यन्ते मन्त्रास्तेषामन्त्यस्य टेः प्लुतो यज्ञकर्मणि । जिह्वामग्ने च कृषे हव्यवाहा३ । अन्तः किम् । याज्यानां ऋचां वाक्यसमुदायरूपाणां प्रतिवाक्यं टेः स्यात् । सर्वान्तस्य चेष्यते ॥

## ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः । ८ । २ । ९१ ॥

एषामादेः प्लुतो यज्ञकर्मणि । अग्नये अनुब्रू३हि । अग्नये गोमयानि प्रे३ष्य । अस्तु श्रौ३षट् । सोमस्याग्ने वीही वौ३षट् । अग्निमा३वह । आवह देवान् यजमानेत्यादौ तु न प्लुतः । छन्दसि सर्वविधीनां वैकल्पिकत्वात् ॥

## अग्नीत्प्रेषणे परस्य । ८ । २ । ९२ ॥

अग्नीधः प्रेषणे आदेः प्लुतः स्यात् तस्मात्परस्य च । ओ३ श्रा३ वय । आ३ श्रा३ वय । अत्रैवायं प्लुत इष्यते । नेह । अग्नीदग्नीन्विहर इह तु उद्धरा३ उद्धर । अभिहरा३ अभिहरेति छान्दसः प्लुतव्यत्ययः । चापले द्विर्वचनम् । यज्ञकर्मणीत्येव । ओश्रावय ।

## विभाषा पृष्टप्रतिवचने हेः । ८ । २ । ९३ ॥

प्लुतः । अकार्षीः कटम् । अकार्षं ही३ । अकार्षं हि । पृष्टेति किम् । कटं करिष्यति हि । हेः किम् । करोमि ननु ॥

## निगृह्यानुयोगे च । ८ । २ । ९४ ॥

अथ यद्वाक्यं तस्य टेः प्लुतो वा । अद्यामावास्येत्यात्थाः३ । अद्यामावास्येत्येवं वादिनं युक्त्या स्वमतात्प्रच्याव्य एवमनुयुज्यते ।

## आम्रेडितं भर्त्सने । ८ । २ । ९५ ॥

दस्यो दस्यो३ घातयिष्यामि त्वाम् । आम्रेडितग्रहणं द्विरुक्तोपलक्षणम् । तत्रैकैकस्येत्यनुवृत्त्या पर्यायलाभः । चौरा३ चौर । चौर चौरा३ । वाक्यादेरामन्त्रितस्येति द्वित्वं वाक्यस्य टेरित्यधिकारेऽप्यचानन्त्यस्य भवति । वाक्यादेरेव पदस्य भर्त्सने द्वित्वविधानात् ॥

## अङ्गयुक्तं तिङाकाङ्क्षम् । ८ । २ । ९६ ॥

अङ्गेत्यनेन युक्तं तिङन्तं प्लवते । अङ्ग कूजा३ इदानीं ज्ञास्यसि जाल्म । तिङ् किम् । अङ्ग देवदत्त मिथ्या वदसि । आकाङ्क्षं किम् । अङ्ग पच । नैतत्परमाकाङ्क्षति । भर्त्सने इत्येव । अङ्गाधीष्व भक्तं तव दास्यामि ॥

## विचार्यमाणानां । ८ । २ । ९७ ॥

वाक्यानां टेः प्लुतः । होतव्यं दीक्षितस्य गृहा३इ । न होतव्या३ मिति । होतव्यं न होतव्यमिति विचार्यते । प्रमाणैर्वस्तु तत्त्वपरीक्षणं विचारः ॥

## पूर्वं तु भाषायाम् । ८ । २ । ९८ ॥

विचार्यमाणानां पूर्वमेव प्लवते । अहिर्नु३ रज्जुर्नु । प्रयोगापेक्षं पूर्वत्वम् । इह भाषाग्रहणात्पूर्वयोगः छन्दसीति ज्ञायते ।

## प्रतिश्रवणे च । ८ । २ । ९९ ॥

वाक्यस्य टेः प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुख्ये च । गां मे देहि भोः । हन्त ते ददामी३ । नित्यः शब्दो भवितुमर्हती३ । दत्त किमात्था३ ।

## अनुदात्तं प्रश्नान्ताभिपूजितयोः । ८ । २ । १०० ॥

अनुदात्तः प्लुतः स्यात् ॥ दूराद्धूतादिषु सिद्धस्य प्लुतस्यानुदात्तमात्रमनेन विधीयते । अग्निभूत३इ । पटा३ उ । अग्निभूते पटो एतयोः प्रश्नान्ते टेरनुदात्तः प्लुतः । शोभनः खल्वसि माणवका३ ।

## चिदिति चोपमार्थे प्रयुज्यमाने । ८ । २ । १०१ ॥

वाक्यस्य टेरनुदात्तः प्लुतः । अग्निर्चिद्भाया३ त् । अग्निरिव भायात् । उपमार्थे किम् । कथञ्चिदाहुः । प्रयुज्यमाने किम् । अग्निर्माणवको भायात् ।

## उपरिस्विदासीदिति च । ८ । २ । १०२ ॥

टेः प्लुतोऽनुदात्तः स्यात् । उपरिस्विदासी३ त् । अधःस्विदासी३दित्यत्र तु विचार्यमाणानामित्युदात्तः प्लुतः ॥

## स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु । ८ । २ । १०३ ॥

स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौ गम्ये । असूया । अभिरूपका३ अभिरूपक रिक्तं ते आभिरूप्यम् । संमतौ अभिरूपका३ अभिरूपक शोभनोसि । कोपे । अविनीतका३ अविनीतक इदानीं ज्ञास्यसि जाल्म । कुत्सने । शाक्तीका३ शाक्तीक रिक्ता ते शक्तिः । अयमपि प्लुतो विकल्पेनेष्यते ॥

**क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् । ८ । २ । १०४ ॥**

आकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यात् । आचारभेदे । स्वयं ह रथेन याती३ उपाध्यायं पदातिं गमयति । प्रार्थनायाम् । पुत्रांश्च लप्सीष्ठा३ः धनं च तात । व्यापारणे । कटं कुरु३ ग्रामं गच्छ । आकाङ्क्षं किम् । दीर्घायुरस्तु । अग्नीदग्नीन्विहर ।

**अनन्त्यस्यापि प्रश्नाख्यानयोः । ८ । २ । १०५ ॥**

अनन्त्यस्यान्त्यस्यापि पदस्य टेः स्वरितः प्लुतः एतयोः । अगमा३ः पूर्वा३न् ग्रामा३न् । अग्निभूता३इ । सर्वपदानामयम् । तत्रान्त्यस्य तु अनुदात्तं प्रश्नान्ताभिपूजितयोरिति अनुदात्तोऽपि पक्षे भवतीति वृत्तिः । यद्यपि तत्र विकल्पो न श्रुतस्तथाप्यपिशब्देनान्त्यस्यापि अनेन स्वरितप्लुतविधानात्पाक्षिकत्वं फलति । द्वन्द्वेन सह निर्देशादपिशब्दस्य प्रश्नेऽपि तात्पर्यम् । आख्याने । अगमा३ पूर्वा३न् ग्रामा३न् भो३ः ।

**प्लुतावैच इदुतौ । ८ । २ । १०६ ॥**

दूराद्धूतादिषु प्लुतो विहितस्तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते ॥ ऐ३ तिकायन । औ३ पगव । चतुर्मात्रावत्र ऐचौ सम्पद्येते ।

**एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ । ८ । २ । १०७**

अप्रगृह्यस्य एचो अदूराद्धूते प्लुतविषये पूर्वस्यार्द्धस्याकारः प्लुतः स्यादुत्तरस्य त्वर्द्धस्य इकारोकारौ स्तः ॥ प्रश्नान्ताभिपूजित विचार्यमाणप्रत्यभिवादयाज्यान्तेष्वेव ॥ * ॥ प्रश्नान्ते । अगमा३ः

पूर्वा३न् ग्रामा३न्। अग्निभूता३ इ। अभिपूजिते। भद्रं करोषि पटा३ उ। विचार्यमाणे। होतव्यं दीक्षितस्य गृहा३इ। प्रत्यभिवादे। आयुष्मानेधि अग्निभूता३इ। याज्यान्ते। स्तोमैर्विधेमाग्नया३इ। परिगणनं किम्। विष्णुभूते३ विष्णुभूते घातयिष्यामि त्वाम्। परिगणने सत्यदूराद्धूते इति न वक्तव्यम्। पदान्तग्रहणं तु कर्तव्यम्। इह मा भूत्। भद्रं करोषि गौ३रिति। अप्रगृह्यस्य किम्। शोभने माले३॥ आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः॥ * ॥ अग्ना३इ पत्नी वः।

## तयोर्य्वावचि संहितायाम्। ८। २। १०८॥

इदुतोर्यकारवकारौ स्तः अचि संहितायाम्। अग्ना३ याशा पटा३वाशा। अग्ना३यिन्द्रम्। पटा३वुदकम्। अचि किम्। अग्ना३इ। संहितायां किम्। अग्ना३इ इन्द्रम्। संहितायामित्यध्यायपरिसमाप्तेरधिकारः। इदुतोरसिद्धत्वादयमारम्भः। सवर्णदीर्घत्वस्य शाकलस्य वा निवृत्त्यर्थम्। यवयोरपवादत्वात् यवयोरसिद्धत्वादुदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्यस्य बाधनार्थं वा॥

इति श्रीव्याकरणदीपिकायां वृत्तौ अष्टमस्याध्यायस्य द्वितीयः पादः॥



# अष्टमाध्यायस्य तृतीयः पादः ।



## मतुवसो रु संबुद्धौ छन्दसि । ८ । ३ । १ ॥

रु इत्यविभक्तिको निर्देशः । पदस्येति वर्तते । मत्वन्तस्य वस्वन्तस्य च पदस्य रुः स्यात् । अलोन्त्यपरिभाषया नकारस्य । इन्द्र मरुत्व इह पाहि सोमम् । हरि वो मेदिनं त्वा । मीढ्वस्तोकाय तनयाय । मतुवसोः किम् । ब्रह्मन् स्तोष्यामि । संबुद्धौ किम् । य एवं विद्वान्सोग्निमाधत्ते । छन्दसि किम् । हे गोमन् । हे पपिवन् ॥ वन उपसंख्यानम् ॥ * ॥ क्वनिब्वनिपोः सामान्येन ग्रहणम् । अनुबन्धस्येहानिर्देशात् । यस्त्वायन्तं वसुना प्रातरित्वः प्रातरेतीत्यन्येभ्योपि दृश्यन्त इति इणः क्वनिप् । विभाषा भवद्भगवदघवतामोच्चावस्य । एषामन्त्यस्य रुः स्यादवस्य चौकारः छन्दसि भाषायां च । हे भोः । हे भवन् । हे भगोः । हे भगवन् । हे अघोः । हे अघवन् । कथं भो ब्राह्मणाः । भो ब्राह्मणि । अव्ययमेष भोः शब्दः ।

## अत्रानुनासिकः पूर्वस्य तु वा । ८ । ३ । २ ॥

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यात् । सँम्स्कर्ता ।

## आतोऽटि नित्यम् । ८ । ३ । ३ ॥

अटिपरतः रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः । महाँ इन्द्रः । तैत्तिरीयास्तु अनुस्वारमधीयते । तत्र छान्दसो व्यत्यय इति प्राञ्चः । एवं च सूत्रस्य फलं चिन्त्यम् ॥

## अनुनासिकात्परोऽनुस्वारः । ८ । ३ । ४ ॥

अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः स्यात् । सँस्कर्ता । संस्कर्ता ।

## समः सुटि । ८ । ३ । ५ ॥

समो रुः स्यात्सुटि । अलोन्त्यस्य । खरवसानयोर्विसर्जनीयः । विसर्जनीयस्य स इत्यस्यापवादेन वाशरीति पाक्षिके विसर्गे प्राप्ते । सपुंकानां सो वक्तव्यः ॥ * ॥ संस्कर्ता । संस्कर्ता । समो वा लोपमेके इति भाष्यम् । लोपस्यापि रुप्रकरणस्थत्वादनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयम् । द्विसकारं सूक्तमेव । तत्रानचिचेति सकारद्वित्वपक्षे त्रिसकारमपि रूपद्वयम् । अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसंख्यानेनानुस्वारस्याप्यच्त्वात् । अनुनासिकवतां चयाणां शरः खय इति कद्वित्वे षट् । अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश । एषामष्टादशानां तकारद्वित्वे वचनान्तरेण पुनर्द्वित्वे च एकतं द्वितं त्रितमिति चतुष्पञ्चाशत् । अणोऽनुनासिकत्वेऽष्टोत्तरशतम् ॥

## पुमः खय्यम्परे । ८ । ३ । ६ ॥

अम्परे खयि पुम्शब्दस्य रुः स्यात् । व्युत्पत्तिपक्षेऽप्रत्ययस्येति षत्वपर्युदासादꣳकꣳपयोः प्राप्तौ । अव्युत्पत्तिपक्षे तु षत्वप्राप्तौ । संपुंकानामिति सः । पुँस्कोकिलः । पुंस्कोकिलः । पुँस्पुत्रः । पुंस्पुत्रः । अम्परे किम् । पुंक्षीरम् । खयि किम् । पुंदासः ॥ ख्याञादेशे न ॥*॥ पुंख्यानम् ।

## नश्छव्यप्रशान् । ८ । ३ । ७ ॥

अम्परे छवि नकारान्तस्य पदस्य रुः स्यान्न तु प्रशान्शब्दस्य । विसर्गः । सत्वश्चुत्वे । शार्ङ्गिंश्छिन्धि । शार्ङ्गिंश्छिन्धि । चक्रिंस्त्रायस्व । चक्रिंस्त्रायस्व । पदस्येति किम् । हन्ति । अम्परे किम् । सन्त्सरुः । खड्गमुष्टिः । अप्रशान् किम् । प्रशान् तनोति ।

**उभयथर्क्षु । ८ । ३ । ८ ॥**

अम्परे छवि नकारान्तस्य पदस्य रुर्वा ऋग्विषये । पशूंस्ताँश्चक्रे ।

**दीर्घादटि समानपादे । ८ । ३ । ९ ॥**

दीर्घान्नकारस्य रुर्वा स्यादटि तौ चेन्नकाराटौ एकपादस्थौ स्याताम् । देवाँ अच्छा सुमना । महाँ इन्द्रो य ओजसा । उभयथेत्यनुवृत्तेर्नेह । आदित्यान्याचिषामहे ।

**नॄन्पे । ८ । ३ । १० ॥**

नॄनित्यस्य रुः स्याद्वा पकारे परे । रुत्वपक्षे विसर्गोपध्मानीयौ । नॄँ ᳲपाहि । नॄँ:पाहि । नॄंᳲपाहि । नॄं:पाहि । नॄन्पाहि ।

**स्वतवान्पायौ । ८ । ३ । ११ ॥**

रुर्वा । भुवस्तस्य स्वतवाँः पायुरग्ने ।

**कानाम्रेडिते । ८ । ३ । १२ ॥**

कान्नकारस्य रुः स्यादाम्रेडिते परे । संपुङ्कानामिति सः । यद्वा कस्कादित्वात्सः । काँस्कान् । कांस्कान् ॥

**ढो ढे लोपः । ८ । ३ । १३ ॥**

ढस्य लोपः स्यात् ढे परे । लीढम् । गूढम् । यद्यपि पदाधिकारस्तथापि तस्यासम्भवादपदान्तस्य ढस्य लोपः । गुत्वस्याप्र-

यासिद्धत्वम्। ख्वलिड् ढौकते इत्यत्र जश्त्वे कृते कार्यं नास्तीति लोपाभावः। न च लोपो जश्त्वापवादः। लीढादेर्विषयस्य सत्त्वात्। साक्षाज्जश्त्वरूपविधिशास्त्रबाधापेक्षया असिद्धत्वमात्रबाधस्य न्याय्यत्वात्।

## रो रि। ८। ३। १४॥

रेफस्य रेफे परे लोपः स्यात्। पुना रमते। हरी रम्यः। शम्भू राजते। पदस्येति विशेषणषष्ठी। न तु स्थानषष्ठी। तेनेहापि भवति। जर्गृधेर्लङ्। अजर्घाः। पास्पर्धेरपास्पाः॥

## खरवसानयोर्विसर्जनीयः। ८। ३। १५॥

खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात्पदान्ते। रामष्टीकते। वृक्षः। खरवसानयोः किम्। अग्निर्नयति। नार्कुटादौ वृद्धेर्बहिरङ्गासिद्धत्वान्न विसर्गः। उपार्छति। प्रार्छतीत्यादावुपसर्गाट्टति धाताविति वृद्धिरूपैकादेशस्यान्तवद्भावेन पदान्तस्य तु न विसर्गः। उभयथर्क्षु कर्तरिचर्षिदेवतयोरित्यादिनिर्देशात्॥

## रोः सुपि। ८। ३। १६॥

सप्तमीबहुवचने परे रोरेव विसर्जनीयो नान्यस्य रेफस्य। पयःसु। सुपीःषु। पिपठीःषु। नेह। चतुर्षु। गीर्षु। पूर्षु।

## भोभगोअघोअपूर्वस्य योऽशि। ८। ३। १७॥

एतत्पूर्वस्य रोर्यादेशः स्यादशि परे। असन्धिः सौत्रः। भोस् भगोस् अघोस् इति सकारान्ता निपाताः। तेषां रुत्वे यत्वे च कृते व्योर्लघुप्रयत्नतर इति लघुप्रयत्नाभावपक्षे ओतो गार्ग्यस्येति यलोपः।

भो अच्युत । भगो अत्र । अघो अत्र । हलि तु हलिसर्वेषामिति लघुप्रयत्नस्यापि लोपो वक्ष्यते । अवर्णपूर्वस्य । क आस्ते । कयास्ते । देवा इह । देवायिह । लघुप्रयत्नाभावपक्षे लोपः शाकल्यस्येति विकल्पेन लोपः । हलि तु हलिसर्वेषामित्यनेन सर्वदा । भोभगो अघोअपूर्वस्य किम् । अग्निरत्र । अशि किम् । देवाः सन्ति । यद्यपीह यत्वस्यासिद्धत्वाद्विसर्गो लभ्यते । तथापि विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात् । न ह्ययमल्विधिः । रोरिति समुदायरूपाश्रयणात् । रोः किम् । प्रातरत्र ।

## व्योर्लघुप्रयत्नतरः शाकटायनस्य । ८ । ३ । १८ ॥

पदान्तयोर्यकारवकारयोर्लघूच्चारणौ यवौ वाऽस्तोऽशि परे । यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं स लघूच्चारणः । भोयत्र । भो अत्र । कयास्ते । क आस्ते । सतस्मायाचष्टे । सतस्मा आचष्टे । द्वावत्र । द्वा अत्र । असावादित्यः । असाआदित्यः । यकारसाहचर्याद्वकारो धात्वनवयव एव गृह्यते । तेनेह न । स्मृतोवच्युत ।

## लोपः शाकल्यस्य । ८ । ३ । १९ ॥

ओकारान्तेव्योतो गार्ग्यस्येति अस्य बाधकम् । अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे ॥ क आस्ते । कयास्ते । द्वा अत्र । द्वावत्र । अवर्णेति किम् । गौर्यत्र । पदान्तयोः किम् । हरये । अशि किम् । वृक्षं वेतीति वृक्षवीः । क्विप् । तमाचष्टे इति णयन्ताण्णिच् । वृक्षव् करोति ।

## ओतो गार्ग्यस्य । ८ । ३ । २० ॥

ओकारात्परस्य पदान्तस्यालघुप्रयत्नस्य यकारस्य नित्यं लोपः

स्यात् । गार्ग्यग्रहणं पूजार्थम् । भो अच्युत । लघुप्रयत्नपक्षे भोय-च्युत । पदान्तस्य किम् । तोयम् । वकारस्तु धात्ववयवो न सम्भवति ॥

## उञि च पदे । ८ । ३ । २१ ॥

भो इत्यादि पूर्वस्य पूर्वेण सिद्धम् । अत्रापि गार्ग्यग्रहणानुवृत्त्या अलघुप्रयत्नस्यैव लोपः । अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपः स्यात्पदे उञि । स उ एकाग्निः । असा उ एकाग्निः । पदे किम् । तन्त्रे उतं तन्त्रयुतम् । वेञः सम्प्रसारणे रूपम् । यदि तु प्रतिपदोक्तो निपात उञिति गृहीष्यते तर्ह्युत्तरार्थं पदग्रहणम् ।

## हलि सर्वेषाम् । ८ । ३ । २२ ॥

भोभगोअघोअपूर्वस्य लघ्वलघूच्चारणस्य यकारस्य लोपः स्याद्धलि सर्वेषां मतेन । भो देवाः । भो लक्ष्मीः । भो विद्वद्वृन्द । भगो नमस्ते । अघो याहि । देवा नम्याः । देवा यान्ति । हलि किम् । देवायिह । वकारस्तु नानुवर्तते । भोभगोअघोपूर्वस्यासम्भ-वात् । अपूर्वस्तु यद्यपि सम्भवति वृक्षव् करोतीति । तथापि तत्र लोपाप्रसङ्गः । अशीत्यनुवर्त्य अशा हलो विशेषणात् । वृक्षव् हस-तीत्यादि तु अनभिधानादसाध्वित्याहुः । गव्यमित्यत्र तु पदा-न्तत्वं नास्ति । गव्यूतिरित्यत्र वकारप्रश्लेषान्न वलोप इत्युक्तम् ।

## मोऽनुस्वारः । ८ । ३ । २३ ॥

मन्तस्य पदस्यानुस्वारः स्याद्धलि । अलोन्त्यस्य । हरिं वन्दे । पदस्येति किम् । गम्यते ॥

नश्चापदान्तस्य झलि । ८ । ३ । २४ ॥

नस्य मस्य चापदान्तस्य झल्यनुस्वारः स्यात् । यशांसि । आक्रंस्यते । झलि किम् । मन्यते ।

मो राजि समः क्वौ । ८ । ३ । २५ ॥

क्विबन्ते राजतौ परे समो मस्य म एव स्यात् ॥ सम्राट् ॥

हे मपरे वा । ८ । ३ । २६ ॥

मपरे हकारे परे मस्य म एव स्याद्वा । ह्मल ह्मल सञ्चलने । किम्ह्मलयति । किंह्मलयति । मोनोधातोरिति नत्वमपि बाध्यते । प्रशाम् ह्मलयति । प्रशान् ह्मलयति ॥ यवलपरे यवला वेति वक्तव्यम् ॥ * ॥ कियँह्यः । किंह्यः । किवँ ह्वलयति । किंह्वलयति । किलँ ह्लादयति । किंल्हादयति ।

नपरे नः । ८ । ३ । २७ ॥

नपरे हकारे परे मस्य नः स्याद्वा ॥ किन्न्हुते । किंन्हुते ॥

ङ्णोः कुक् टुक् शरि । ८ । ३ । २८ ॥

ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि । कुक्टुकोरसिद्धत्वाज्जश्त्वं न । चयो द्वितीया इति पक्षे द्वितीयः । प्राङ्क्षष्ठः । प्राङ्ख्षष्ठः । प्राङ्षष्ठः । सुगण्ट्षष्ठः । सुगण्ठ्षष्ठः । सुगण्षष्ठः ॥

डः सि धुट् । ८ । ३ । २९ ॥

डात्परस्य सस्य धुड् वा स्यात् । षट्त्सन्तः । षट्सन्तः ।

नश्च । ८ । ३ । ३० ॥

नकारान्तात्परस्य सस्य धुड् वा स्यात् । सन्त्सः । सन्सः ।

शि तुक् । ८ । ३ । ३१ ॥

शीति सप्तमी पूर्वेण कृतार्थाया न इति पञ्चम्याः षष्ठीं प्रकल्पयति । नस्य पदान्तस्य शे परे तुगवा स्यात् । शश्छोटीति छत्वविकल्पः । पक्षे झरोझरीति चलोपः । सञ्छम्भुः । सञ्च्छम्भुः सञ्च्शम्भुः । सञ्शम्भुः ॥

अछौ अचछा अचशा अशाविति चतुष्टयम् ।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् ॥

ननु प्रकृतौ धुडेवास्तु । किन्तुका । मैवं शश्छोटीत्यस्य हि पदान्ताज्झयः परस्य शस्य छ इत्यर्थे आकरे स्थितः । एवं च धुटः परादित्वात्सञ्च्छम्भुरित्यत्र छो न स्यात् । विपूर्वाद्रपेरौणादिके शप्रत्यये मध्वश्चोतन्त्यभितो विरप्शमित्यादौ यथा । अतः पूर्वान्तस्तुक् कृतः । नन्वेवं कुर्वञ्शेते इत्यत्र पदान्तस्येति णत्वनिषेधो न स्यादिति चेन्न कार्यकालपक्षे बहिरङ्गत्वेन तुकोऽसिद्धत्वात् । यथोद्देशपक्षे तु स्तोःश्चुनेति योगो विभज्यते । नेत्यनुवर्तते ण इति च । स्तोःश्चुना योगे णत्वं न स्यात् । नकारार्थमिदं सकारग्रहणं वर्गग्रहणं चोत्तरार्थम् । ततश्चुरिति पूर्वमनुवर्तते । णत्वप्रतिषेधे श्चुत्वमाश्रयात्सिद्धम् ॥

ङमो ह्रस्वादचि ङमुण् नित्यम् । ८ । ३ । ३२ ॥

ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडागमः स्यात् ॥ प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः । ङमः

किम् । किमास्ते । ह्रस्वात्किम् । प्राङास्ते । ङमन्तं यत्पदमिति किम् । अनिति । अचि किम् । पचन् करोति । परमदण्डिनेत्यत्र तु उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधादुत्तरस्य पदत्वाभावादुञि च पदे इत्यतः पदे इत्यनुवर्त्याजादेः पदस्येति व्याख्यानाद्वा न ङमुट् ॥

**मय उञो वो वा । ८ । ३ । ३३ ॥**

मयः परस्य उञो वो वा स्यादचि । किम्वुक्तम् । वस्यासिद्धत्वान्नानुस्वारः । किमु उक्तम् ॥

**विसर्जनीयस्य सः । ८ । ३ । ३४ ॥**

खरवसानयोरित्यतो मण्डूकप्लुत्या खरीत्यनुवर्त्तते । खरि विसर्जनीयस्य सः स्यात् । विष्णुस्त्राता ।

**शर्परे विसर्जनीयः । ३ । ३५ ॥**

शर्परे खरि विसर्जनीयस्य विसर्जनीयो नन्वन्यत् । कः त्सरुः । घनाघनः क्षोभणः । इह यथायथं सत्वं जिह्वामूलीयश्च न ॥

**वा शरि । ८ । ३ । ३६ ॥**

शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात् । हरिः शेते । हरिश्शेते ॥ खर्परे शरि वा विसर्गलोपो वक्तव्यः ॥ * ॥ रामस्थाता । रामःस्थाता । रामस्स्थाता । हरिस्फुरति । पक्षे विसर्गे सत्वे च वैरूप्यम् ।

**कुप्वोः ≍क≍पौ च । ८ । ३ । ३७ ॥**

कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयौ स्तश्चाद्विसर्गः । क ᳵ करोति । कः करोति । क ᳵ खनति । कः खनति । क ᳶ पठति । कः पठति । क ᳶ फलति । कः फलति । येन नाप्राप्त इति न्यायेन विसर्जनीयस्य स इत्यस्यापवादोऽयं न तु शर्परे विसर्जनीय इत्यस्य । तेन वासः क्षौमं अद्भिः प्सातमित्यादौ विसर्ग एव ।

## सोऽपदादौ । ८ । ३ । ३८ ॥

विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः ॥ पाशकल्पककाम्येषु ॥ * ॥ पयस्पाशम् । यशस्कल्पम् । यशस्कम् । यशस्काम्यति ॥ अनव्ययस्येति वाच्यम् ॥ * ॥ प्रातः कल्पम् । काम्ये रोरेवेति वाच्यम् । नेह । भाः काम्यति ।

## इणः षः । ८ । ३ । ३९ ॥

इणः परस्य विसर्जनीयस्य षः स्यात्पूर्वविषये । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति । नेह । उच्चैः कल्पम् । दोः पश्य । गीः काम्यति ।

## नमस्पुरसोर्गत्योः । ८ । ३ । ४० ॥

गतिसञ्ज्ञयोरनयोर्विसर्जनीयस्य सः स्यात्कुप्वोः परयोः । नमस्करोति । साक्षात्प्रभृतित्वात्कृञो योगे विभाषा गतिसंज्ञा । तदभावे नमः करोति । पुरोऽव्ययमिति नित्यं गतिसंज्ञा । पुरस्करोति । अगतित्वान्नेह । पुः । पुरौ । पुरः प्रष्ठ्याः ।

## इदुदुपधस्य चाप्रत्ययस्य । ८ । ३ । ४१ ॥

इकारोकारोपधस्याप्रत्ययस्य विसर्गस्य षः स्यात्कुप्वोः परयोः । निष्प्रत्यूहम् । आविष्कृतम् । दुष्कृतम् । अप्रत्ययस्य किम् । अग्निः करोति । वायुः करोति । मकादेशस्य कोर्मातमस्य विसर्गस्य न षत्वम् । कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठात् । तेनेह न । मातुः कृपा । मुहुसः प्रतिषेधः ॥ * ॥ मुहुः कामः ।

**तिरसोऽन्यतरस्याम् । ८ । ३ । ४२ ॥**

तिरसः सो वा स्यात्कुप्वोः परयोः । तिरस्कर्ता । तिरः कर्ता ।

**द्विस्त्रिश्चतुरिति कृत्वोर्थे । ८ । ३ । ४३ ॥**

कृत्वोर्थे वर्तमानानामेषां विसर्गस्य षो वा स्यात्कुप्वोः । द्विष्करोति द्विः करोति इत्यादि । कृत्वोर्थे किम् । चतुष्कपालः ।

**इसुसोः सामर्थ्ये । ८ । ३ । ४४ ॥**

एतयोर्विसर्जनीयस्य षः स्याद्वा कुप्वोः । सर्पिष्करोति सर्पिः करोति । धनुष्करोति । धनुः करोति । सामर्थ्यमिह व्यपेक्षा । सामर्थ्ये किम् । तिष्ठतु सर्पिः पिब त्वमुदकम् ।

**नित्यं समासेऽनुत्तरपदस्थस्य । ८ । ३ । ४५ ॥**

इसुसोर्विसर्गस्यानुत्तरपदस्थस्य समासे नित्यं षः स्यात्कुप्वोः । सर्पिष्कुण्डिका । धनुष्कपालम् । अनुत्तरपदस्थस्य किम् । परमसर्पिः कुण्डिका । कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः । व्यपेक्षायां नित्यार्थश्च ।

**अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वन-व्ययस्य । ८ । ३ । ४६ ॥**

अकारादुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सकारादेशः स्यात्करोत्यादिषु परेषु नतूत्तरपदस्थस्य । अयस्कारः । अयस्कामः । अयस्कंसः । अयस्कुम्भः । अयस्पात्रम् । अयःसहिता कुशा । अयस्कुशा । अयस्कर्णी । अतः किम् । गीःकारः । तपरकरणं किम् । भाःकरणम् । अनव्ययस्य किम् । स्वःकामः । समासे किम् । यशः करोति । अनुत्तरपदस्थस्य किम् । परमयशःकारः ।

## अधःशिरसी पदे । ८ । ३ । ४७ ॥

एतयोर्विसर्गस्य सादेशः स्यात्पदशब्दे परे । अधस्पदम् । शिरस्पदम् । समासे इत्येव । अधः पदम् । शिरः पदम् । अनुत्तरपदस्थस्येत्येव । परमशिरः पदम् ।

## कस्कादिषु च । ८ । ३ । ४८ ॥

इण्णिण उत्तरस्य विसर्गस्य षः स्यादन्यस्य तु सः । ꣵकꣵपयोरपवादः । कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका । धनुष्कपालम् । आकृतिगणोऽयम् । भास्करः ।

## छन्दसि वाप्राम्रेडितयोः । ८ । ३ । ४९ ॥

विसर्गस्य सो वा स्यात् कुप्वोः प्रशब्दमाम्रेडितं च वर्जयित्वा । अग्ने त्रातर्ऋतस्कविः । गिरिर्न विश्वतस्पृथुः । नेह वसुनः पूर्व्यः पतिः । अप्रेत्यादि किम् । अग्निः प्रविद्वान् । परुषः परुषः ।

## कःकरत्करतिकृधिकृतेष्वनदितेः । ८ । ३ । ५० ॥

विसर्गस्य सः स्यात् । प्रदिवो अयस्कः । यथानो वस्यस-

स्करत् । सुपेशस्करति । इहरास्पृधि । सोम न चार्क मधवत्सुन-स्कृतम् । अनिदितेरिति किम् । यथा नो अदितिः करत् ।

**पञ्चम्याः परावध्यर्थे । ८ । ३ । ५१ ॥**

पञ्चमीविसर्गस्य सः स्यादुपरिभावार्थे परिशब्दे परतः । दिव-स्परि प्रथमं जज्ञे । अध्यर्थे किम् । दिवस्पृथिव्याः पर्योजः ।

**पातौ च बहुलम् । ८ । ३ । ५२ ॥**

पञ्चम्या इत्येव । सूर्यो नो दिवस्पातु ।

**षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु । ८ । ३ । ५३ ॥**

वाचस्पतिं विश्वकर्माणम् । दिवस्पुत्राय सूर्याय । दिव-स्पृष्ठं मन्दमानः । तमसस्पारमस्य । परिवीत इडस्पदे । दिवस्पयो दिधिषाणाः । रायस्पोषं यजमानेषु ।

**इडाया वा । ८ । ३ । ५४ ॥**

पतिपुत्रादिषु परेषु । इडायास्पुत्रः । इडायाः पदे ।

**अपदान्तस्य मूर्द्धन्यः । ८ । ३ । ५५ ॥**

आपादसमाप्तेरधिकारोऽयम् ।

**सहेः साडः सः । ८ । ३ । ५६ ॥**

साड्रूपस्य सहेः सस्य मूर्द्धन्यादेशः स्यात् । तुराषाड् । तुराषाड्भ्याम् ।

**इण्कोरित्यधिकृत्य । ८ । ३ । ५७ ॥**

**नुम्विसर्जनीयशर्व्यवायेऽपि । ८ । ३ । ५८ ॥**

गतेः प्रत्येकं व्यवधानेपीण्कुभ्यां परस्य सस्य मूर्द्धन्यादेशः स्यात् । सर्पींषि । धनूंषि । वा शरीति पक्षे विसर्जनीयः । पिपठीःषु तदभावे रुत्वेन पूर्वस्य षत्वम् । पिपठीष्षु । प्रत्येकमिति व्याख्यानादनेकव्यवधाने षत्वं न । निंस्स्व । निंस्से । नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थम् । व्याख्यानात् । तेनेह न । सुहिन्सु । पुंसु । अतएव न शर्ग्रहणेन गतार्थता ।

**आदेशप्रत्यययोः । ८ । ३ । ५९ ॥**

एकापि षष्ठी विषयभेदाद्भिद्यते । इण्कवर्गाभ्यां परस्यापदान्तस्यादेशः प्रत्ययावयवश्च यः सकारस्तस्य मूर्द्धन्यादेशः स्यात् । सिषेच । सुष्वाप । अग्निषु । वायुषु । कर्तृषु । रामेषु । शक्ष्यति । वक्ष्यति । इन्द्रो मावक्षत् । स देवान् यक्षत् । वचियजिभ्यां लेट् । भ्रक्ष्यति । जक्षुः इत्यादौ षत्वस्यासिद्धत्वेपि कुत्वलब्धगकारात्परत्वेन षत्वम् । इणकोः किम् । रामस्य । आदेशप्रत्यययोः किम् । सुपीः । सुपिसौ । अपदान्तस्य किम् । हरिस्तत्र ।

**शासिवसिघसीनां च । ८ । ३ । ६० ॥**

इणकुभ्यां परस्यैषां सस्य षः स्यात् । शिष्टः । शिष्यात् । अशिषत् । ऊषतुः । ऊषुः । उषितः । जक्षतुः । जक्षुः । इणकोः किम् । शास्ति । वसति । जघास ।

**स्तौतिण्योरेव षण्यभ्यासात् । ८ । ३ । ६१ ॥**

अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यस्य । तुष्टूषति । स्तुनिस्वाप्योरित्युत्वम् । सुष्वापयिषति । सिषाधयिषति । स्तौतिण्योः किम् । सिसिक्षति । उपसर्गात्तु स्यादि-

ष्वभ्यासेनेति षत्वम् । परिषिषिक्षति । परिषिषिक्षति । सुषुप्सति । अभ्यासादित्युक्तेनेह निषेधः । इण् प्रतीषिषति । इक् अधीषिषति ।

**सः स्विदिस्वदिसहीनां च । ८ । ३ । ६२ ॥**

अभ्यासेणः परस्य एषामेषां सस्य स एव न षः णिशि परे । सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति ।

**प्राक् सितादड्व्यवायेपि । ८ । ३ । ६३ ॥**

सेवसितेत्यत्र सितशब्दात्प्राग्ये सुनोत्यादयस्तेषामड्व्यवायेपि षत्वं स्यात् । अभ्यषुणोत् । अभ्यषेणयत् । न्यषेधत् ।

**स्थादिष्वभ्यासेन चाभ्यासस्य । ८ । ३ । ६४ ॥**

प्राक् सितात्स्थादिष्वभ्यासेन व्यवायेपि षत्वं स्यात् एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम् । अभ्यासेन व्यवाये अषोपदेशार्थं वचनम् । अभिषिषेणयिषति । अदन्ताभ्यासार्थं च ॥ अधितष्ठौ । षणि प्रतिषेधार्थं च । अभिसिषिक्षति । स्थादिष्वेवाभ्यासस्येति नियमान्नेह । अभिसुषाव । अभिसुसूषति ।

**उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् । ८ । ३ । ६५ ॥**

उपसर्गस्थान्निमित्तात्परस्य एषां सस्य षः स्यात् । अभिषुणोति । अभिषुवतीत्यादि । उपसर्गात्किम् । दधि सिञ्चति ॥

**सदिरप्रतेः । ८ । ३ । ६६ ॥**

प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यात् । निषीदति । न्यषीदत् ।

स्तन्भेः । ८ । ३ । ६७ ॥

स्तन्भेः सौत्रस्य सस्य षः स्यात् । विष्टभ्नोति । विष्टभ्नाति । व्यष्टभत् । सौत्रस्य किम् । विस्तम्भते । तद्बीजं तु स्तन्भेरिति तवर्गीयोपधपाठ इति माधवः । योगविभाग उत्तरार्थः । किञ्च अप्रतेरिति नानुवर्तते । बाहुप्रतिष्टम्भविवृद्धमन्युः ।

अवाच्चालम्बनाविदूर्ययोः । ८ । ३ । ६८ ॥

अवात् स्तन्भेरेतयोरर्थयोः षः स्यात् । अवष्टभ्नोति । अवष्टभ्नाति । अवतष्टम्भ । आलम्बनाविदूर्ययोः किम् । अवस्तब्धो वृषलः शीतेन ।

वेश्च स्वनो भोजने । ८ । ३ । ६९ ॥

व्यवाभ्यां स्वनतेः षः स्याद्भोजने । विष्वणति मांसम् । सशब्द भुङ्क्ते इत्यर्थः । व्यष्वणत् । विषष्वाण । अवष्वणति । भोजने किम् । विस्वनति मृदङ्गः ।

परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् । ८ । ३ । ७० ॥

परिनिविभ्यः परेषामेषां सस्य षः स्यात् । परिषेवते । न्यषेवत । विषिषेविषते । प्राक्सितादित्यस्य पूर्णोऽवधिः । परिषितः । निषितः । विषितः । परिषयः । निषयः । विषयः । सितसयौ षिञ्प्रकृतिकौ क्ताजन्तौ । प्रत्ययविशिष्टग्रहणं किम् । विसिनोति । परिषीव्यति । स्थादिष्वेवाभ्यासस्येति नियमोऽपि प्राक्सितादेव । परिषिषेव । न्यषीव्यत् । व्यषीव्यत् । परिषहते । न्यषहत । व्यषहत । परिष्करोति । पर्यष्कार्षीत् । व्यस्कार्षीत् । परिष्टौति । व्यष्टौत् । न्यस्तौत् । परिष्वजते । न्यष्वजत । व्यष्वजत ।

## सिवादीनां वाड्व्यवायेऽपि । ८ । ३ । ७१ ॥

परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवाये । तथैवोदाहृतम् । एतदर्थमेवोपसर्गात्सुनोतीत्यत्र सिद्धे स्तुस्वञ्जयोः परिनिवीत्यत्र पुनरुपादानम् ।

## अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु । ८ । ३ । ७२ ॥

एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात् । अनुष्यन्दते । अनुस्यन्दते वा जलम् । अप्राणिषु किम् । अनुस्यन्दते हस्ती । अप्राणिष्विति पर्युदासान्मत्स्योदके अनुष्यन्दते इत्यत्रापि पक्षे षत्वं भवत्येव । प्राणिषु नेत्युक्तौ तु न स्यात् ॥

## वेः स्कन्देरनिष्ठायाम् । ८ । ३ । ७३ ॥

षत्वं वा स्यात् । कृत्येवेदम् । अनिष्ठायामिति पर्युदासात् । विष्कन्ता । विस्कन्ता । निष्ठायां तु विस्कन्नः ।

## परेश्च । ८ । ३ । ७४ ॥

अस्मात्परस्य स्कन्देः सस्य षो वा स्यात् । योगविभागादनिष्ठायामिति न सम्बध्यते । परिष्कन्दति । परिस्कन्दति । परिष्कण्णः । परिस्कन्नः । षत्वपक्षे णत्वम् । न च पदद्वयाश्रयतया बहिरङ्गतया षत्वस्यासिद्धत्वम् । धातूपसर्गयोः कार्यमन्तरङ्गमित्यभ्युपगमात् । पूर्वं धातुरुपसर्गेण युज्यते ततः साधनेनेति भाष्यम् । पूर्वं साधनेनेति मतान्तरे तु न णत्वम् ॥

## परिस्कन्दः प्राच्यभरतेषु । ८ । ३ । ७५ ॥

परिस्कन्द इति पूर्वेण प्राप्तस्य षत्वस्याभावो निपात्यते प्राच्यभरतेषु प्रयोगविषयेषु । प्राच्यभरतेषु किम् । पूर्वेणान्यत्र विकल्पः ।

## स्फुरतिस्फुलत्योर्निर्निविभ्यः । ८ । ३ । ७६ ॥

षत्वं वा स्यात् । निःष्फुरति । निःष्फुलति । निःस्फुरति । निःस्फुलति । निष्फुरति । निष्फुलति । विस्फुलति ॥

## वेः स्कभ्नातेर्नित्यम् । ८ । ३ । ७७ ॥

विष्कभ्नाति । विष्कभ्नोति ।

## इणः षीध्वंलुङ्लिटां धोऽङ्गात् । ७८ ॥

इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य मूर्द्धन्यादेशः स्यात् । च्योषीढ्वम् । प्लोषीढ्वम् । अच्योढ्वम् । ऐधढ्वम् । इङ्भिन्न एव इणिह गृह्यते इति मते तु ऐधिध्वम् । ढधयोर्वस्य मस्य च द्वित्वविकल्पात् षोडश रूपाणि । चकृढ्वे । इण्ग्रहणं कवर्गनिवृत्त्यर्थम् । पक्षीध्वम् । यक्षीध्वम् । षीध्वंलुङ्लिटां किम् । स्तुध्वे । अङ्गात् किम् । वेविषीध्वम् ।

## विभाषेटः । ८ । ३ । ७९ ॥

इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्द्धन्यः स्यात् । अयिषीढ्वम् । अयिषीध्वम् । लविषीढ्वम् । लविषीध्वम् । आयिढ्वम् । आयिध्वम् । लुलुविढ्वे । लुलुविध्वे । इणः किम् । आसिषीध्वम् । अङ्गादिति नानुवर्तते । तेनेहापि विकल्पः । उपादिदीयिढ्वे । उपादिदीयिध्वे ।

## समासेऽङ्गुलेः सङ्गः । ८ । ३ । ८० ॥

अङ्गुलिशब्दात्सङ्गस्य सस्य मूर्द्धन्यः स्यात्समासे । अङ्गुलिषङ्गः । समासे किम् । अङ्गुलेः सङ्गः ।

## भीरोः स्थानम् । ८ । ३ । ८१ ॥

भीरुशब्दात्स्थानस्य मूर्द्धन्यः समासे । भीरुष्ठानम् । असमासे तु भीरोः स्थानम् ॥

**अग्नेः स्तुत्स्तोमसोमाः । ८ । ३ । ८२ ॥**

अग्नेः परेषामेषां सस्य षः स्यात्समासे । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ । समासे किम् । अग्नेः स्तोमः ।

**ज्योतिरायुषः स्तोमः । ८ । ३ । ८३ ॥**

आभ्यां स्तोमस्य मूर्द्धन्यः समासे । ज्योतिःष्टोमः । आयुःष्टोमः । समासे किम् । ज्योतिषः स्तोमः ।

**मातृपितृभ्यां स्वसा । ८ । ३ । ८४ ॥**

आभ्यां परस्य स्वसुः सस्य षत्वं स्यात्समासे । मातृष्वसा । पितृष्वसा । असमासे तु मातुः स्वसा । पितुः स्वसा ।

**मातुःपितुर्भ्यामन्यतरस्याम् । ८ । ३ । ८५ ॥**

आभ्यां स्वसुः सस्य षो वा स्यात्समासे । मातुःष्वसा । मातुः स्वसा । पितुःष्वसा । पितुःस्वसा । विभाषा स्वसृपत्योरित्यलुक् ।

**अभिनिसः स्तनः शब्दसंज्ञायाम् । ८ । ३ । ८६ ॥**

अस्मात् स्तनेः सस्य मूर्द्धन्यः । अभिनिःष्टानो वर्णः । शब्दसंज्ञायां किम् । अभिनिःस्तनति मृदङ्गः ।

**उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । ८ । ३ । ८७ ॥**

उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य षः स्याद्यकारेऽचि च परे ॥ निष्यात् । प्रादुःष्यात् । निषन्ति । प्रादुःषन्ति । उपसर्गप्रादुर्भ्यां किम् । दधि स्यात् । अस्तिग्रहणं किम् । अनुस्सूयते । अथासत्यप्यस्तिग्रहणे सकारं प्रत्येवोपसर्गत्वमाश्रीयते । प्रादुःशब्दस्य तु कृभ्वस्तिष्वेव प्रयोग इत्यप्रसङ्गः । तथाप्येतत्प्रत्युदाहर्तव्यम् ।

अनु सूते इत्यनुसूः । सत्सूद्विषेति क्विप् । अनुस्वः अपत्यं आनुसेयः । चतुष्पाद्भ्यो ढञ् । ढेलोपोऽकद्र्वा इत्यूकारलोपः । यच्परः किम् । अभिस्तः ॥

## सुविनिर्दुर्भ्यः सुपिसूतिसमाः । ८ । ३ । ८८ ॥

एभ्यः सुप्यादेः सस्य षः स्यात् । सुषुप्तः । पूर्वं धातुरुपसर्गेण युज्यते । किति लिटि परत्वात्सम्प्रसारणे षत्वे च कृते द्वित्वम् । पूर्वत्रासिद्धीयमद्विर्वचने । सुषुषुपतुः । सुषुषुपुः । अकिति तु द्वित्वेऽभ्यासस्य सम्प्रसारणम् । षत्वस्यासिद्धत्वात्ततः पूर्वं हलादिः शेषः । नित्यत्वाच्च ततः सुपि रूपाभावान्न षः । सुसुष्वाप । सुतीति स्वरूपग्रहणम् । सुषूतिः । सुषमम् ।

## निनदीभ्यां स्नातेः कौशले । ८ । ३ । ८९ ॥

आभ्यां स्नातेः सस्य षः स्यात्कौशले गम्ये । निष्णातः शास्त्रेषु । नदीष्णः । सुपीति योगविभागात्कः । कौशले किम् । नद्यां स्नातः नदीस्नातः ।

## सूत्रं प्रतिष्णातम् । ८ । ३ । ९० ॥

प्रतेः स्नातेः षत्वम् । प्रतिष्णातं सूत्रम् । शुद्धमित्यर्थः । अन्यत्र प्रतिस्नातम् ।

## कपिष्ठलो गोत्रे । ८ । ३ । ९१ ॥

कपिष्ठलो नाम यस्य कापिष्ठलिः पुत्रः । गोत्रे किम् । कपीनां स्थलं कपिस्थलम् ।

## प्रष्ठोऽग्रगामिनि । ८ । ३ । ९२ ॥

प्रतिष्ठत इति प्रष्ठो गौः । अग्रतो गच्छतीत्यर्थः अग्रेति किम् । प्रस्थः ।

**वृक्षासनयोर्विष्टरः । ८ । ३ । ९३ ॥**

अनयोर्विपूर्वस्य स्तः षत्वं निपात्यते । विष्टरो वृक्ष आसनं च । वृक्षेति किम् । वाक्यस्य विस्तरः ।

**छन्दोनाम्नि च । ८ । ३ । ९४ ॥**

विपूर्वात् स्तृणातेर्घञन्तस्य सस्य षत्वं स्यात् छन्दोनाम्नि । विष्टारपङ्क्तिश्छन्दः । विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे छन्दो नाम्नि चेति घञ् । ततः कर्मधारयः । छन्दोनाम्नि किम् । पटस्य विस्तरः ।

**गवियुधिभ्यां स्थिरः । ८ । ३ । ९५ ॥**

आभ्यां स्थिरस्य सस्य षः स्यात् । गविष्ठिरः । अत एव गवीति वचनादेवालुक् । युधिष्ठिरः ।

**विकुशमिपरिभ्यः स्थलम् । ८ । ३ । ९६ ॥**

एभ्यः स्थलस्य सस्य षः स्यात् । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् ।

**अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशंक्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः । ८ । ३ । ९७ ॥**

स्थ इति कप्रत्ययान्तस्यानुकरणं षष्ठ्यर्थे प्रथमा । तेन भूमिस्थितं गोस्थानमित्यादौ न । एभ्यः स्थस्य सस्य षत्वं स्यात् । अम्बष्ठः । आम्बष्ठः । गोष्ठः । भूमिष्ठः । सव्यष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुष्ठः । शंकुष्ठः । अङ्गुष्ठः । मञ्जिष्ठः । पुञ्जिष्ठः ।

परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठः ॥ स्थस्थास्थिन्स्थॄणामिति वक्तव्यम् ॥ * ॥ स्थाशब्दः क्विबन्तः । ईत्वे वकारप्रतिषेध इति वचनात्प्रत्ययलक्षणेनेत्वं न भवति । स्थिनितीन् प्रत्ययान्तः स्थॄशब्द ऋप्रत्ययान्तः । सव्येष्ठाः । परमेष्ठी । सव्येष्ठा सारथिरिति ।

## सुषामादिषु च । ८ । ३ । ९८ ॥

सस्य मूर्द्धन्यः । शोभनं साम यस्य सुषामा । सुषन्धिः ।

## एति संज्ञायामगात् । ८ । ३ । ९९ ॥

सस्य मूर्द्धन्यः । हरिषेणः । एति किम् । हरिसक्थः । संज्ञायां किम् । पृथुसेनः । अगकारात्किम् । विष्वक्सेनः । इणकोरित्येव । सर्वसेनः ।

## नक्षत्राद्वा । ८ । ३ । १०० ॥

एतिसंज्ञायामगकारान्मूर्द्धन्यो वा । रोहिणीसेनः । रोहिणीषेणः । अगकारात्किम् । शतभिषक्सेनः । आकृतिगणोऽयम् ।

## ह्रस्वात्तादौ तद्धिते । ८ । ३ । १०१ ॥

ह्रस्वादिणः परस्य सस्य षः स्यात्तादौ तद्धिते । सर्पिष्टमम् । यजुष्टमम् । ह्रस्वात्किम् । गीस्तरा । तादौ किम् । सर्पिःसाद्भवति । तद्धिते किम् । सर्पिस्तरति ॥ तिङन्तस्य प्रतिषेधो वक्तव्यः ॥ * ॥ भिन्द्युस्तराम् ।

## निसस्तपतावनासेवने । ८ । ३ । १०२ ॥

षः स्यात् । आसेवनं पौनःपुन्यम् । ततोऽन्यस्मिन्विषये । निष्टपति । निष्टप्तं रक्षो निष्टप्ता अरातयः । अनासेवने किम् । निस्तपति । पुनःपुनस्तपतीत्यर्थः ।

## युष्मत्तत्ततक्षुःष्वन्तः पादम् । ८ । ३ । १०३ ॥

पादमध्यस्थस्य सस्य मूर्द्धन्यः स्यात्तकारादिष्वेषु परेषु । युष्मदादेशाः त्वंत्वातेतवाः । त्रिभिष्ट्वं देव सवितः । तेभिष्ट्वा । अभिष्टे । अप्स्वग्नेस्वधिष्टव । अग्निष्टद्विश्वम् । द्यावा पृथिवी निष्टतक्षुः । अन्तः पादं किम् । तदग्निस्तदर्यमा यन्म आत्मनो मिन्दाभू दग्नि-स्तत्पुनराहाजातवेदा विचर्षणिः । अचाग्निरिति पूर्वपादस्यान्तो न तु मध्यः ।

## यजुष्येकेषाम् । ८ । ३ । १०४ ॥

युष्मत्ततक्षुःषु परतः सस्य मूर्द्धन्यो वा । अर्चिभिष्ट्वम् । अग्निष्टेयम् । अर्चिभिष्टतक्षुः । पच्चोऽर्चिभिस्त्वमित्यादि ।

## स्तुतस्तोमयोश्छन्दसि । ८ । ३ । १०५ ॥

एकेषामिति वर्तते । स्तुतस्तोमशब्दयोः सस्य मूर्द्धन्यः । नृभिष्टुतस्य नृभिः स्तुतस्य । गोष्टोमम् । गोस्तोमम् । पूर्वपदादि-त्येव सिद्धे प्रपञ्चार्थमिदम् । पूर्वं पदं पूर्वपदमिति हि सामान्येन तचाश्रीयते । न तु समासावयव एव ।

## पूर्वपदात् । ८ । ३ । १०६ ॥

एकेषां छन्दसीति वर्तते । पूर्वपदस्थान्निमित्तात्परस्य षो वा । यदिन्द्राग्नी दिविष्ठः । युवं हि स्थः स्वर्पती ।

## सुञः । ८ । ३ । १०७ ॥

छन्दसीति वर्तते । सुञिति निपातो गृह्यते । पूर्वपदस्था-न्निमित्तादुत्तरस्य सुञः सस्य षः । ऊर्ध्वऊषुणः । अभीषुणः । इकः सुञीति दीर्घः । नश्च धातुस्थोरुषुभ्य इति णत्वम् ।

**सनोतेरनः । ८ । ३ । १०८ ॥**

अनकारान्तसनोतेरिराकुभ्यां परस्य सस्य षश्छन्दसि । गोषा इन्दो नृषा असि । अनसनेति विट् । विड्वनोरित्यात्वम् । अनः किम् । गोसनिम् । छन्दसि वनसनरक्षिमथामितीन्प्रत्ययः । सिसनिषतेरप्रत्ययः । सिसनीः ।

**सहेः पृतनर्ताभ्यां च । ८ । ३ । १०९ ॥**

पृतनाषाहम् । ऋताषाहम् । चात् ऋतीषाहम् ।

**न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ।८।३।११०॥**

रेफपरस्य सकारस्य सृप्यादीनां सवनादीनां च मूर्द्धन्यो न स्यात् ॥ पूर्वपदादिति प्राप्तः प्रतिषिध्यते इति वृत्तिभूयोऽभिप्रायः । तेन शासिवसीति प्राप्तमपि न । विस्रब्धं कथयति । उस्रो रश्मिः । उस्रा गौः । स्फायितञ्चीत्यादिना वसेरक् । विसृपः । विसर्जनम् । दिवि स्पृशि । निस्पृहः । सवने सवने । सूते सूते ।

**सात्पदाद्योः । ८ । ३ । १११ ॥**

सस्य षत्वं न स्यात् , अग्निसात् । दधि सिञ्चति ।

**सिचो यङि । ८ । ३ । ११२ ॥**

सिचः सस्य षो न स्याद्यङि ॥ निसेसिच्यते । यङि किम् । अभिषिषिक्षति ।

**सेधतेर्गतौ । ८ । ३ । ११३ ॥**

गत्यर्थस्य सेधतेः षत्वं न स्यात् । गङ्गां विसेधति । गतौ किम् । निषेधति । निषिषेध ।

**प्रतिस्तब्धनिस्तब्धौ च । ८ । ३ । ११४ ॥**

अत्र षत्वं न स्यात् ।

**सोढः । ८ । ३ । ११५ ॥**

सोढ़रूपस्य सहेः सस्य षत्वं न स्यात् ॥ परिसोढा ।

**स्तम्भुसिवुसहां चङि । ८ । ३ । ११६ ॥**

उपसर्गादिति वक्तव्यम् ॥ * ॥ उपसर्गनिमित्तादेषां सस्य षो न स्याच्चङि । अवातस्तम्भत् । पर्यसीषिवत् । न्यसीषहत । अभ्यासात्प्राप्तेर्न प्रतिषेधः ।

**सुनोतेः स्यसनोः । ८ । ३ । ११७ ॥**

स्ये सनि च परे सुञः षो न स्यात् । विसोष्यति । अभिसुसूषतेरप्रत्ययः । अभिसुसूः ।

**सदेः परस्य लिटि । ८ । ३ । ११८ ॥**

सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि । निषसाद ॥ स्वञ्जेरुपसंख्यानम् ॥ * ॥ परिषस्वजे । परिषस्वञ्जे ।

**निव्यभिभ्योऽड्व्यवाये वा छन्दसि । ८ । ३ । ११९ ॥**

सस्य मूर्द्धन्यः । न्यषीदत् । न्यसीदत् । व्यस्तौत् । व्यष्टौत् । अभ्यष्टौत् । अभ्यस्तौत् ।

इति दीपिकायामष्टमस्य तृतीयः पादः ।



# अथ अष्टमाऽध्यायस्य चतुर्थः पादः ।



## रषाभ्यां नो णः समानपदे । ८ । ४ । १ ॥

एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात् ॥ आस्तीर्णम् । विशीर्णम् । कुष्णाति । पुष्णाति । पूष्णः । पूष्णा । पूर्वस्मादपि विधौ स्थानिवद्भाव इति पक्षे तु अड्व्यवाय इत्येवात्र णत्वम् । पूर्वत्रासिद्धीये न स्थानिवदिति त्विह नास्ति । तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति निषेधात् । षग्रहणमुत्तरार्थम् । ष्टुत्वेनैव सिद्धेः । समानपदे किम् । अग्निर्नयति रामनाम । ऋवर्णान्नस्य णत्वं वाच्यम् ॥ * ॥ मातृणाम् । अथवा क्षुभ्नादिषु नृमनतृप्नोति ग्रहणं ज्ञापयति । ऋवर्णादपि णत्वं भवतीति ।

## अट्कुप्वाङ्नुम्व्यवायेऽपि । ८ । ४ । २ ॥

अट् कवर्ग पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेपि रषाभ्यां परस्य नस्य णः स्यात्समानपदे ॥ करणम् । हरणम् । किरिणा । गुरुणा । अर्हेण । अर्केण । मूर्खेण । वर्गेण । अर्घेण । दर्पेण । रेफेण । दर्भेण । रामेण । पर्याणद्धम् । पदव्यवायेपीति निषेधं बाधितुमाङ्ग्रहणम् । बृंहणम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थम् । तृंहणम् । नेह । प्रेन्वनम् । तच्चाकर्तुं शक्यम् । अयोगवाहानामट्सूपदेशस्योक्तत्वात् । अथेह कस्मान्न भवति । आदर्शेन । न चाडादिभिरेव व्यवाये इति नियमः । अप्राप्तविधित्वात् । सत्यम् । योगविभागोत्र बोध्यः । व्यवायेपीत्येको

योगो विध्यर्थः । अट्कुप्वाङ्नुम् इत्यन्यो नियमार्थः । छान्दसो भिसो लुक् ।

**पूर्वपदात्संज्ञायामगः । ८ । ४ । ३ ॥**

पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्सञ्ज्ञायां न तु गकारव्यवधाने ॥ द्रुरिव नासिकाऽस्य द्रुणसः । खरणसः । सञ्ज्ञायां किम् । चर्मनासिकः । अगः किम् । ऋचामयनं ऋगयनम् । अयन-गयनादिभ्य इति निपातनाण्णत्वाभावमाश्रित्यागः इति प्रत्याख्यानं भाष्ये ।

**वनं पुरगामिश्रकासिध्रकासारिकाकोटरा-ग्रेभ्यः । ८ । ४ । ४ ॥**

वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं न त्वन्येभ्यः । इह कोटरान्तानां पञ्चानां कृतदीर्घाणां निर्देशो नियमार्थः । अग्रेशब्दस्य तु विध्यर्थः । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । सारि-कावणम् । कोटरावणम् । एभ्य एवेति किम् । असिपत्त्रवनम् । वन-स्याग्रे अग्रेवणम् । राजदन्तादिषु निपातनात्सप्तम्या अलुक् । प्राति-पदिकार्थमात्रे प्रथमा ।

**प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्यो-ऽसंज्ञायामपि । ८ । ४ । ५ ॥**

एभ्यो वनस्य णत्वं स्यात् । दूर्वावनम् । दूर्वावणम् । शिरी-षवनम् । शिरीषवणम् । द्व्यच्त्र्यज्भ्यामेव । नेह । देवदारुवनम् ॥ इरिकादिभ्यः प्रतिषेधो वक्तव्यः ॥ * ॥ इरिकावनम् । मिरिकावनम् । फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः ।

आपथ्यः फलपाकान्ता लता गुल्माश्च वीरुधः ॥ इति ।
यद्यपि वृक्षवनस्पत्योर्भेदस्तथापीहाभेदेन ग्रहणं द्रष्टव्यम् ॥

**अन्होऽदन्तात् । ८ । ४ । ६ ॥**

अदन्तपूर्वपदस्थाद्रेफात्परस्यान्हो नस्य णः स्यात् ॥ सर्वाराह्णः। पूर्वाराह्णः । अह्नोऽह्न एतेभ्य इत्यन्हादेशः । टच् समासान्तः । अद-न्तात्किम् । निरन्हः । अदन्तादिति तपरकरणान्नेह । परागतमहः परान्हः । दीर्घान्ही प्रावृडित्यत्र तु क्षुभ्नादित्वाण्णत्वं न । एवं चैतदर्थमन्ह इत्यदन्तानुकरणनिर्देशो न कर्तव्यः । प्रातिपदिकान्तेति णत्ववारणाय क्षुभ्नादिपाठस्यावश्यकत्वात् ॥

**वाहनमाहितात् । ८ । ४ । ७ ॥**

आरोप्य यदुह्यते तद्वाचिस्थान्निमित्तात्परस्य वाहननकारस्य णत्वं स्यात् ॥ इक्षुवाहणम् । आहितात्किम् । इन्द्रवाहनम् । इन्द्र स्वामिकं वाहनमित्यर्थः । वहतेर्ल्युटि वृद्धिरिहैव सूत्रे निपातनात् ॥

**पानं देशे । ८ । ४ । ८ ॥**

पूर्वपदस्थान्निमित्तात्परस्य णत्वं स्याद्देशे गम्ये । क्षीरं पानं येषां ते क्षीरपाणाः उशीनराः । सुरापाणाः प्राच्याः । पीयत इति पानम् । कर्मणि ल्युट् । देशे किम् । दाक्षीणां पानं दाक्षिपानम् ।

**वा भावकरणयोः । ८ । ४ । ९ ॥**

पानस्येत्येव । क्षीरपाणम् । क्षीरपानम् । गिरिनद्यादीनां वा ॥ गिरिणदी । गिरिनदी । चक्रणितम्बा । चक्रनितम्बा ।

**प्रातिपदिकान्तनुम्विभक्तिषु च । ८ । ४ । १० ॥**

पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा स्यात् ॥ प्रातिपदिकान्ते माषवापिणौ । नुमि । व्रीहिवापाणि । विभक्तौ । माषवापेण । पक्षे माषवापिनावित्यादि । उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वम् । नेह । गर्गाणां भगिनी गर्गभगिनी । अत एव नुम्ग्रहणं कृतम् । अङ्गस्य नुम्विधानात्तद्भक्तो हि नुम् । न तूत्तरपदस्य । किन्तु प्रङ्खिणवन्नित्यादौ ङ्खिवेर्नुमो णत्वार्थमपि नुम्ग्रहणम् । प्रेन्वनमित्यादौ तु क्षुभ्नादित्वान्न । युवादेर्न । रम्ययूना । परिपक्वानि ॥

## एकाजुत्तरपदे णः । ८ । ४ । ११ ॥

एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यात् ॥ आरम्भसामर्थ्यान्नित्यत्वे सिद्धे पुनर्णग्रहणं स्पष्टार्थम् । वृत्रहणौ । हरिं मानयतीति हरिमाणी । क्षा . . यतेः क्विपि समासे ङीप् । नुमि । क्षीरपाणि । विभक्तौ । क्षीरपेण । रम्यविणा ।

## कुमति च । ८ । ४ । १२ ।

कवर्गवत्युत्तरपदे प्रागवत् । हरिकामिणौ । हरिकामाणि । हरिकामेण ।

## उपसर्गादसमासेऽपि णोपदेशस्य । ८ । ४ । १३ ॥

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेपि ॥ प्रणमति । प्रणामकः । उपसर्गात्किम् । प्रगतो नायकोऽस्माद्देशः प्रनायको देशः । असमासेपीति किम् । पूर्वपदाधिकारात्समासे एव स्यात् इति तदधिकारनिवृत्तिद्योतनार्थम् । णोपदेशस्य किम् । प्रनर्दति ।

## ह्निनुमीना । ८ । ४ । १४ ॥

उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः स्यात् ॥ प्रहिणोति । प्रहिणुतः । प्रमीणाति । प्रमीणीतः ।

## आनि लोट् । ८ । ४ । १५ ॥

उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्य आनीत्यस्य नस्य णः स्यात् ॥ प्रभवाणि । लोट् किम् । प्रहिमानि ।

## नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च । ८ । ४ । १६ ॥

उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्याद्गदादिषु परेषु ॥ प्रणिगदति । अड्व्यवायेपि प्रण्यगदत् । आडा च । प्रण्यागदत् इत्यादि ।

## शेषे विभाषाऽकखादावषान्त उपदेशे । ८ । ४ । १७ ॥

उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन् धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं वा स्यात् ॥ प्रणिभवति । प्रनिभवति । अकखादौ किम् । प्रनिकरोति । प्रनिखादति । अषान्ते किम् । प्रनिपिनष्टि । उपदेशे किम् । इह प्रतिषेधो यथा स्यात् । पुष पुष्टौ । दिवादिः । प्रनिपोष्यति । प्रनिचखाद । इह च मा भूत् । विश् । प्रणिवेष्टा । इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम् ।

संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ इति ।

## अनितेः । ८ । ४ । १८ ॥

उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । प्राणिति ।

**अन्तः । ८ । ४ । १९ ॥**

पदान्तस्यानितेर्नस्य णत्वं स्यात् उपसर्गस्थान्निमित्तात्परश्चेत् । हे प्राण् ।

**उभौ साभ्यासस्य । ८ । ४ । २० ॥**

साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति । प्राणिणत् । प्राणिणिषति ।

**हन्तेः । ८ । ४ । २१ ॥**

उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णत्वं स्यात् । प्रहण्यात् ।

**अत्पूर्वस्य । ८ । ४ । २२ ॥**

हन्तेरत्पूर्वस्यैव नस्य णत्वं नान्यस्य । प्रघ्नन्ति । वृत्रघ्नः । योगविभागसामर्थ्यादनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायं बाधित्वा एकाजुत्तरेति णत्वमपि निवर्त्यते । यत्तु वृत्रघ्न इत्यादौ वैकल्पिकं णत्वं माधवेनोक्तम् । तद्भाष्यवार्तिकविरुद्धम् । तपरकरणं किम् । प्राघानि ।

**वमोर्वा । ८ । ४ । २३ ॥**

उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परतः । प्रहण्मि । प्रहन्मि । प्रहन्वः । प्रहण्वः ।

**अन्तरदेशे । ८ । ४ । २४ ॥**

अन्तः शब्दाद्धन्तेर्नस्य णः स्यात् । अन्तर्हणनम् । देशे तु

अन्तर्हननो देशः । अत्पूर्वस्येत्येव । अन्तर्घ्नन्ति । तपरः किम् । अन्तरघानि ।

## अयनं च । ८ । ४ । २५ ॥

अयननस्य णो ऽन्तःशब्दात्परस्य ॥ अन्तरयणम् । अदेशे इत्येव । अन्तरयनो देशः ।

## छन्दस्यृदवग्रहात् । ८ । ४ । २६ ॥

ऋकारान्तादवग्रहात्परस्य नस्य णः । नृमणाः । पितृयाणम् ।

## नश्च धातुस्थोरुषुभ्यः । ८ । ४ । २७ ॥

छन्दसीति वर्तते । धातुस्थात् । अग्ने रक्षाणः । शिक्षाणो अस्मिन् उरुणस्कृधि । अभीषुणः । मोषुणः । उपसर्गादनोत्पर इति सूत्रं भंक्त्वा भाष्यकार आह ।

## उपसर्गाद्बहुलम् । ८ । ४ । २८ ॥

उपसर्गस्थान्निमित्तात्परस्य नसो नस्य णः स्याद्बहुलम् । प्रणो नय । प्रणसः । अङ् नासिकायाः । उपसर्गाच्चेत्ययं नसादेशः ॥ न च भवति । प्रनो मुञ्चतम् । प्रनः पूषा । उपसर्गग्रहणं प्रादुपलक्षणम् । इतः प्रभृति छन्दसीति निवृत्तम् ।

## कृत्यचः । ८ । ४ । २९ ॥

उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यात् ॥ प्रयाणीयम् । अचः किम् । प्रमग्नः ॥ निर्विण्णस्योपसंख्यानम् ॥ * ॥ अचः परत्वाभावान्नकारेण व्यवधानाच्चाप्राप्ते वचनम् । परस्य णत्वम् । पूर्वस्य ष्टुत्वम् । निर्विण्णः ।

**णेर्विभाषा । ८ । ४ । ३० ॥**

उपसर्गस्थान्निमित्तात्परस्य ण्यन्ताद्विहितो यः कृत्तत्स्थस्य नस्य णो वा स्यात् । प्रयापणीयम् । प्रयापनीयम् । विहितविशेषणं किम् । यका व्यवधाने यथा स्यात् । प्रयाप्यमाणं पश्य ।

**हलश्चेजुपधात् । ८ । ४ । ३१ ॥**

सर्वस्येजुपधस्य हलन्तत्वादिह हल्ग्रहणमादिविशेषणम् । हलादेरिजुपधात्कृन्नस्याचः परस्य णो वा स्यात् ॥ प्रकोपणीयम् । प्रकोपनीयम् । कृत्यचः इति नित्ये प्राप्ते विकल्पोऽयम् । हलः किम् । प्रोहणीयम् । इजुपधात्किम् । प्रवपणीयम् । अचः । किम् प्रभुग्नः ।

**इजादेः सनुमः । ८ । ४ । ३२ ॥ ॥**

सनुमश्चेद्भवति इजादेर्हलन्ताद्विहितो यः कृत्तत्स्थस्यैव ॥ प्रेङ्खणीयम् । यदि तु विहितविशेषणं न व्याख्यायेत तर्हि नियमार्थता न लभ्येत णिज्लोपे कृते हलन्तात्परत्वेन णेर्विभाषेति विकल्पं बाधितुं विधेः सम्भवात् ॥ इजादेः किम् । मगि सर्पणे । प्रमङ्गनीयम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थम् । अट्कुप्वाङिति सूत्रेऽप्येवम् । तेनेह न । प्रेन्वनम् । इह तु स्यादेव । प्राम्भणम् ।

**वा निंसनिक्षनिन्दाम् । ८ । ४ । ३३ ॥**

एषां नस्य णो वा स्यात्कृति परे ॥ प्रणिंसनम् । प्रनिंसनम् । प्रणिक्षणम् । प्रनिक्षणम् । प्रणिन्दनम् । प्रनिन्दनम् । णोपदेशत्वादेषां नित्ये प्राप्ते विकल्पार्थमिदम् ।

**न भाभूपूकमिगमिप्यायीवेपाम् । ८ । ४ । ३५ ॥**

एभ्यः कृत्स्थस्य णो न । प्रभानम् । प्रभवनम् । प्रपवनम् । पूञ एवेह ग्रहणमिष्यते । पूङस्तु प्रपवणम् । कमस्य प्रकमनम् । प्रगमनम् । प्रप्यायनम् । प्रवेपनम् ॥ ण्यन्तभादीनां चोपसंख्यानम् ॥ * ॥ प्रभापनम् ॥

## षात्पदान्तात् । ८ । ४ । ३५ ॥

नस्य णो न । निष्पानम् । सर्पिष्पानम् । षात्किम् । निर्णयः । पदान्तात्किम् । मुष्णाति । पदे अन्तः पदान्तोऽयमिति सप्तमीसमासोऽयम् । तेनेह । न । सुसर्पिष्केण ।

## नशेः षान्तस्य । ८ । ४ । ३६ ॥

णत्वं न स्यात् । प्रनष्टः । षान्तस्य किम् । प्रणश्यति । अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम् । प्रनङ्क्ष्यति ।

## पदान्तस्य । ८ । ४ । ३७ ॥

पदान्तस्य नस्य णत्वं न स्यात् ॥ रामान् ।

## पदव्यवायेऽपि । ८ । ४ । ३८ ॥

पदेन व्यवधाने णत्वं न स्यात् ॥ माषकुम्भवापेन । चतुरङ्गयोगेन ॥ अतद्धिते इति वाच्यम् ॥ * ॥ आर्द्रगोमयेण । शुष्कगोमयेण ।

## क्षुभ्नादिषु च । ८ । ४ । ३९ ॥

एषु णत्वं न स्यात् । क्षुभ्नाति । क्षुभ्नीतः । क्षुभ्नन्ति । नरीनृत्यते । क्षुभ्नादिराकृतिगणः ।

## स्तोः श्चुना श्चुः । ८ । ४ । ४० ॥

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । हरिश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ॥

ष्टुना ष्टुः । ८ । ४ । ४१ ॥

स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ।

न पदान्ताट्टोरनाम् । ८ । ४ । ४२ ॥

पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात् ॥ षट् सन्तः । षट् ते । पदान्तात्किम् । ईट्टे । टोः किम् । सर्पिष्टमम् ॥ अनाम्नवतिनगरीणामिति वाच्यम् ॥ * ॥ षण्णाम् । यरोऽनुनासिक इति विकल्पं बाधित्वा प्रत्यये नित्यमिति वचनान्नित्यमनुनासिकः । षण्णगर्यः ।

तोः षि । ८ । ४ । ४३ ॥

तवर्गस्य षकारे परे न ष्टुत्वम् । सन्षष्ठः ॥

शात् । ८ । ४ । ४४ ॥

शात्परस्य तवर्गस्य चुत्वं न स्यात् । विश्नः । प्रश्नः ।

यरोऽनुनासिकेऽनुनासिको वा । ८ । ४ । ४५ ॥

पदान्तग्रहणमनुवर्तते । यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् ॥ एतन्मुरारिः । एतद्मुरारिः । स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते । चतुर्मुखः । पदान्तस्य किम् । क्षुभ्नाति ॥ प्रत्यये भाषायां नित्यम् ॥ * ॥ तन्मात्रम् । चिन्मयम् । कथं तर्हि मदोदग्राः ककुद्मन्त इति । यवादिगणे दकारनिपातनात् ।

## अचो रहाभ्यां द्वे । ८ । ४ । ४६ ॥

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः ॥ हर्य्यनुभवः । नह्यस्ति ।

## अनचि च । ८ । ४ । ४७ ॥

अचः परस्य यरो द्वे वा स्तो न त्वचि ॥ दध्यत्र । मध्वत्र । वाक्क् । वाक् ॥ यणो मयो द्वे वाच्ये ॥ * ॥ यण इति पञ्चमी मय इति षष्ठीति पक्षे तवल्क्कारः ॥

द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि ।
तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम् ॥

मय इति पञ्चमी यण इति षष्ठीति पक्षे । सुध्य्युपास्यः । तदिह धकारयकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि । एकधमेकयम् । द्विधं द्वियम् । द्विधमेकयम् । एकधं द्वियम् ॥ शरः खयः ॥ * ॥ शर इति पञ्चमी खय इति षष्ठीति पक्षे स्थ्थाली । स्थाली । खय इति पञ्चमी शर इति षष्ठीति पक्षे वत्स्सरः । क्षीरम् । अप्स्सराः ।

## नादिन्याक्रोशे पुत्रस्य । ८ । ४ । ४८ ॥

पुत्रशब्दस्य न द्वे स्त आदिनि परे आक्रोशे गम्ये ॥ पुत्रादिनी त्वमसि पापे । आक्रोशे किम् । तत्त्वकथने द्विर्वचनं भवत्येव । पुत्त्रादिनी सर्पिणी ॥ तत्परे च ॥ * ॥ पुत्रपुत्रादिनी त्वमसि पापे ॥ वा हतजग्धयोः ॥ * ॥ पुत्रहती । पुत्त्रहती । पुत्रजग्धी । पुत्त्रजग्धी । चयो द्वितीयाः शरि पौष्करसादेः ॥ * ॥ वथ्साः । अफ्सराः ॥

## शरोऽचि । ८ । ४ । ४९ ॥

अचि परे शरो न द्वे स्तः । चतुर्षु ।

**त्रिप्रभृतिषु शाकटायनस्य । ८ । ४ । ५० ॥**

त्र्यादिषु वर्णेषु संयुक्तेषु वा द्वित्वम् ॥ इन्द्रः । इन्न्द्रः । राष्ट्रम् । राष्ट्ट्रम् ।

**सर्वत्र शाकल्यस्य । ८ । ४ । ५१ ॥**

द्वित्वं न । अर्कः । ब्रह्मा ।

**दीर्घादाचार्याणाम् । ८ । ४ । ५२ ॥**

द्वित्वं न । दात्रम् । पात्रम् ॥

**झलां जश् झशि । ८ । ४ । ५३ ॥**

स्पष्टम् । लब्धा । बोद्धा । झशि किम् । दत्तः । धत्तः ।

**अभ्यासे चर्च । ८ । ४ । ५४ ॥**

अभ्यासे झलां चरः स्युर्जशश्च ॥ झशां जशः । खयां तु चरः । तत्रापि प्रकृतिजशां प्रकृतिजशः प्रकृतिचरां प्रकृतिचर इति विवेक आन्तरतम्यात् ॥ चखान । डुढौके । चकार । जघान बभूव । ददौ । बुबुधे ।

**खरि च । ८ । ४ । ५५ ॥**

खरि परे झलां चरः स्युः । भेत्ता । योत्स्यते । रिप्सते । लिप्सते ।

**वाऽवसाने । ८ । ४ । ५६ ॥**

अवसाने झलां चरो वा स्युः । वाक् । वाग् । तत् । तद् ।

## अणोऽप्रगृह्यस्यानुनासिकः। ८। ४। ५७॥

अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात्। दधि। दधिँ। अणः किम्। कर्तृ। अप्रगृह्यस्य किम्। अग्नी।

## अनुस्वारस्य ययि परसवर्णः। ८। ४। ५८॥

स्पष्टम्। अङ्कितः। अञ्चितः। गुण्ठितः। शान्तः। गुम्फितः। कुर्वन्तीत्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे च कृते तस्यासिद्धत्वान्न णत्वम्।

## वा पदान्तस्य। ८। ४। ५९॥

पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यात्॥ त्वङ्करोषि। त्वंकरोषि। सँय्यन्ता। संयन्ता। सँव्वत्सरः। संवत्सरः। यँल्लोकम्। यंल्लोकम्। अत्रानुस्वारस्य पक्षेऽनुनासिका यवलाः।

## तोर्लि। ८। ४। ६०॥

तवर्गस्य लकारे परे परसवर्णः स्यात्॥ तल्लयः। विद्वाँल्लिखति। नकारस्यानुनासिको लकारः।

## उदः स्थास्तम्भोः पूर्वस्य। ८। ४। ६१॥

उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात्॥ आदेः परस्य। उत्थानम्। उत्तम्भनम्। अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकारः। थस्य झरोझरीति पाक्षिको लोपः। लोपाभावपक्षे तु थकारस्यैव श्रवणम्। न तु खरि चेति चर्त्वम्। चर्त्वं प्रति थकारस्यासिद्धत्वात्॥ उत्पूर्वस्कान्देश्छन्दस्युपसंख्यानम्॥ * ॥ उत्कन्दः॥ रोगे च॥ * ॥ उत्कन्दो रोगः।

**झयो होऽन्यतरस्याम् । ८ । ४ । ६२ ॥**

झयः परस्य हस्य वा पूर्वसवर्णः स्यात् ॥ घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थ एवादेशः ॥ वाग्घरिः । वाग्हरिः ।

**शश्छोऽटि । ८ । ४ । ६३ ।**

पदान्ताज्झयः परस्य शस्य छो वा स्यादटि ॥ दस्य श्चुत्वेन जकारे कृते खरिचेति जकारस्य चकारः । तच्छिवः । तच्शिवः ॥ छत्वममीति वाच्यम् ॥ * ॥ तच्छ्लोकेन । अमि किम् । वाक्श्च्योतति ।

**हलो यमां यमि लोपः । ८ । ४ । ६४ ॥**

हलः परस्य यमो लोपः स्याद्वा यमि । आदित्यो देवताऽस्यादित्यं हविः । यमां यमीति यथासंख्यविज्ञानान्नेह माहात्म्यम् ।

**झरो झरि सवर्णे । ८ । ४ । ६५ ॥**

हलः परस्य झरो लोपो वा स्यात्सवर्णे झरि ॥ कृष्णर्द्धिः । द्वित्वाभावे लोपे च सति एकधम् । असति लोपे द्वित्वलोपयोर्वा द्विधम् । असति लोपे द्वित्वे च सति त्रिधम् । वचनान्तरेण पुनर्द्वित्वे चतुर्धम् ॥

**उदात्तादनुदात्तस्य स्वरितः । ८ । ४ । ६६ ॥**

उदात्तात्परस्यानुदात्तस्य स्वरितः स्यात् ॥ अग्निमीळे । अस्यासिद्धत्वाच्छेषनिघातो न । तमीशानासः ।

**नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् । ८ । ४ । ६७ ॥**

उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न स्यात् ॥ गार्ग्यादिमते तु स्यादेव । प्रयत्नाह्नः वोत्स्वाः । क्वाऽभीशवः । उदात्तस्वरितपर इत्येव वक्तव्ये उदात्तग्रहणं शास्त्रान्ते मङ्गलार्थम् । अनेकेषामाचार्याणां सङ्कीर्तनं पूजार्थं भवति ।

**अ अ । ८ । ४ । ६८ ॥**

अकारो विवृतः संवृतः स्यात् । वृक्षः । प्लक्षः । इह शास्त्रकार्यार्थमकारो विवृतः प्रतिज्ञातस्तस्य तथाभूतस्यैव प्रयोगो मा भूदिति संवृतप्रत्यापत्तिरियं क्रियते । दीर्घप्लुतयोश्चानेन विवृतेनाकारेण ग्रहणं नेष्यते । तेन तयोः संवृतो न भवति । किन्तु ह्रस्वानामेव षण्णां विवृतानां ह्रस्वाः षट् संवृता भवन्तीति सर्वमृद्धिः ।

इत्योरम्भट्टेन विरचितायां व्याकरणदीपिकायां वृत्तौ
अष्टमस्याध्यायस्य चतुर्थः पादोऽध्यायश्चाष्टमो ग्रन्थश्चायं शास्त्रञ्चेदं शब्दानुशासनं नाम सम्पूर्णम् ॥

**शुभम्भवतु ॥**



महामंडलशास्त्रप्रकाशक समिति यन्त्रे श्री अम्बिकाचरणचक्रवर्तिद्वारा मुद्रित ।